आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८७

वे० शा० सं० रा० सरस्वतीभूषणकिंजवडेकरोपाह्ववामन-

शास्त्रिभिः कृता

# अग्निहोत्रचन्द्रिका ।

तत्र तत्रोपयुक्ताश्वलायनसूत्रदेवत्रातभाष्यगार्ग्यनारायणवृत्ति-

संकलिता ।

एतत्पुस्तकं

वे० शा० सं० आगाशे इत्युपनामकैः काशीनाथशास्त्रिभिः

संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४२

खिस्ताब्दाः १९२१



मूल्यं रूपकद्वयं चतुर्दश आणकाश्च । ( २॥१४ )

# भूमिका ।

## श्री ६ गुरुचरणारविन्दाभ्यां नमः ।

ॐ नमो यज्ञपुरुषाय ।

—:x:x:—

अथाग्निहोत्रचन्द्रिकाख्यो निबन्धः प्रकाश्यते ।

सरस्वतीभूषणपदविभूषितैः किंजवडेकरोपनामभिर्वामनशास्त्रिभिरयं निबन्धो बहुतरग्र- समवलोकनेन वेदार्थनिर्णायकमीमांसाख्यन्यायस्वरूपस्य सम्यग्विभावनेन याज्ञिकसमा- रनिरीक्षणेन चोपनिबद्ध इति ग्रन्थदर्शनादेव स्फुटं प्रतीयते । यद्यच्चाग्निहोत्रसंबन्धि ार्थजातं क्रियाजातं प्रमाणादि च तत्सर्वमत्र विस्तरेण निरूपितमिति न तदपेक्षितं मिकायां किंचिद्विचारणीयमवशिष्यते तथाऽपि तत्र प्रवृत्तेन किंचिल्लिखनीयमिति ल्यते ।

अग्निहोत्रस्य फलवत्त्वेन काम्यत्वात्कथं नित्यत्वमिति केचिदाक्षिपन्ति, केचिच्च वेदा- ाषु ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वोपदेशान्मिथ्याभूतस्वर्गार्थं यज्ञादौ प्रवृत्तिः कथं ेदिति । तत्र वदामः—

अग्निहोत्रस्य फलवत्त्वेऽपि न नित्यत्वक्षतिः । यतो न नित्यत्वकाम्यत्वयोर्विरोधः । न ानयोरविरोधे नित्यं नैमित्तिकं काम्यं चेति विभागानुपपत्तिः, विभागलक्षणस्य भाजकोपाधीनां परस्परविरोधघटितत्वादिति वाच्यम् । उपाधिभूतानां नित्यत्वादीना- ायं विभागो नोपधेयानाम् । तथा चोपधेयसंकरेऽप्युपाध्यसंकरान्नोक्तानुपपत्तिः । तत्र ात्यत्वमननुष्ठाने प्रत्यवायजनकत्वं ज्ञापकत्वं वा, काम्यत्वं च फलकामनावन्नियोज्यकत्वम् । ाउयश्च यः कार्यं स्वीयत्वेन बुध्यते । कार्यं चापूर्वं, तस्य स्वीयत्वावबोधश्च स्वीय- लसाधनत्वमुखेन । ... स्वीयत्वं च न तदिच्छामात्रात्, अपि तु वचनादिति न फलकाममात्रस्तत्र नियोज्यः, किंतु शास्त्राद्यादृशोऽवगतस्तादृश एवेति न चतुर्थवर्णा- ग्निहोत्रादिप्राप्तिः । नित्यत्वकाम्यत्वयोरविरोधादेव धर्मशास्त्रनिबन्धकारैर्जन्माष्टम्यादि- तानां नित्यत्वं काम्यत्वं चोक्तं संगच्छते ।

ननु—अननुष्ठानस्य प्रत्यवायजनकत्वं कथमवगम्यते उपपद्यते च ? न तावन्नित्य- त्पत्तिविधिभ्यस्तदवगमः, तेषु तथाविधबोधजनकशब्दाभावात् । नापि कर्मसु र्तनामात्राभिधायित्वाद्विषयानुष्ठानस्य पुरुषार्थत्वावगतिपर्यवसायिनस्ते तावन्मात्रे- ाक्ष्युपपत्तेस्तदननुष्ठानस्य प्रत्यवायहेतुत्वमाक्षिपन्ति । क्षीणशक्तित्वात् । यद्यनुप-

प्त्यभावेऽप्यवश्यप्रवृत्तिसिद्ध्यर्थमर्थान्तरं कल्प्यते तर्हि निषिध्यमानक्रियाजन्यप्रत्यवायपरिहारार्थतयैव तद्वर्जनस्य पुरुषार्थत्वसिद्धावपि फलान्तरं कल्प्येत । न चैतत्कस्यचिदपि संमतम् । ननु यथा निषिद्धेष्वर्थवादावगतप्रत्यवायपरिहारार्थतयैव पुरुषार्थत्वं तथा विहितेष्वप्यर्थवादावगताननुष्ठानजन्यप्रत्यवायपरिहारार्थता कस्मान्न स्यात् । मैवम् । नहि सर्वत्राग्निहोत्रादिषु तथाविधार्थवादाः सन्ति । न च ' विहितस्याननुष्ठानान्नरः पतनमृच्छति ' इति स्मृतिरेवार्थवादस्थानीयेति युक्तम् । नहि ग्रन्थान्तरस्थविधीनां ग्रन्थान्तरस्थं वाक्यमर्थवादः संभवति । भवतु वा कथंचिदेकवाक्यतयाऽर्थवादस्तथाऽपि नाभावरूपमननुष्ठानं कार्यान्तरं जनयितुं क्षमम् । ननु ' ज्वरे चैवातिसारे च लङ्घनं परमौषधम् ' इत्यायुर्वेदवचनाद्भोजनाभावरूपं लङ्घनं ज्वरशान्तिं जनयतीति यथाऽवगम्यते तथाऽत्रापि भवितुमर्हति । मैवम् । यतो नात्रापि लङ्घनाज्ज्वरशान्तिः । किं तर्हि ज्वरनाशप्रतिबन्धकभोजनाभावे सति जठरानलपा.. पाकजनिताद्धातुसाम्यादिति मन्तव्यम् । तस्मात्कथमननुष्ठानात्प्रत्यवायोत्पत्तिरुपपद्यत इति चेदुच्यते——अत्र प्रत्यवायो नाम न भावरूपोऽभिप्रेतः किंतु कर्मान्तराधिकारानुत्पत्तिरूपः । तस्य च ...गामधिकारसिद्धिहेतुत्वबोधकेन विधिनैव व्यतिरेकात्सिद्धिः । प्रत्यवायस्य भावरूपत्वे तु नित्यानुष्ठानकाले तदननुष्ठानम्, तत्र प्रवृत्तिप्रतिबन्धकं प्रत्यवायं ज्ञापयतीति वा तदननुष्ठानस्य प्रत्यवायज्ञापकत्वं बोध्यम् । केचित्तु नित्याननुष्ठानस्य प्रत्यवायाजनकत्वेऽपि तत्कालकृतकर्मान्तराणां तज्जनकत्वमित्यपि वदन्तीति न किंचिदनुपपन्नम् ।

किंचापरमपीदं नित्यत्वमवश्यकार्यत्वरूपम् । तच्च फलेन कर्तुरवश्यं योजयितृत्वम् । नन्वेवं फलमनिच्छता न कार्यमिति चेन्न । एतादृशेषु स्थलेषु प्रत्यवायपरिहारस्यैव फलत्वकल्पनात् । तस्य च सर्वं प्रतीष्टत्वात् । ननु विश्वजिन्न्यायेन स्वर्गः किमिति न कल्प्यते ? मुमुक्षुभिरप्रार्थितत्वात् । प्रत्यवायपरिहारस्तु तैरपीष्यत एव । नन्वेवं विश्वजित्यपि प्रत्यवायपरिहार एव फलं स्यात् । तत्रापि ' सर्वान्प्रत्यविशिष्टत्वात् ' इत्युक्तत्वात् । नेत्युच्यते, गौरवात् । तथाहि——प्रत्यवायो हि न तावत्स्वरूपेण फलमपुरुषार्थत्वात् । न च तत्प्रागभावः । तस्य स्वयमेव सिद्धत्वात् । न तद्ध्वंसः । उत्पन्नस्य दुःखस्य स्वयमेव विशरणात् । ततश्च प्रत्यवायावच्छिन्नं तद्धेतुं च निरूप्य तदभावः फलं कल्पयितव्यमिति गौरवम् । सुखस्य तु स्वयमेव साध्यत्वं सुकल्पमिति लाघवम् । तेन सुखरूपे तावत्साध्ये कल्पयितव्ये पशुपुत्रादिसुखविशेषापेक्षयाऽनवच्छिन्नसुखरूपस्य स्वर्गस्य ' सर्वान्प्रत्यविशिष्टत्वात् ' इति विशेष उच्यते । नन्वेवमग्निहोत्रादिष्वपि गौरवात्प्रत्यवायपरिहारः फलं न सिध्येदपि तु लाघवात्स्वर्ग एवेति चेन्न । वैषम्यात् । यत्र निमित्तं श्रूयते तत्रैवावश्यकार्यत्वप्रतीत्या निमित्तवतामधिकारिणामसंकुचितानां सर्वेषां फलसाधन-

त्वस्य श्रुतस्यानुपरोधार्थं मुमुक्षुसाधारणसर्वाधिकारिभिरभिलषितप्रत्यवायपरिहारस्य फलत्वं कल्प्यते नान्यत्रेत्यग्निहोत्रादिविधिषु 'यावज्जीवम्' इत्यादिनिमित्तवाचिपदश्रवणाद्विश्वजिदादिषु तु तदश्रवणान्नोक्तातिप्रसङ्गः ।

इदमेव च नित्यत्वमङ्गसंकोचनिमित्तम् । तथाहि—अवश्यमेवारभेन्सतीदं कृतं फलं साधयतीति प्रतीयते । यदि त्वङ्गलोपे न साधयेदवश्यसाधनत्वं विरुध्येत । नन्वधिकारिणा कृतमवश्यं साधयतीति वक्तव्यमितरथा शूद्रादिकृतमपि साधयेदकाले च । सर्वाङ्गशक्तश्चाधिकारीत्यन्यादृशेन कृतमसाधनमिति । अत्रोच्यते—न तावच्छक्तिरधिकारिविशेषणं श्रूयते । साऽनुष्ठानोपदेशान्यथानुपपत्त्याऽशक्तस्य तदुपदेशासंभवात्कल्प्यते तत्र यावत्प्रयोगविधेना श्रुत्यर्थाद्वाऽनुष्ठाप्यते तच्छक्तिरधिकारिविशेषणम् । सा च स्ववाक्यनिमित्ताविरोध्यङ्गमनुष्ठापयतीति यावन्त्यङ्गानि यदाऽनुष्ठातुं शक्यन्ते तावन्ति तदाऽनुष्ठापयति । न चैवमङ्गोपादानपरित्यागाभ्यां वैरूप्यं प्रसज्यते, यथाशक्ति कुर्यादित्येवंविधैकरूपयैव वचोभङ्ग्योभयसिद्धेः । एतच्च प्रयोगविध्यनुष्ठाप्येष्वङ्गेषूच्यते । यद्धि कुर्यादित्युच्यते तद्यथाशक्त्यपुपपद्यते । यानि तु स्वभावसिद्धानि विध्यन्तरसिद्धानि चोपजीव्यन्ते यथा लोकेऽर्थार्जनादि वेदे कालो विद्याऽग्निश्च तेषां स्वरूपेणैवाधिकारिविशेषणम् । अमावास्यासंबन्धी द्रव्यवान् विद्यावानग्निमानिति ।

एतदुक्तं भवति—अङ्गं हि नाम विधिसंबन्धादुपादीयते निमित्तानुरोधात्त्यज्यते वा, उभयानुग्रहार्थं वा शक्तं प्रत्युपादीयतेऽशक्तं प्रति त्यज्यत इति नान्या गतिरस्ति । तत्रोभयानुग्रहस्तावत्साधीयान् यदि संभवति । संभवश्चोपादेयेष्वङ्गेषु यथाशक्ति व्रीहीन् संपादयेत्, यथाशक्ति वाऽवहन्यादिति । आहवनीयादिस्वरूपं तु नानेन विधिनोपादीयते । यद्यपि होमं प्रत्युपादीयते स्वरूपं तु नोपादीयते । तत्र यद्याहिताग्निराहवनीये जुहुयादितरश्च यत्र क्वचिदिति विधीयेत ततो वैरूप्यं प्रसज्येत । न च यथाशक्ति आहवनीयं संपाद्य जुहुयादिति उभयसाधारण्येन विधानं संभवति । आहवनीयसंपादनस्यात्रार्थादपि व्रीह्यादिसंपादनवद्विधानात् । तेनाऽऽहवनीयमनादृत्यैव होममात्रमनुष्ठाप्येत, आहवनीयवन्तं वाऽधिकृत्याऽऽहवनीये वा होमः । तत्रानादरे सत्याहवनीयविधेरत्यन्तबाधप्रसङ्गात् । यावज्जीवशब्दस्य तदीयजीवनेऽपि कृतार्थत्वेनात्यन्तपीडाभावादग्निमाञ्जीवञ्जुहुयादित्येवमाश्रीयेते । अनेन कालविद्यादयो व्याख्याताः ।

नन्वेवमङ्गान्तरेऽपि किमिति जीवनं नोपसंह्रियते—तच्छक्तिमाञ्जीवन्निति । शक्त्यपेक्षयाऽप्युपसंहारे तेषामत्यन्तविरोधाभावात् । तत्र निमित्तं वाऽङ्गानुरोधेन किंचिद्बाध्यतेऽङ्गानि वा निमित्तानुरोधेनेति चिन्तायां प्रधानवाक्ये श्रुतत्वेन निमित्तं प्रथमं प्रधानमनुरुध्य प्रधानाविरोधेनाङ्गानि संबन्धयति । काम्ये तु निमित्तवाक्यस्य कश्चिद्विरोधो

नास्तीति अङ्गान्यपेक्षितान्युपसंह्रियन्त इति निखिलाङ्गयुक्तस्यैव प्रयोगः । नित्ये तु यथोक्तेन न्यायेन विप्राग्निकालार्षेयवरणपरित्यागेनान्येषामङ्गानां यथाशक्त्युपसंहारः । सोऽयं प्रत्यवायपरिहारोऽधिकारितावच्छेदकावच्छेदेनाभीप्सितत्वान्नित्यः । ततश्च नित्याभीप्सितोपायत्वादप्यग्निहोत्रादीनां नित्यत्वं बोध्यम् ।

ननु मुमुक्षुसाधारण्येनाभीप्सितत्वोपपत्त्यर्थं प्रत्यवायपरिहारस्य फलत्वमुक्तं तेन च मुमुक्षुणाऽपि कर्माण्यनुष्ठेयानीति प्राप्तं तच्च 'त्यजतैव हि तज्ज्ञेयम्' इत्यादिश्रुतिविहित. कर्मसंन्यासेन विरुध्यत इति न । यथा प्राग्बीजावापात्कर्षणं तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिस्तथा 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यादिवचनानुसारेण चेतसः शुद्धौ विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानं ततः कर्मसंन्यास इतिव्यवस्थाङ्गीकारात् । नित्यानां कर्मणां दुरितक्षयद्वारा चित्तशुद्धावुपयोगः ।

किंच 'विहितत्वाच्चाऽऽश्रमकर्मापि' ( ३।४।३२ ) इति शारीरकसूत्रे मोक्षहेतुब्रह्मविद्यासाधनत्वमप्याश्रमकर्मणामवधारितम् । नन्वेवं नित्यानित्यसंयोगविरोधाद्विद्यार्थत्वेन कर्म कुर्वतः प्रत्यवायपरिहाराय नित्यप्रयोगोऽपि पृथक्कर्तव्यः, न चेन्नित्यप्रयोगस्यैवानित्यत्वं स्यादिति चेन्न । यथा स्वर्गार्थोऽग्निहोत्रप्रयोगो नित्यविधेः प्रयोजकत्वं बाधित्वा निविशते, यथा वा 'यदि राजन्यं वैश्यं वा याजयेत स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तत्तस्मै भक्षं प्रयच्छेत्' इति नैमित्तिकः फलचमसप्रयोगो नित्यं सोमप्रयोगं विकृत्य निविशते, काम्यनैमित्तिकाभ्यां नित्यकार्यसिद्धेः 'काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते' इति न्यायात् । यादृशो नित्यः प्रयोगः करणार्थत्वेन विहितस्तादृशस्येतरत्र प्रत्यभिज्ञानाच्च न पुनः प्रयोगापत्तिर्नापि नित्यप्रयोगस्यानित्यतापत्तिरेवमत्रापि ।

ननु कारणस्य कार्याव्यवहितप्राक्क्षणवृत्तित्वावश्यकत्वात्कर्मणां चाऽऽशुविनाशित्वात्कालान्तरभाविफलहेतुत्वमनुपपन्नम् । इति चेदत्र केचित्— श्रुतार्थापत्त्या विनष्टानामेव फलारम्भकत्वं फलारम्भपर्यन्तस्थायित्वं वा कर्मणां कल्प्यमिति । तन्न । अर्थापत्त्या हि तदेव कल्पयितुमुचितं यन्न प्रमाणान्तरेण विरुध्येत । विरुद्धं च सर्वप्रमाणैर्विनष्टस्यासतोऽनारब्धवस्त्वन्तरस्य फलारम्भकत्वम्, एवं स्थायित्वमपि क्षणमात्रवर्तिनः प्रमाणविरुद्धमतोऽपूर्वं व्यापारभूतं यागादेः कल्प्यम् । नचैवं श्रुत्या यागस्य फलहेतुत्वं बोध्यते भवता चापूर्वस्य तदिष्यत इति श्रुतिविरोधः शङ्क्यः । अपूर्वस्य यागशक्तित्वादवान्तरव्यापारत्वाद्वा । नहि शक्त्याऽवान्तरव्यापारेण वा व्यवधिरकारणतामापादयति काष्ठानामिव ज्वालया । नचात्र शक्तिमति व्यापारवति वाऽतीते शक्तेर्व्यापारस्य वाऽवस्थानायोगः शङ्क्यः । नचावश्यं शक्तिमत्येव शक्त्याऽवस्थातव्यमिति नियमः, यतः कार्यानुमेया शक्तिः, सैव

कार्यायालं तत्रैव कल्प्यते । अतो यागशक्तिरात्मन्येव तिष्ठतीति न विरोधः । एतदेवा-वान्तरव्यापाराणां तत्त्वं यत्समभिहितोद्देशप्रवृत्तेन साधनेन तत्सिद्ध्यर्थमन्तरा साध्यमानत्वम्। तस्मादस्त्यपूर्वं फलसाधनस्य कर्मणोऽवान्तरव्यापारभूतमङ्गानां च फलवदुपकारसाधना-नाम् । एषाऽत्र प्रक्रिया—प्रथमं तावत्फलवाक्येन कर्मणः फलसाधनत्वं बोध्यते यागेन स्वर्गं कुर्यादिति । कथं विनश्वरेण फलं कर्तव्यमित्यपेक्षायामपूर्वं कृत्वेत्युच्यते । कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठानप्रकारेणेति । ततः पूर्वापरकालवर्तिभिरङ्गव्यापारैर्विषयी-कृतस्य यागस्यापूर्वसाधनत्वं न स्वरूपेण संभवतीति स्वर्ग[illegible] अपि परिकल्प्यते । दर्श-पूर्णमासयोस्तु पक्षद्वयवर्तिभ्यां समुदायाभ्यां युगपत्फलापूर्वारम्भायोगादेकैकं प्रतिसमु-दायमपूर्वं कल्प्यते । तत्कथंभावापेक्षायामग्न्यन्वाधानाद्यङ्गोपदेशः । ततः पूर्ववदेव पूर्वो-त्तराङ्गसहितेभ्यस्तदुत्पत्तिर्न स्वरूपेण संभवतीति प्रतित्रिकं त्रीणि त्रीण्यपूर्वाणि कल्प्यन्ते । यदि पुनः षड्यागेभ्यः प्रथममेव षडपूर्वाणि कल्प्येरंस्ततोऽपूर्वार्थत्वादङ्गानामङ्गोपकृतेभ्यो यागेभ्योऽपूर्वसिद्ध्यै षडपूर्वाणि कल्प्यानि स्युरिति गौरवम् । तस्मादेकमेव फलापूर्वमुत्पत्त्यपू-र्वाणि तु प्रतिप्रधानं भिद्यन्ते । तथाऽङ्गान्यपि क्रतूपकारकत्वेन स्वीकृतानि क्षणिकत्वान्न स्वरू-पेण संहत्योपकर्तुं शक्नुवन्तीत्यवान्तरव्यापाररूपाण्यपूर्वाणि तावदारभन्ते । ततः सर्वाणि संहत्य प्रधानस्य सामर्थ्योद्बोधनं फलारम्भोन्मुखत्वरूपमनुग्रहं परमोपकाराभिधं जनयन्ति । तत्र त्वयं विभागः—संनिपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव शक्त्यातिशयमादधानानि तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते तद्द्वारेण फलापूर्वे । आरादुप-कारकाणि तु साक्षादेवोत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ । एवं प्रकारभेदे सत्यपि सर्वाण्य-ङ्गानि यागापूर्वनिष्पत्तावनुग्राहकाणि भवन्तीत्येकरूपेणेत्थंभावेन स्वीक्रियन्ते । तस्माद-स्ति कर्मजन्यं फलपर्यन्तस्थायि कर्मावान्तरव्यापारभूतमपूर्वमिति न कर्मणां कालान्तर-भाविफलसाधनत्वानुपपत्तिः ।

वेदान्तिनस्तु—देवताप्रसादादेव स्थायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण । एवमशुभे-नापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धं ततः स्थायिनोऽनिष्टफलप्रसवः । यथा च परमापूर्वे कर्तव्य उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोग एवं प्रधानाराधनेऽङ्गाराधनानामुत्प-त्त्याराधनानां चोपयोगः स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति मन्यन्ते । एवं प्रथमाक्षेपः परिहृतस्तत्प्रसङ्गायातं चान्यदपि निरूपितमिदानीं द्वितीयाक्षेपः परिह्रियते—यद्वेदान्तेषु ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वमुक्तं तस्य नायमभिप्रायः, वञ्चकवाक्यवत्स्व-र्गाद्युद्देशेन यागादिविधायिकानां श्रुतीनामप्रामाण्यमिति । अपि तु जगतः प्रत्यक्षादिप्रमाण-सिद्धत्वात् ‘ नेह नानाऽस्ति, आत्मैवेदं सर्वम्, एकमेवाद्वितीयं ब्रह्म ’ इत्यादिश्रुतिवचनै-स्तदभावस्य च प्रतिपादनात्, प्रमाणानां बलाबलविचारे च स्वार्थे तात्पर्यवत्याः श्रुतेरु-

पचरितार्थत्वायोगात्प्रमाणान्तरबाधकत्वात्प्रत्यक्षादेर्बाध्यत्वं तदपि नात्यन्तं युक्तमिति सांव्य-वहारिकं प्रामाण्यमभ्युपगम्यते न तु शुक्तिरजतादिवत्प्रातिभासिकं निकृष्टम् । तस्माद्ब्रह्मात्मावगतेः प्राक् प्रत्यक्षस्य जगत इव स्वर्गादेर्यज्ञादौ तत्साधनभावस्य च बाधाभावान्न काऽप्यनुपपत्तिः । अत एव भगवत्पादैरध्यासभाष्ये सर्वस्यापि लौकिकवैदिकव्यवहारस्याध्यासमूलत्वमुक्तम्––तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति सर्वं शिवम् ।

बाक्रे इत्युपाह्वो गङ्गाधरभट्टसूनुः
महादेवशर्मा.



# प्रास्ताविकं किंचित् ।

—:x:x:x:—

ॐ भूधरभूजानिर्विजयतेतमाम् ।

अयि श्रुतिस्मृतिपारदृश्वानो विचारचातुरीचतुराः श्रौतस्मार्तकर्मनिष्ठागरिष्ठा विद्वांसः ! विदितचरमेवेदं तत्रभवतां भवतां यद् 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिश्रुतिशासनात् ।

अग्निहोत्रस्यावश्यकर्तव्यता

'कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु' ॥

इति याज्ञवल्क्यस्मृत्यनुज्ञानाच्च प्रत्यधिकारिपुरुषमग्निहोत्रमवश्यकर्तव्यतामाटीकते श्रौतधर्मत्वादिति ।

सोऽयं धर्मस्तत्फलं च प्रत्यक्षतो ज्ञातुं शक्यं न वेति मीमांस्यते । '**साक्षात्कृतधर्माण ऋषयो बभूवुः**' (नि० १ । ५) इत्यादिभिर्यास्कादिवचनैर्धर्मः प्रत्यक्षतो ज्ञातुं शक्यत इति पूर्वपक्षः । धर्मविचारं प्रतिज्ञाय प्रवृत्ता या द्वादशलक्षणी प्राची मीमांसा तया राद्धान्तितत्वाद्धर्मस्तत्फलं च न प्रत्यक्षमित्युत्तरः पक्षः सिद्धान्तभूतः । तथाहि—भगवता जैमिनिना '**अथातो धर्मजिज्ञासा**' (जै० सू० १ । १ । १) इति धर्मविचारं प्रतिज्ञाय तत्प्रमाणपरीक्षार्थं '**तस्य निमित्तपरीष्टिः**' (जै० सू० १ । १ । ३ ।) इति सूत्रं प्रणीयते तेन च धर्मप्रमाणानि परीक्ष्यन्त इति प्रतिज्ञायते । ततश्च प्रमाणान्तराणि पञ्चापि परीक्ष्य केवलं शब्दैकसमधिगम्यत्वं धर्मस्य सिद्धान्तितम् । '**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्**' (जै० सू० । १ । १ । ४ ।) इति सूत्रेण धर्मस्य प्रत्यक्षप्रमाणगम्यता नास्तीति च प्रत्यष्टापि । अस्मिन्विचारे जैमिनिमहर्षिवचः प्रमाणतरम् । आहत्य धर्मविचारार्थमेव प्रवृत्तत्वात् । यास्कादीनां वचस्तु गौणं शब्दनिरुक्त्यर्थं तेषां मुख्यतया

धर्मतत्फलयोरप्रत्यक्षता

प्रवृत्तेः सत्त्वात् । धर्मविचारस्तु तैः प्रसक्तानुप्रसक्ततयाऽऽहृतः । एवं च जैमिनिमहर्षिमतानुसारं न धर्मः प्रत्यक्षोऽत एव तत्फलमपि न प्रत्यक्षमिति निश्चीयते । तेनायमग्निहोत्रादिधर्मः पारलौकिकफलायैवानुष्ठीयते । यत्तु ब्रह्मवर्चसादि तस्य प्रत्यक्षतः फलमनुभूयते तदानुषङ्गिकमिति विज्ञेयम् । यथा फलार्थमाम्रवृक्षो रोप्यते छायागन्धावनूत्पद्येते तथैव पारलौकिकफलार्थमग्निहोत्रादिधर्मोऽनुष्ठीयते छायागन्धवदानुषङ्गिकं ब्रह्मवर्चसादिफलमैहिकं भवन्न निवार्यते । एतदेव श्रीकुमारिलभट्टपादैर्विवृतम्—

**अन्तःकरणवृत्तावादौ ( सांख्याः )**
**वासनायां च चेतसः ( बौद्धाः ) ।**
**पुद्गलेषु च पुण्येषु ( आर्हताः )**
**नृगुणे ( वैशेषिकाः ) अपूर्वजन्मनि**
**( मीमांसकैकदेशिनः प्राभाकराः ) ॥ १ ॥**

सांख्या अन्तःकरणस्य यागानुष्ठानजन्यं वृत्तिविशेषं धर्ममाहुः । बौद्धाश्चेतसो ज्ञानस्य ज्ञानान्तरजन्यां वासनाम् । आर्हतास्तु कार्यारम्भकान्परमाणून्पुद्गलाख्यान् । वैशेषिकास्त्वात्मनो विशेषगुणम् । प्राभाकरास्त्वपूर्वम् । मीमांसकास्त्वलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वं विहितत्वं वा । तथा चोक्तं वार्तिककृद्भिः—

**तस्मात्तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् ।**
**लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥ १ ॥**

ततश्चैतत्सिध्यति धर्मो न लौकिकफलवत्प्रत्यक्ष इति । अयं च फलविचारः काम्यकर्मविषयक एव । नित्यकर्मसु फलं नास्तीति सुप्रथितम् ।

एतस्याग्निहोत्रादेर्धर्मस्याऽऽवश्यकत्वं भगवत्पूज्यपादश्रीशंकराचार्याः '**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्**' ( ब्र० सू० ४ । १ । १६ ) इति सूत्रे बभाषिरे ।

धर्मानुष्ठानविचारः

तथाहि—यन्नित्यं कर्म वैदिकमग्निहोत्रादि तत्तत्कार्यायैव भवति । ज्ञानस्य यत्कार्यं तदेवास्यापि कार्यमित्यर्थः । कुतः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति दानेन' ( बृ० ४।४।२२ ) इत्यादिदर्शनात् । ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात्कार्यैकत्वानुपपत्तिः । नैष दोषः । ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टि-

कार्यदर्शनात् । तद्वत्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः । नन्वनारभ्यो मोक्षः कथमस्य कर्मकार्यत्वमुच्यते । नैष दोषः । आरादुपकारकत्वात्कर्मणः । ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते । अनेन विचारेण भगवत्पूज्यपादैः कर्मणोऽग्निहोत्रादेः परम्परया मोक्षसाधकत्वं प्रतिपाद्यते । अतो मुमुक्षुभिरपि कर्मानुष्ठेयमेव । विद्योत्पत्तौ कर्मणामावश्यकत्वात् । तथा चोक्तं भगवत्पूज्यपादैः—' **सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ' ( ब्र० सू० ३ । ४ । २६ ) इति सूत्रे ' एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्त उत्पत्तौ चापेक्ष्यन्त इति ' इति प्रतिपादयद्भिः । एतेन वेदान्ते कर्मकाण्डं पराक्रियत इति यन्मतं तत्परास्तम् । यतो न वेदान्ते कर्म पराक्रियते प्रत्युत विद्योत्पत्तौ तदपेक्ष्यत इति प्रतिपाद्यते । विद्याफले मोक्षे तदनुपयोग इत्येव तन्मतम् । एवं च कर्मानुष्ठानस्याऽऽवश्यकतायां सिद्धायामधुनातनैः सर्वैर्द्विजैस्तदनुष्ठेयमिति बोधयदानुषङ्गिकमपि किंचित्फलमस्ति तत्प्रतिपाद्यते । तथाहि भो आर्यकुलावतंसा अस्माकमार्याणां प्राचीनत्वं सर्वतो जोघुष्यमाणं यथा वैदिकशब्दैर्गुरुशिष्यपरम्परयाऽध्येष्यमाणैरप्रतिहतं संसिध्यति तथा वैदिकाचरणेनापि सेत्स्यति । ऐतिहासिकदृष्ट्या नायमल्पीयाल्लाँभः । कालेयकालवशात्परिवर्तमानेषु राज्यान्तरेषु केवलं वैदिकशब्दानामाचाराणां च स्वायत्तीकरणात्संरक्षणाच्चास्माभिरार्यत्वं न व्यहन्यत । तेन च तस्मादेव कारणादग्रेऽपि वैदिकशब्दानामाचाराणां च परम्पराविच्छेदो न स्यात्तथा प्रयतितव्यमेवाऽऽर्यत्वरक्षायै । अयि प्रेष्ठा विद्वांसः, ईदृशस्याऽऽचारस्य रक्षणं द्विजैरवश्यमेव विधेयं यतस्तेषां तत्राधिकारः संसाधितो जैमिनिमहर्षिभिः प्राच्यां मीमांसायां षष्ठेऽध्याये प्रथमे पादे—' **अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत' २८ ' निर्देशात्तु पक्षे स्यात्' २९** इत्यादिभिरेकादशभिः सूत्रैः । नन्वन्यैरपि द्विजेतरैरग्निहोत्रादयोऽनुष्ठातुं शक्यन्त इति चेन्न । अविहितत्वात् । तथा चोक्तं भगवत्पूज्यपादैः श्रीशंकराचार्यैः—' **यो हि यं प्रति विधीयते स तस्य धर्मः । न तु यो येन स्वनुष्ठातुं शक्यते । चोदनालक्षणत्वाद्धर्मस्य ।** ' ( ब्र० सू० भा० ३ । ४ । ४० ) एवं चैतत्सिध्यति यद्द्विजैर्मुमुक्षुभिरमुमुक्षुभिश्चावश्यमनुष्ठेयं वैदिकमग्निहोत्रादि कर्मेति ।

एवमस्य धर्मस्यानुष्ठेयत्वे सिद्धे तदनुष्ठानप्रकाराणां बोधका ग्रन्थाः क इति जिज्ञासा भवति । एतावत्कालपर्यन्तं विद्यमानेषु ग्रन्थेषु कल्पसूत्रब्राह्मणग्रन्था मूर्धन्यभूताः । कल्पसूत्रेभ्यो ब्राह्मणग्रन्थाः प्राचीनतमास्तथाऽपि विधिशेषापरपर्यायार्थवादरहितत्वात्सूत्रग्रन्थेष्वेव प्रवृत्तिः सर्वेषाम् । अथाप्यध्ययनपरम्परा ब्राह्मणग्रथानामपि जागर्ति मन्त्रार्थोपयुक्तत्वात्तेषाम् । अनुष्ठानविषये सूत्रग्रन्थास्तानतिशेरते केवलानुष्ठानबोधकत्वात् । सूत्रग्रन्थानां दुरवगाहत्वात्प्रयोगवृत्त्यादयो ग्रन्था निरमीयन्त तैस्तैर्ग्रन्थकृद्भिः । यथा जाग्रत्स्वपि भाष्यवार्तिकेषु काशिकासिद्धान्तकौमुद्यादयो ग्रन्था व्याकरणशास्त्रे प्राणीयन्त धीमद्भिः पण्डितवरेण्यैः । यान्सूत्रग्रन्थान्प्रमाणीकृत्य प्रयोगग्रन्था न्यबध्यन्त विद्वद्वरैस्ते सूत्रग्रन्था इदानीं भारतवर्षे स्वोत्पत्तिस्थाने दुर्लभाः पाश्चात्यदेशे कचित्कचिन्मुद्यन्त इति प्रसक्तानुप्रसक्त्या ज्ञापयितुं दूयते चेतः । एवमासन्पूर्वप्रयोगाः परंतु तत्रापि काश्चन त्रुटयो दरीदृश्यन्ते प्रेक्षावत्प्रवृत्तिविघातिन्यः । ताश्च यथा पूर्वप्रयोगेषु सूत्रानुसारं प्रणीतेष्वपि सूत्राणि यथास्थानं न प्रदर्श्यन्ते । तत्र च पृथक्पृथक्प्रयोगाः ( हौत्रप्रयोगः, आध्वर्यवप्रयोगः, औद्गात्रप्रयोगः ) प्रणीयन्ते तत्समवायेन प्रयोगद्रष्टॄणां वैरस्याय । किंच तत्र सूत्रार्थः प्रयोगमीमांसा च न प्रदर्श्यते । मीमांसया विना प्रयोगशास्त्रापरपर्यायेतिकर्तव्यता न समाप्यते । यत उक्तं श्रीकुमारिलभट्टपादैर्वार्तिके ‘ **इतिकर्तव्यताभागं मीमासा पूरयिष्यति** ’ इति ।

अनुष्ठानबोधकग्रन्थविचारः

तदेतत्सम्यगालोच्य प्रमाणशास्त्रप्रमाणितमतिभिः **किञ्जवडेकरवामनशास्त्रिभिः** पूर्वोक्तत्रुटीर्निराकुर्वद्भिरियं श्रौतधर्मविषयेऽग्निहोत्रचन्द्रिका निरमायि । अत्र परिभाषादिसूत्राणि यथायथं लक्ष्यानुसारं कौमुदीकृद्भिः सूत्राणि यथा प्रविभक्तानि तथा विभज्य यथास्थानं तन्निवेशः कृतः । ततः सूत्रार्थो दर्शितः । मन्त्रार्थोऽपि प्रदर्शितः । प्रतिकर्म मीमांसाऽप्यादृता । मीमांसाशास्त्रं प्रयोगशास्त्रेण न संबध्यत इत्येवाऽऽसीन्मतिरेतावत्कालपर्यन्तं याज्ञिकानां साऽप्येतद्ग्रन्थालोचनतो विहनिष्यते । सूत्रप्रतिकूलाः प्रयोगान्तरगृहीता निर्देशाः परित्यक्ताः । अत्र ग्रन्थेऽग्निहोत्रकुण्डादिप्रतिकृतिदर्शकमादर्शपत्रमारम्भ एव मुद्रितं तेन सर्वजनसुविज्ञेयोऽयं ग्रन्थः स्यात्तथाऽत्राऽऽधानपद्धतिशेषः समीमांसं प्रद-

अग्निहोत्रचन्द्रिकाया अपूर्वता

र्शितः । अथ च कुत्रापि देश एतावत्कालपर्यन्तममुद्रितं **देवत्रातभाष्यं** यथास्थानं न्यवेशि । यच्च श्रौतकर्मनिष्णातैरिष्टैराहिताग्निभिर्गणेशशास्त्रिभिः सप्रेम वर्षत्रयात्प्राक्प्रादायि ग्रन्थकृते । ते च महाभागा वर्षद्वयात्पूर्वं दिवं गतास्तेन चन्द्रिका तद्दृष्टिपथं नायासीत् । किं चात्र ग्रन्थे प्रसक्तानुप्रसक्त्या कल्पसूत्रानुसारमाश्रमविचारादयो विषया अपि न्यबध्यन्त । एवं च चन्द्रिका सर्वसहृदयहृदयान्याह्लादयेदेव । यथा सूर्यप्रकाशप्रकाशितचन्द्रचन्द्रिकाप्रदर्शितो मार्गः सुखेन स्वेष्टग्रामप्रापक एवं कल्पसूत्रसूर्यप्रकाशिताग्निहोत्रचन्द्रिका धर्मपथप्रवर्तिका भवेदिति सुदृढमाशास्महे । प्राय इयं चन्द्रिका सर्वगुणमयी तथाऽपि गच्छतः स्खलनमिति न्यायानुकारो ग्रन्थकृता दुष्परिहरः । तद्विषये विद्वांसो लोकवृत्तज्ञा गुणैकपक्षपातिनः क्षाम्येयुरिति संसूचयामः । तथैव चन्द्रिकाप्रणेतारोऽपि प्रार्थ्यन्ते यत्तैरेवमेव श्रौतविषये ग्रन्थान्प्रणीय जनानां वैदिककर्मण्यादरः संवर्धयितव्यः । प्रकृतिग्रन्थास्तैः प्रणीयेरन् । आनन्दाश्रमस्य व्यवस्थापकैश्च ते संमुद्र्येरंस्तर्हि वैदिकपथानुयायिनो जना महोपकृतिभाजो भवेयुरिति संभावयामः । अत्र विषयान्तरमादृत्यापि सर्वजनोपकृतये सप्रश्रयं संसूच्यन्ते पुण्यपतनस्थानन्दाश्रमसंस्थाया अधिपाः सुगृहीतनामधेयाः श्रीविनायकशर्माण आपटेकुलकमलदिवाकराः । यत्—अयि श्रेष्ठाः, सुविदितमेतच्छ्रीमतां यच्छार्मण्यदेशीयाः ( जर्मन्स् ) कल्पसूत्रब्राह्मणादिग्रन्थान्मुद्रापयन्ति स्वदेशे भारतीयमहर्षिप्रणीतान् । यद्यपि ते महता श्रमेण मुद्रापयन्ति तथाऽपि भारतीयविद्वत्साहाय्याभावात्तैस्तत्कर्म सुव्यवस्थिततया सुशुद्धतया चानुष्ठातुं न पार्यत इति । अतः श्रीमद्भिरवश्यकर्तव्यतामापतत्येतत्कार्यम् । यतोऽत्र तज्ज्ञविद्वत्साहाय्यं सुकरं वैदिकग्रन्थमुद्रापणजं श्रेयोऽपि लभ्येत । किंचैवं दृढं विश्वसिमो यदेतादृशग्रन्थमुद्रापणार्थमेवाऽऽनन्दाश्रमसंस्थाया अवतार इति । तेन च स्वकार्यं निर्वाहितं यथायथमिति प्रमोदोऽपि श्रीमतां चेतसि पदं कुर्यात् । किंच क्रेतृभिरिमे ग्रन्था अल्पमूल्येनैव लभ्येरन् । अतः स्वपरहितसंसाधकमेतत्कार्यं श्रीमद्भिरवश्यमेवोररीकृत्योपकारभरेण नमयितव्या विद्वांस इति संप्रार्थ्य विरमाम इति शम् ।

विद्वज्जनवशंवदः पाठकोपाह्वत्र्यम्बकतनूजनुः

श्रीधरशर्मा पुण्यपत्तनस्थ—दाक्षिणात्यमहाविद्यालय-

( डक्कनकॉलेज ) स्थः

शास्त्राध्यापकः ।

# निवेदनम् ।

श्रीरामदीक्षितानां साहाय्याद्विरचिता मयाऽल्पधिया ।
भवतु मुदे गिरिजापतिपदार्पिता चन्द्रिकाऽग्निहोत्रस्य ॥ १ ॥
जानक्यां रामचन्द्राद्धिगतजनुषो यस्य बन्धुर्वरीयान्
दत्तात्रेयाभिधेयः सकलनिगमवित्सोमयाजी सुशीलः ।
अन्यौ द्वौ शीलविद्याप्रमुखगुणरुचिरौ विष्णुगोविन्दसंज्ञौ
खापर्डे श्रीगणेशो विलसति च महानाश्रयो यस्य नित्यम् ॥२॥
स्वाध्यायं केशवार्यात्, निगुडकरगुरोर्धीमतः शब्दशास्त्रं
तन्त्रं वैयासिकं यो बुधकुलतिलकाच्छ्रीविरूपाक्षसूरेः ।
मीमांसां वैद्यनाथाच्चिरतरमपठीद्रामतः श्रौतविद्यां
तेन श्रीवामनेन व्यरचि कृतिरियं क्षम्यतां विद्वरिष्ठैः ॥ ३ ॥

अयि प्रियवाचकमहाशयाः, सुतरां खलु मुदमापन्नोऽस्म्यद्य भवतां करतलं प्रापयन्नग्निहोत्रचन्द्रिकामिमाम् । यद्यपि नानाविधान्धान्यराशीन्स्वगृहस्थितेषु कोष्ठागारेषु व्यवस्थापयन्क्षेत्राधिपतिर्लोकानामादराय भवति गीयते च श्रीमांश्चेति सर्वैस्तथाऽपि नासौ विस्मरति सस्योत्पादने कृतपरिश्रमान्दीर्घोद्योगिनोऽनेकान्पुरुषान्, न ह्येकेनैव तेन निखिला कृषिः कृष्यते न हि स्वेनैव तेन सर्वबीजनिर्वापणं क्रियते न वा सस्यधारणापर्यन्तं बहुविधाः परिश्रमाः सह्यन्ते । एवमेव ग्रन्थोऽयं श्रीमतां कृपापात्रमभूदद्य तथाऽपि तन्निर्माणे सहृदयाः सहाया अपि भूयांसः सन्तीति निवेदयन्वहाम्युपकारभरानेतेषामनेकशो विनीतेन शिरसा ।

तत्र स्मृतिपथमायाति पुनः पुनः श्रीमल्लोकमान्यो गङ्गाधरात्मजस्तिलकान्वयजो बालशर्मा, महाभागोऽसौ ग्रन्थमिमं प्रत्यक्षीकर्तुं नावशेषितः करुणाविमुखेन कृतान्तेनेति नितरां विषण्णोऽस्मि संवृत्तः । अनेन खलु परमोदारेण पुरुषपुंगवेन स्वकीयग्रन्थालयस्थमृक्संहिताभाष्यमुपहारीकृतं ग्रन्थकर्त्रे । न केवलं प्रस्तुतग्रन्थप्रकाशने किंतु नित्यमेव शास्त्रीयवाग्यज्ञानुष्ठानसमये साहाय्यं व्यतनोदेष ममेति सविनयमाविष्करोमि कृतज्ञतामेतस्मिन् ।

अथास्मिन्नुपकृतस्मृतिसमुद्यमे झटिति वर्णनविषयमवतरति मदीया लेखनी तत्रभवतः श्रीमतः परांजपेकुलदीपकस्य शिवरामात्मजस्य नरहरशर्मणः ( डॉ० बाबासाहेब परांजपे ) । एतेन खलु सुगृहीतनामधेयेन

वैद्यशास्त्रनदीष्णेनाधीतबह्वृचेन पावनचरितेन राष्ट्रकार्यधुरंधरेण वर्णाश्रमव्यवस्थासंरक्षणबद्धपरिकरेण पुरुषार्थचतुष्टयप्रतिपादननिपुणेनाऽऽयासित आत्मा मत्कृते। न केवलमत्रत्यान्यपि तु विदेशीयान्यपि पुस्तकानि महता प्रयासेन संपाद्य वितीर्णान्येतेन महात्मना मे। नावगच्छामि कथमपि कथमस्याऽऽनृण्यमुपगन्ताऽस्मीति। मुम्बापुरमध्यवर्तिबृहन्मन्दिराधीश्वरान्गोस्वामिकुलभूषणान्श्री १०८ श्रीगोकुलनाथमहोदयाञ्शतशः प्रणम्य तैः प्रदत्तेन मानवकल्पसूत्रैकदेशेन बहुमूल्यग्रन्थेन सुमहती समभूत्कार्यनिष्पत्तिर्ममेति सानन्दमुद्घोषयामि।

आहिताग्निभिर्नानलकुलोत्पन्नैरनवरतमग्निसेवां कुर्वद्भिर्गणेशशास्त्रिभिर्निखिलेऽपि जगति दुरापः श्रीदेवत्रातभाष्यग्रन्थः प्रसादीकृतो ममेति वर्णनातीतमेतेषामौदार्यम्।

आनन्दाश्रमसंस्थाधिकारिभिः श्रीविनायकरायअपटेमहाशयैर्मुद्रितोऽयं ग्रन्थ इति श्लाघ्यमेषां चरितम्। श्रौतप्रकरणस्थग्रन्थान्तरमुद्रणेऽपि वर्धतामेतेषामेवमेव सद्बुद्धिः परमेश्वरकृपाकटाक्षत इति मे मनीषा।

किंजवडेकरकुलावतंसप्रभृतैः श्रीरामचन्द्रात्मजदत्तात्रेयशर्मभिराहिताग्निभिः सोमयाजिभिरत्राऽऽगत्य न्युष्य चाऽऽग्रन्थसमाप्ति ग्रन्थलेखने बृहत्साहाय्यमकारि। तथैव वेदशास्त्रोदधिपारंगतानां प्रयोगशास्त्रनदीष्णहानगलग्रामनिवासिनां श्रीरामदीक्षितानां प्रत्यक्षप्रयोगविज्ञानस्य साहाय्यं विनाऽसंभाव्यैव ग्रन्थनिष्पत्तिरिति साञ्जलिबन्धं स्मरामि तदुपकृतीः पुनःपुनः।

डेक्कनकॉलेजस्थैः शास्त्राध्यापकैराचार्यैः श्रीधरशास्त्रिभिः पाठकमहोदयैर्व्यलेखि ग्रन्थस्यास्य प्रस्तावो भूयोभूयश्च संपादितं संशोधनमिति वितरामि तेभ्योऽनेकशो धन्यवादान्। मिरजकरवंशभूषणैः श्रीमुकुन्दशास्त्रिभिः संस्कृताध्यापकैश्चाङ्गीकृतमन्तराऽन्तरा सहकार्यमिति तेष्वपि दर्शितादरोऽयं जनः।

एवं च परिसमाप्याऽऽनन्दनकरं निवेदनमेतच्चराचराधारभूतस्य कैलासपतेः कोरग्रामनिवासिनः श्रीकमलेश्वरस्य प्रसादत आदिशक्तेर्महालक्ष्म्याः कृपाकटाक्षतः पूज्यपादविरूपाक्षचरणानां गुरुवर्यवैद्यनाथशास्त्रिणामध्यापककेशवभट्टपादानां दत्तात्रेयशास्त्रिनिगुडकराख्यानां गुरुचरणानां पण-

शीकराख्यदत्तात्रेयशास्त्रिणां, रघुनाथकृष्णपाटणकराख्यानां महोदयानां सन्मित्राणां चाऽऽशिषा भवतु मत्तः पुनरेवं ग्रन्थनिष्पत्तिरिति प्रकटय्य मनोरथं समापयाम्येतन्निवेदनम् । नेत्रवेदवसुभूमिते ( १८४२ ) शालिवाहनशाके समाप्तिमगमदयं ग्रन्थः पुण्यपत्तने केळकरोपाह्वमाधवरायाणामारामेऽग्निहोत्रशालायामाश्विनसुदि पौर्णमास्यामिति शम् ।

विदुषामनुचरो वामनशर्मा



# देवयजनप्रतिकृतिप्रदर्शितविषयप्रमाणानि ।

**आयामविस्तारौ**—देवयजनस्याऽऽयामविस्तारावर्थलक्षणाविति सूत्रकारेण प्रमाणानुक्तत्वाज्ज्ञायेते । अर्थलक्षणं तु कल्पान्तरप्रणेतृभिर्व्यक्तीकृतमस्ति । तदेवम् । आयामः षोडशप्रक्रमः । विस्तारो द्वादशप्रक्रमः । नन्वन्यतो ग्रहणे दोषः स्यादिति मैवम्—अनुक्तमन्यतो ग्राह्यमिति न्यायान्निषेधाभावाच्चेति विभाव्यताम् ।

**आगारपार्थक्यम्**—तस्मिन्देवयजन आगारद्वयं कल्पनीयम् । तदेतत्सूत्रकारः सूत्रयांबभूव—

**"अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य" ( आप० श्रौ० सू० ५।४।६। )**

**सूत्रार्थः**—गार्हपत्यागारात्पृथगेवाऽऽहवनीयस्याप्यागारं कर्तव्यमित्यर्थः । गार्हपत्यागार एव दक्षिणाग्न्यागारं भवतीत्युक्तं भवति । आगारं शरणमित्यनर्थान्तरम् ।

**शरणनियमः**—तत्र प्रत्यागारमुदीचीनाग्रवंशतानियमः । सूत्रयति च—

**"तस्मिन्नुदीचीनवंशं शरणं करोति" ( आप० श्रौ० सू० ५।४।१। )**

**सूत्रार्थः**—उदीचीनान्वंशान्निधाय गार्हपत्यस्य शरणं कुर्यात् । तत्र शरणस्य स्तम्भरचनाविशेषं सौकर्यावहं प्रदर्शयामः । प्रतिशरणं स्तम्भास्त्वेकादश द्वादश वा खातव्याः । तत्र प्रतिस्तम्भमन्तरालं प्रतिकृतावङ्कितरीत्या षट्चतुस्त्रिप्रक्रमामिति ज्ञेयम् । गार्हपत्यस्य दक्षिणस्यां दिशि शकटगमनार्हमेकं द्वारं कल्पनीयम् । आहवनीयशरणेऽप्येकं द्वारं प्राचीनं कल्पनीयं शेषमागारं गार्हपत्यागारवत्कार्यम् ।

**आयतननिर्मितिः**—आयतननिर्माणमानप्रकारः प्रतिकृतौ योऽस्माभिः प्रादर्शि स परम्परामूलकः । परम्परा त्वितिहासप्रमाणमूलिकेति सुन्दरराजकृच्छुल्बसूत्रव्याख्यानतोऽवगच्छामः । एवं हि तत्र व्याख्यानम्—

> **"मण्डलं गार्हपत्यस्य, अर्धमण्डलं दक्षिणाग्नेः, चतुरश्रमाहवनीयस्यैतिहासिकाः सर्वाणि चाऽऽयतनानि क्षेत्रतस्तुल्यानीत्याहुरिति च"**

सूत्रकारमत्याऽऽयतननिर्मितिप्रकारस्तु यथावन्निर्णीय यथावकाशं दार्शिके विहारे प्रदर्शयिष्यामः ।

**गार्हपत्यायतनस्थलनिर्देशः**—गार्हपत्यशरणस्य पृष्ठवंशादधस्तनदेशमग्रेण गार्हपत्यायतनस्थानमिति सूत्रकारेण सूत्रितम् । तद्यथा—

**" तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति "** ( आप० श्रौ० ५।४।२।)

**सूत्रार्थः**—तस्य शरणस्य पृष्ठवंशादवस्तनं देशमग्रेण गार्हपत्यस्य स्थानं भवति ।

**आयतनमानम्**—पञ्चतिलाधिकसार्धत्रयोदशाङ्गुलपरिमितेन शुल्बेन कर्कटेन वा कृतवर्तुलं **गार्हपत्याग्नेरायतनं भवति ।**

**१ चतुस्त्रिंशत्तिलाः पृथुसंश्लिष्टाः**—एकमङ्गुलम् ।

पृथुसंश्लिष्टाः—चतसृष्वपि दिक्षु संश्लिष्टाः संबद्धाः प्रथनगुणविशिष्टा इत्यर्थः अयं पृथुसंश्लिष्टशब्दार्थ इति शुल्बशास्त्रविदो याज्ञिकाः प्राहुः ।

**आहवनीयाग्न्यायतनम्**—गार्हपत्यायतनस्य पूर्वशङ्कुमारभ्याष्टासु प्रक्रमेष्वतीतेष्वाहवनीयस्य पश्चिमशङ्कोः स्थानम् ।

**" तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनमेकादशसु राजन्यस्य द्वादशसु वैश्यस्य "** ( आप० श्रौ० सू० ५।४।३ । )

**सूत्रार्थः**—अष्टासु प्रक्रमेष्वतीतेष्वाहवनीयस्थानम् । प्रक्रमो द्विपदस्त्रिपदो वा पदं पञ्चदशाङ्गुलमिति बौधायनः । द्वादशाङ्गुलमिति कात्यायनः । तत्र समचतुरश्रं चतुर्विंशत्यङ्गुलात्मकमाहवनीयायतनम् ।

**दक्षिणाग्न्यायतनम्**—गार्हपत्यायतनस्य पूर्वशङ्कुमारभ्य पुरस्तात्षष्ट्यङ्गुलमिते देशे शङ्कुं निखाय, तस्मात्समं दक्षिणतः षट्सप्तत्यङ्गुलपरिमिते देशे शङ्कुं निखाय, तथा च गार्हत्यायतनस्य पूर्वशङ्कुमारभ्य दक्षिणतः पुरस्तात् षण्णवत्यङ्गुलपरिमिते देशे दक्षिणाग्नेरायतनमध्यशङ्कुं निखाय सार्धयवद्वयाधिकैकान्नविंशत्यङ्गुलात्मकशुल्बेन कर्कटेन वा मण्डलं कृत्वोत्तरार्धं त्यक्त्वा दाक्षिणतोऽर्धचन्द्राकाररेखां कुर्यात । **तदेतद्दक्षिणाग्नेरायतनम् ।**

**" दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् "** ( आप० श्रौ० सू० ५।४।५। )

**सूत्रार्थः**—गार्हपत्यस्य दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्याहवनीययोरन्तरालदेशस्य तृतीयोंऽशो विगतो यस्माद्देशात्स तथोक्तः । गार्हपत्यस्य नेदीयसीति परमतनिरासार्थमिति ज्ञेयम् । वितृतीयदेशे—इति सप्तमी समीपसप्तमी चेयं वितृतीयदेशस्य पश्चात्स्तोकान्तरे देश इत्यर्थः ।

**तीर्थम्**—उत्करं प्रणीताश्चान्तरेण यो देशः स तीर्थसंज्ञको ज्ञेयः । तीर्थप्रदेशज्ञानार्थं प्रतिकृतौ प्रणीतोत्करप्रदर्शनमिति ज्ञेयम् ।

**" पूर्वेणोत्करमपरेण प्रणीता एतत्तीर्थमित्याचक्षते । " ( आश्व० श्रौ० सू० १।१।४ ।)**

**यजमानसंचरः**—अपरेण वेदिदेशं पूर्वेण गार्हपत्यं दक्षिणाग्निं च पूर्वेण गच्छेत् ।

**" आहिताग्निराचम्यापरेण वेदिमतिव्रज्य " ( आश्व० श्रौ० सू० २ । ३।११। )**

**आचमनस्थानम्**—आहवनीयस्यैशानीतो निष्क्रम्य प्राङ्मुखो भूत्वाऽऽचामेत् ।

**" प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य " ( आश्व० श्रौ० सू० १।१।४ । )**

**यजमानस्थानम्**—वेदिदेशस्य दक्षिणत उपविशेत् ।

**" दक्षिणत उपविश्य " ( आश्व० श्रौ० सू० २।३।११। )**

**पत्नीस्थानम्**—गार्हपत्यस्य दक्षिणत उदङ्मुख्युपविशेत् ।

**" दक्षिणत उदीच्युपविशति " ( आप० श्रौ० सू० २।५।८। )**

**१ धृष्टिः**—धृष्टिः, उपवेष इत्यनर्थान्तरम् । सा च धृष्टिर्यस्य कस्यचिद्यज्ञियकाष्ठस्य कार्या । सा चाङ्गारनिरूहणभस्मसंमीकरणादिपूपयुज्यते । सा प्रादेशमात्राऽरत्निमात्रा वा कार्या । तद्विधानं चैवं सूत्र्यते **" उपवेषं करोति " ( आप० श्रौ० सू० १।६।७। )**

**२ अग्निहोत्रस्थाली**—सैषा मृन्मयी दुग्धतापनार्थमुपयुज्यते । तस्याः प्रमाणं सूत्र्यते—

**" प्रसृताकृतिरार्यकृताऽग्निहोत्रस्थाल्यूर्ध्वकपालाऽचक्रवर्ता " ( आप० श्रौ० सू० ६।३।७। )**

**सूत्रार्थः**—प्रसृताकृतिः—असंकुचितबिला । आर्यकृता—आर्यैः कृता । ऊर्ध्वकपाला—अतिर्यग्वृत्तकपाला । अचक्रवर्ता वर्तनं वर्तः, न चक्रे वर्तनं यस्याः सा तथोक्ता न चक्रभ्रमणेन निर्मितेत्यर्थः ।

**३ स्रुवः**—खदिरकाष्ठकृतोऽर्थलक्षणः । अन्यत्रार्थलक्षणं नियतमस्ति । अङ्गुष्ठपर्वमात्रबिलः स्रुव इति भारद्वाजः । अरत्निमात्रदैर्घ्यः ।

| विषयः | पुटसंख्या |
| --- | --- |
| १९ अग्नेर्मन्थनयन्त्रकं सप्रभं कर्मप्रदीपस्थम् .... .... | ६१-६५ |
| २० अग्निहोत्रानुष्ठानविषयिका सामग्री ... ... .... | ६५-६६ |
| २१ अग्निहोत्रहोमप्रयोगमन्त्रभाष्यम् .... ... ... | ६६-७३ |
| २२ समारोपप्रत्यवरोहप्रयोगमन्त्रभाष्यम् ... ... | ७४- |
| २३ प्रवासोपस्थानप्रयोगमन्त्रभाष्यम् ... ... .... | ७५-७९ |
| २४ पिण्डपितृयज्ञविषयकं तैत्तिरीयब्राह्मणं सायणाचार्यकृतभाष्यसहितम्... .... ... | ८०-८५ |
| २५ आश्वलायनीयं पिण्डपितृयज्ञसूत्रम् ... ... ... | ८५-८६ |
| २६ तदेव देवत्रातनारायणभाष्यवृत्तिसहितम् ... .. | ८७-९९ |
| २७ पिण्डपितृयज्ञसंभारस्मरणपट्टिका .... .... ... | १०० |
| २८ पिण्डपितृयज्ञप्रयोगः .... ... ... .... | ...१०१-१०३ |
| २९ पिण्डपितृयज्ञप्रयोगमन्त्रभाष्यम् .... ... ... | ...१०४-१०७ |
| ३० आग्रयणब्राह्मणं तैत्तिरीयं सायणाचार्यकृतभाष्यसहितम् ... ... ... | ....१०७-११० |
| ३१ आग्रयणसंभारस्मरणपट्टिका ... .... | ...१११- |
| ३२ आश्वलायनीयमाग्रयणीयसूत्रम् ... ... | ....१११-११२ |
| ३३ तदेव देवत्रातनारायणभाष्यवृत्तिसहितम् ... | ...११२-११७ |
| ३४ आपस्तम्बाचार्यप्रणीतमाग्रयणश्रौतसूत्रम् .... | ...११८-१२० |
| ३५ तदेव रुद्रदत्तकृतवृत्तिसहितम् ... ... | ...१२१-१२९ |
| ३६ तत्सूत्रानुसारि आग्रयणप्रयोगः .... ... तत्र तत्राऽऽश्वलायनानां विशेषः प्रदर्शितोऽस्ति ... | ...१२९-१३४ |
| ३७ अथाऽऽग्रयणहौत्रप्रयोगः ... ... ... आपस्तम्बीययजमानस्य विशेषस्तत्र तत्र प्रदर्शितोऽस्ति .... | ...१३५-१३७ |
| ३८ आग्रयणानुकल्पप्रयोगः.... ... ... ... आश्वलायनीयः ... ... ... ... ... | ....१३७-१३८ |
| ३९ ऐतरेयब्राह्मणविहितमाग्रयणाकरणप्रायश्चित्तं सायणभाष्यसहितम् ... .... .... .... .... | ...१३८- |
| ४० तत्प्रायश्चित्तेष्टिस्थानीयपूर्णाहुतिप्रयोगः . ... | ...१३८-१३९ |
| ४१ आग्रयणमीमांसा .... ... .... .... | ...१३९-१४१ |
| दक्षिणामीमांसा .... .... ... ... ... .... | |

विषयः पुटसंख्या

पाकादिधर्ममीमांसा.... ... ... ... ... ....

४२ अग्निहोत्रप्रायश्चित्तविधायकमैतरेयब्राह्मणं ... } १४१-१५१
सायणाचार्यकृतभाष्यसहितम् ...

१ उपावसृष्टाया गोर्दोहनमध्य उपवेशनप्रा० .... ....१४१—
२ दोहनकाले ध्वनिकरणे प्रा० ... .... ....१४२—
३ दुह्यमानस्य क्षीरस्याग्निहोत्र्याः स्थानचलनेन
भूमौ पतने प्रा० ... ... ... ....१४२—
४ सर्वस्मिन्पयसि सिक्ते प्रा० .... ... .... ....१४३—
५ सर्वस्य विदूषणे प्रा० ... ... ... ... ...१४३—
६ अग्निहोत्रस्याधिश्रितापत्तौ प्रा० ... ... ...१४४—
७ अधिश्रितोत्तरस्कन्दने, दाहाधिक्येन वा
स्कन्दने प्रा० .... ... ... ... ....१४४—
८ गार्हपत्यादाहवनीयं नीयमाने हविषि स्खलने,
साकल्येन वा द्रव्यपतने प्रा० ... ... ....१४५—
९ अग्निहोत्रहवण्या भेदने प्रा० ... .... ....१४६—
१० आहवनीयेऽग्नौ सति गार्हपत्य उपशान्ते प्रा० ....१४६—
११ आहवनीयेऽग्नौ स्थित एव पुनरुद्धृते प्रा० ... ....१४७—
१२ गार्हपत्याहवनीययोर्मिथः संसर्जने प्रा० .... ....१४७—
१३ सर्वेषामग्नीनां संसर्जने प्रा० .... .... ....१४७—
१४ आहिताग्नीनां परस्परमग्निसंसर्जने .... .. ...१४८—
१५ लौकिकाग्निसंसर्जने च प्रा० .... ... ....१४८—
१६ गार्हपत्यादीनां महानसादिगतेनाग्निना संसर्गे प्रा० ....१४८—
१७ गार्हपत्यादेर्वैद्युताग्निसंसर्जने प्रा० ... ... ....१४८—
१८ गार्हपत्यादेः शवाग्निसंसर्गे प्रा० ... .... ....१४९—
१९ गार्हपत्यादेरारण्येनाग्निना संसर्गे प्रा० .... ....१४९—
२० गार्हपत्यादीनां सर्वेषामुपशान्तौ प्रा० .... ...१४९—
२१ आहिताग्निनाऽस्नातेनाग्निहोत्रहोमे कृते प्रा० ... ...१४९—
२२ आहिताग्नेः सूतकान्नप्राशने प्रा० .... ... ...१५०—
२३ आहिताग्निना स्वमरणविषयके शब्दे श्रुते प्रा० ....१५०—
२४ आहिताग्नेर्भार्या वा तद्गृहावस्थिता गौर्वाऽपत्यद्वयं ...
सह जनयेत्तदा प्रा० ... ... ... ....१५०—

विषयः पुटसंख्या

४३ आश्वलायनीयाग्निहोत्रप्रायश्चित्तसूत्रं देवत्रातीयभाष्येण
नारायणकृतया वृत्त्या च समेतम् ... ... ...१५१-१५७
१ अर्वाक्छम्यापरासादाहवनीयगमने प्रा० .... ....१५२—
२ अर्वाक्छम्यापरासाद्गत्वाऽऽहवनीय उपशान्ते प्रा० ....१५२—
३ अन्यस्याग्निषु यागे कृते प्रा० .... ... ....१५२—
४ अस्याग्निष्वन्येन यागे कृते प्रा० .... .... ...१५२—
५ अस्याग्नीनन्यो वाऽग्निर्व्यवेयात्तदा प्रा० ... ...१५२—
६ अग्निहोत्रद्रव्ये कुशेषूपसादिते रथशकटादि, ... ....
७-८ श्वा, मनुष्यजातिः सर्वाग्नीनां मध्येनातिक्रामेत्तदा प्रा० १५२—
९ यजमाने प्रवासे मृते प्रा० ... .... ... ...१५३—
१० अग्निवर्जितैरन्यैर्व्यवाये प्रा० .... ... ...१५४—
११ शुनो व्यवाये विशेषविधिरूपं प्रा०... .... ....१५५—
१२ अध्वप्रमीतयजमानस्येष्टेः प्राग्विशेषप्रा० .... ....१५६--
१३ अपरपक्षे प्रमीतस्य यजमानस्य विशेषविधिरूपं प्रा०...१५६—
४४- शम्यापरासदेशमनतिक्रान्ताग्नीनां यथाप्रयोगशास्त्रं
प्रायश्चित्तप्रयोगः... .... .... ... ... ....१५७—
४५ पाथिकृतेष्टिस्थानीयपूर्णाहुतिप्रयोगः ... ... ...१५८—
४६ शम्यापरासदेशातिक्रमणेऽन्याग्निषु यजने ....
अस्याग्निषु अन्येनेष्टेऽग्निना व्यवाये, चक्रीव- ...
च्छ्वपुरुषैर्व्यवायेऽध्वनि यजमाने मृते प्रायश्चित्तप्र० ...१५८—
४७ व्यवधानप्रायश्चित्तविशेषस्तत्संकल्पश्च ... .... ...१५९-१६०
शुना व्यवाये विशेषप्रयोगः ... .... ...
४८ प्रायश्चित्तसूत्रं पूर्वोक्तभाष्यवृत्तिसहितम्— ... ....१६१-१६४
१४ केशनखकीटपतङ्गादिभिरन्यैर्वा बीभत्सितेषु
हविष्षु प्रा० .... ... ... ... ...१६१-
१५ क्षरणं प्राप्तेषु हविष्षु प्रा० .... .... .... ...१६१-
१६ अग्निहोत्रद्रव्यमधिश्रितं सद्यदि स्थालीमूलतः
स्रवेत्तदा प्रा० ... ... .... .... ....१६१-

| विषयः | पुटसंख्या |
|---|---|
| १७ उपावसृष्टा गौर्दुह्यमाना यद्युपविशेत्तदा प्रा० ... | ....१६१— |
| १८ उपावसृष्टा दुह्यमाना यदि शब्दं कुर्यात्तदा प्रा० | ....१६२— |
| १९ शोणितं चेद्दुह्यति गौस्तदा प्रा० ... .... | ...१६३— |
| २० स्थालीभेदेन विक्षिप्ते द्रव्ये, सिक्ते च प्रा० ... | ...१६३— |
| २१ उपावसृष्टायां दुह्यमानायां गवि चलन्त्यां यदि पयः स्कन्देत्तदा प्रा० .... .... ... | ...१६३— |
| **४९ प्रायश्चित्तस्य यथाशास्त्रं प्रयोगः .... ... ...** | **...१६४–१६५** |
| २२ अधिश्रितमग्निहोत्रद्रव्यं स्थालीमूलेन स्रवति चेत्प्रा० प्र० ... ... ... ... | ...१६४— |
| २३ उपावसृष्टा गौर्दुह्यमाना यद्युपविशेत्तदा प्रा० प्र० | ....१६४— |
| २४ यदि गौरुपावसर्गादिदोहनपर्यन्तं शब्दं कुर्यात्तदा प्रा० प्र० .... ... .... .... | ...१६४— |
| २५ स्थालीमूलतो विक्षिप्ते, स्कन्ने वा प्रा० प्र० ... | ....१६५— |
| २६ दोहनावस्थायामुपावसृष्टा गौश्चलन्ती यदि भूमावीषत्क्षीरं पातयेत्तर्हि प्रा० प्र० ... | ...१६५— |
| **५० प्रायश्चित्तसूत्रं भाष्यवृत्तिभ्यां सहितम् ... ...** | **....१६५–१७३** |
| २७ सिक्तावशिष्टेऽनवशिष्टे वा प्राचीनहरणे होमव्यवस्था | ....१६५— |
| २८ प्राचीनहरणे स्कन्ने प्रा० .... .... ... | ....१६६— |
| २९ स्कन्दित्वा शेषाशेषे होमव्यवस्था ... ... | ...१६६— |
| ३० प्राचीनहरणानन्तरं स्कन्ने प्रा० ... ... | ....१६७— |
| ३१ अन्यहोमकालपर्यन्तं नियमनविधिः ... .... | ....१६७— |
| ३२ गाणगारिमतम् .... .... ... ... | ...१६७— |
| ३३ अधिश्रितेऽग्निहोत्रद्रव्ये शरशरायच्छब्दायमाने सति प्रा० | १६७— |
| ३४ विष्यन्दमानेऽग्निहोत्रद्रव्ये प्रा० ... ... | ...१६८— |
| ३५ बीभत्सेऽग्निहोत्रद्रव्ये प्रा० ... ... ... | ....१६८— |
| ३६ संस्कृतेऽग्निहोत्रद्रव्ये यदि वर्षधाराः पतन्ति तदा प्रा० | ...१६८— |
| ३७ अहुतायामुत्तराहुतौ स्कन्दने प्रा० ... ... | ...१६९— |
| ३८ सायं होमकालनियमः ... .... ... .... | |
| ३९ प्रातर्होमकालनियमः ... ... ... ... ... | |
| ४० तदुभयहोमकालातिक्रमे प्रा० .... .... | ...१६९–१७३ |

विषयः पुटसंख्या

५१ प्रायश्चित्तप्रयोगः ... .... .... .... ...१७३-१७६

४१ पूर्वोक्तप्रयोगशेषः ... .... .... ... ...१७३-

४२ प्राचीनहरणोत्तरं स्कन्ने प्रा० प्र० ... ... ....१७४—

४३ अधिश्रितेऽग्निहोत्रद्रव्ये शब्दायमाने प्रा० प्र० ...१७४—

४४ उद्वासिते स्कन्ने प्रा० प्र०... .... ... ...१७४—

४५ बीभत्से प्रा० प्र० .... .... ... ... ...१७४—

४६ संस्कृतेऽग्निहोत्रे वर्षधारापतने प्रा० प्र० ... ....१७५—

४७ उत्तराहुतावहुतायां स्कन्ने प्रा० प्र० ... ... ....१७५—

४८ सायंहोमकालातिक्रमे प्रा० प्र० ... .... ...१७५-१७६

४९ प्रातःकालातिपत्तौ प्रा० प्र० ... ... ...१७६—

५२ प्रायश्चित्तसूत्रं भाष्यवृत्तिसहितम् .... ... ...१७७-१९१

५० आर्त्योऽश्रुपातप्रा० .... .... .... ... ....१७७—

५१ आहवनीयेऽप्रणीत आदित्येऽस्तमिते प्रा० ... ....१७७—

५२ आहवनीयेऽप्रणीत आदित्येऽभ्युदिते प्रा० ... ...१७७-१७९

५३ आहवनीये ध्रियमाण आदित्यानुगमने प्रा० ... ...१७९-१८३

५४ अरण्योः समारूढेषु अग्निषु अरणीनाशे प्रा० ...१८३-१८४

५५ साम्नावग्निप्रणयने प्रा० ... .... .... ....१८४—

५६ आहिताग्नेर्गृहदाहे प्रा० ... ... ... ...१८५—

५७ सर्वाग्नीनां मिथोभावे ... ... ... ...१८५—

५८ गार्हपत्याहवनीययोर्मिथोभावे... ... .... ...१८५—

५९ ग्राम्येणाग्निना श्रौताग्नीनां संसर्गे प्रा० ... ...१८५—

६० वैद्युतेनाग्निना श्रौताग्नीनां संसर्गे प्रा० ... ...१८५—

६१ विमतानामन्नभोजने... .... .... ... ...१८५—

६२ आहिताग्नौ जीवत्येव मृत इति शब्दे श्रुते प्रा० ....१८६—

६३ प्रायश्चित्तेष्टीनां स्थाने पूर्णाहुतिप्रा० ... ... ...१८६-१८७

६४ मृन्मयपात्रभेदे प्रा० ... ... ... ....१८७—

६५ अग्निहोत्रकाले मन्थनेऽप्यग्नावजायमाने प्रा० ... ...१८७-१८८

६६ तस्यैवानुकल्पग्राहकसूत्रम् .... ... .... ...१८८—

६७ अनुकल्पविधानसूत्रम् ... .... ... ...१८८-१८९

६८ अनुकल्पेन होमे सत्यपि मन्थनविधायकं सू० ...१८९—

विषयः पुटसंख्या

६९ अनुकल्पेन कृते होमे तस्मिन्ननुकल्पविषयप्रायश्चित्त-
विधाकसूत्राणि ... .... ... ... ...१९०—
७० तत्प्रायश्चित्तीयनियममर्यादाविधायकं सू० .... ...१९०—
७१ आहुत्योरन्तराऽग्नावनुगते प्रा० ... ... ...१९०—१९१
५३ प्रायश्चित्तप्रयोगः ... ... ... ... ...१९१—२००
७२ यजमानस्याग्निहोत्रोद्धरणमारभ्याऽऽहोमं दुग्धा-
श्रुपाते प्रा० प्र० .... ... ... .... ...१९१—
७३ सायंकालेऽनुद्धरणप्रा० प्र० ... .... ...१९१—१९२
७४ प्रातरनुद्धरणप्रा० प्र० .... ... ... ...१९२—१९३
७५ आहवनीये ध्रियमाणे गार्हपत्यानुगमने प्रा० प्र० ....१९३—१९४
अस्मिन्प्रयोगे चत्वारोऽपि पक्षाः प्रदर्शिताः
७६ अग्निहोत्रार्थं प्रणीत आहवनीयेऽनुगते गार्हपत्ये
पूर्णाहुतिप्रा० प्र० ... ... ... ...१९४—
७७ अग्निहोत्रार्थं विहृतानामग्नीनां गार्हपत्याहवनीययोर्वाऽ-
स्तमयादुदयाद्वोर्ध्वमनुगमननिमित्तः प्रा० प्र० ...१९४—१९५
७८ समारूढाग्न्यरणीनाशप्रा० प्र० .... .... ...१९५—
७९ साग्नावायतने पुनरग्निप्रणयने प्रा० प्र० ... ...१९५—
८० आहिताग्नेर्गृहदाहनिमित्तप्रा० प्र० ... ... ...१९५—
८१ अग्निहोत्राग्नेः शवाग्निसंसर्गे प्रा० प्र० .... ...१९५—
८२ गार्हपत्याद्यग्नीनां द्वयोर्वा मिथः संसर्गे प्रा० प्र० ...१९६—
८३ श्रौताग्नीनां लौकिकाग्निसंसर्गे प्रा० प्र० .... ...१९६—
८४ श्रौताग्नीनां वैद्युतानलसंसर्गे प्रा० प्र० ... ...१९६—
८५ आहिताग्निना द्विपदन्नभोजने प्रा० प्र० .... ...१९६—
८६ यजमानेन स्वमरणशब्दश्रवणे प्रा० प्र० .... ...१९७—
८७ मृन्मयपात्रभेदने प्रा० प्र० ... ... ... ....१९७—
८८ उद्धरणकाले मन्थनेऽप्यग्नावजायमानेऽनुकल्प- ...
प्रायश्चित्तप्रयोगः ....१९७—१९८
८९ अन्तराऽऽहुत्योराहवनीयानुगमने प्रा० प्र० ... ...१९८—
९० दावाग्निना गार्हपत्याद्यग्निसंसर्गे प्रा० प्र० ... ....१९८—
९१ हविष्पाकार्थमुद्धृताग्न्यनुगमने प्रा० प्र० .... ....१९८—

विषयः पृष्ठसंख्या

९२ अपोढाग्नेर्गार्हपत्यस्य च नाशे प्रा० प्र० .... ...१९८-
९३ अपोढेऽग्नौ वर्तमाने गार्हपत्यानुगतौ प्रा० प्र० ...१९८-
९४ आहवनीयहोमोत्तरं गार्हपत्यदक्षिणाग्न्योरन्यतरस्य ....
नाशे प्रा० प्र० ... ... ... ... ....१९९-
९५ अग्निहोत्राय विहृतेष्वग्निषु प्रयत्नं विना
ज्वलितेषु प्रा० प्र० .... ... .... ...१९९-
९६ यदि दक्षिणाग्निमनुद्धृत्य भ्रमादाहवनीयं प्रणयेदु-
द्धरणमन्त्रेण विना वाऽऽहवनीयं प्रणयेत्तदा प्रा० प्र०....१९९-२००
९७ अग्निहोत्रार्थाग्निविहरणोत्तरं दक्षिणाग्न्यनुग-
मने प्रा० प्र० .... ... .... ... ....२००-
९८ कश्चिदग्निहोत्रसंबन्धी विशेषः .... ... ....२००-
९९ आहिताग्नेर्ग्राम्यमलोपप्रा० प्र० ... ... ...२००—

५४ **आधानपद्धतिशेषः** ... .... ... ... ....२०१-२२६

१०० अग्न्याधेयप्रकाराः ... ... .... ... ....२०१-
१०१ सोमपूर्वाधानं प्रयोगशास्त्रमीमांसाशास्त्रप्रमाण-
घटितमित्यस्य विचारः ... ... .... ....२०१-२०६
१०२ इष्टिपूर्वाधानप्रमाणानि ... ... ... ....२०६-
१०३ होमपूर्वाधानप्रमाणानि ... ... ... ....२०६-२०७
१०४ पूर्णाहुत्यन्ताधानप्रमाणानि ... .... ... ...२०७-२०९
१०५ अक्षाभिहोमान्ताधाने प्रमाणम् ... ... ...२०९-
१०६ इष्ट्यन्ताधाने प्रमाणम् ... .... .... ...२०९-२११
१०७ सोमपूर्वाधानानुष्ठानक्रमः .... ... .... ...२११—
१०८ इष्टिपूर्वाधानानुष्ठानक्रमः ... .... ... ....२११-२१६
१०९ बौधायनानां पौर्णमास्याधाननिर्णयः ... .... ....२१२—
११० केचिद्बौधायनीयाः स्वकपोलकल्पनया ... ...
स्वसूत्रमन्यथयित्वा तद्विरुद्धमेवाऽऽचर- .... ...
न्ति तेषां वादकथया निरासः .... ... ....२१३—
१११ खण्डपौर्णमास्यनुष्ठाननिर्णयः .... ... ...२१५—
११२ अखण्डपौर्णमास्यनुष्ठानक्रमः .... ... ...२१५-२१६

विषयः पुटसंख्या

११३ अन्वारम्भेष्टिविषयिणी मीमांसा .... ... ...२१६–२१९
११४ सद्यस्कालपौर्णमास्यनुष्ठाननिर्णयः ... ... ...२१९–२२०
११५ खर्विकापौर्णमास्या निर्णयः ... .... ... ...२२०– ०
११६ इष्टिपूर्वाधानविषये शबराचार्यमतम् .... ... ...२२०– ०
११७ होमपूर्वाधानप्रमाणम् .... ... ... ...२२०–२२१
११८ पूर्णाहुत्यन्तमाधानम् .... ... ... ...२२१–२२३
११९ अक्षाभिहोमान्तमाधानमिष्ट्यन्तं च ... .... ...२२४–२२५
१२० अजस्रपक्षविचारः ... .... ... ... ....२२६– ०
१२१ पुनराधेयसूत्राणि ... ... .... ... ...२२६–२२८
१२२ पुनराधेयसूत्रवृत्तिः.... .... ... ... ...२२८–२३७
१२३ पुनराहितिविषयकाश्वलायनसूत्राणि ... ... ...
देवत्रातभाष्यनारायणवृत्तिसमेतानि .... ... ...२३८–२४०
१२४ मीमांसाविषये कुमारिलभट्टानां विचारः ... ....२४०–२४२
१२५ अग्निहोत्रानुष्ठाननित्यानित्यत्वमीमांसा .... ...२४२–२४६
१२६ अग्निहोत्रशब्दसमासमीमांसा... .... ... ...२४६–२४७
१२७ अग्निहोत्रस्य नामधेयत्वे प्रमाणम् ... ... ...२४७–२४९
१२८ स्वस्याभोज्यदिनेऽग्निहोत्राद्यननुष्ठेय- ... .... ...
मिति वदतां खण्डनम् ... ... ... ...२५०–
१२९ त्रिंशद्दिनमेवाग्निहोत्रानुष्ठानमिति ... ... ...
वदतां समाचारः ... ... ... ... ...२५०–२५४
१३० मीमांसकमतेऽनुपादेयपञ्चकम् .... ... ...२५३–
१३१ अनुष्ठेयकर्मसूक्तविकल्पानामनुष्ठेयविचारः ... ...२५४–२५७
१३२ पक्षशेषहोममीमांसा.... ... .... .... ....२५७–
१३३ प्रवासविधिमीमांसा... .... ... .... ....२५७–२५८
१३४ पिण्डपितृयज्ञमीमांसा .... .... .... ...२५८–२५९
१३५ आग्रयणमीमांसा– ... .... ... ...२५९–२६०
१३६ आश्वलायनीयाग्रयणानुकल्पसूत्रस्य देवत्रातभाष्यं :....
नारायणवृत्तिश्च ... .... ... ...२६०–२६१
१३७ आहिताग्नेराग्रयणानुकल्पस्थालीपाकप्रयोगः ... ....२६१–२६३

विषयः　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　पुटसंख्या

१३८ मन्त्रभाष्यम् ... ... .... ... ...२६३-

१३९ प्रायश्चित्तमीमांसा— .... .... ... ...२६५-२७३

१४० पुनराधेयमीमांसा — ... ... .... ...२७३-२७४

इत्यग्निहोत्रचन्द्रिकाया विषयानुक्रमः ।



ॐ तत्सद्ब्रह्मणे नमः ।

# अग्निहोत्रचन्द्रिका ।

---

निर्मथ्य निगमसिन्धुं विविधन्यायाभिधानमन्थानैः ।
धर्मसुधां समुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥ १ ॥
आश्वलायनमाचार्यं नत्वा श्रीकमलेश्वरम् ।
चन्द्रिकामग्निहोत्रस्य कुर्वेऽहं विदुषां मुदे ॥ २ ॥

अहो मुनिवंशोत्तंसभूताः प्रथितदिगन्तयशसो निर्मलान्ता वैदिकप्रमाणबद्धपरिकरा आपस्तम्बकात्यायनाश्वलायनकौशिकाचार्यप्रणीतप्रयोगशास्त्रानुगामिनः किमपीदं कर्णे कुरुत यदिदमनवरतमविच्छिन्नगुरुशिष्यपरम्पराऽस्मान्प्रत्यावर्तति ।

" यावज्जीवमग्निहोत्रं जुहुयात् । नानाहिताग्निर्म्रियेत " ।

"अथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघोऽवरुन्धेऽथ यदग्निहोत्रं जुहोति सहस्रं तेनेत्यपरिमितमेवेदमुक्तं भवति " ॥ ( बौ० श्रौ० सू० २ । ७ )

तमिममाम्नायं प्रमाणयन्तः शबराचार्यभगवत्पूज्यपादशंकराचार्यप्रभृतय एवं मन्यन्ते स्म—

"अतिक्रमिष्याम इममाम्नायम् । अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्मावबोधनं नाम, न च स्वाध्यायाध्ययनमात्रात्तत्र भवन्तो याज्ञिकाः फलं समामनन्ति । यदपि च समामनन्तीव तत्रापि द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् " ( पू० मी० १।१।१ ) "धर्मजिज्ञासायां श्रुत्यादय एव प्रमाणम् । " ( ब्र० सू० भा० १ । १ । २ )

सोऽयमाचार्यैः प्रदर्शितः पन्था अस्माभिरनुसर्तव्यः । अतस्तदनुसरणं वश्यमस्माभिर्नित्यकर्मानुष्ठानबोधमेवितव्यम् । अहो नैतन्नित्यं कर्म विनाऽनुष्ठानसाधनमनुष्ठातुं प्रभवन्ति यथाशास्त्रमनुष्ठातारः । तदर्थं साक्षादाम्नाय एव विदधात्यध्ययनम् ।

" स्वाध्यायोऽध्येतव्यः " ( तै० आ० २ । १५ । ७ ) इति ।

तमिमं स्वाध्यायशब्दमवीवृतद्वार्तिककद्रद्रुमकुमारिलः—

" स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते । एकार्थानां विकल्पश्च कर्मकत्वे भविष्यति " ॥ ( तन्त्रवार्तिकम् )

एवं " यजेत जुहुयात् " इत्यादि शिष्टाऽध्ययनं विदधताऽऽम्नायेन विहितपूर्वयागहोमाद्यनुष्ठानार्थमध्ययनमित्याम्नातं भवति । इममेवाऽऽम्नानाभिप्रायं जानता युक्तिभिर्विचारयता तत्रभवता जैमिनिनाऽऽम्नायार्थः सुस्पष्टं सूत्रेणोपनिबद्धः—

“ नह्यविद्वान्विहितोऽस्ति ” । ( पू० मी० ३ । ८ । १८ ) ॥ इति ॥

वार्तिकयांबभूवात्र कुमारिलस्वामी—

“ नह्यज्ञो विद्यते कर्ता । अधिकारो हि विदुषां नान्येषामिति निश्चयः ” इति ।

अबीभपदत्र भाष्यकारोऽपि—

“ तत्र होममात्रे चोदिते वेदाध्यायी शक्त इत्यभिधीयते न विद्वान् ” ॥ इति ॥ ( शा० भा० ३ । ८ । १८ )

विहितकर्माण्यनुतिष्ठन्तु परिजिहीर्षेवः कर्माकरणप्रयुक्तप्रत्यवायमित्यर्थमयमाम्नायः प्रवृत्तः । एवं चानुष्ठानं तदर्थं ज्ञानं तच्च स्वाध्यायस्यैवावगतम् । स्वाध्यायत्वं हि प्रतिव्यक्ति गोत्वादिवत्प्रतिशाखं समवैति । ततश्चाधीतेन स्वाध्यायेनेष्टं भावयेदित्यर्थपर्यवसन्नस्वाध्यायविधौ स्वाध्यायस्योपादेयतया तद्गतैकत्वस्य पश्वेकत्ववत्पित्रादिपरम्परागतत्वरूपस्वत्वस्य समासान्तर्गतस्याश्वाभिधान्यामश्ववच्च विवक्षितत्वादेकशाखाध्यायिना शाखान्तराध्ययनं नावश्यमनुसर्तव्यम् । नचैवं वेदान्तरस्याप्यध्ययनं न प्रसज्यत इति वाच्यम् । यजुर्वेदे समाम्नातद्रव्यदेवतारूपयुक्तज्योतिष्टोमादिकर्मण ऋग्वेदे याज्यानुवाक्यादिगुणमात्रं सामवेदे च स्तोत्रादिगुणमात्रं विधीयते । अतः साकाङ्क्षत्वाद्वेदान्तराणामतुल्यकार्यकारित्वात्समुच्चयो युज्यते । शाखान्तरेषु तु नैवं संभवति सर्वासु ह्यध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि द्रव्यदेवतारूपवन्ति तान्येवान्योन्यनिरपेक्षाणि विधीयन्त इति शाखान्तराणां तुल्यकार्यत्वम् । अतो नैकस्यानेकशाखाध्ययनसंभवः । अयमेव न्यायसिद्धार्थ इति जैमिनिरपि सूत्रयांबभूव—

“ वाक्यासमन्वयात् ” ( ३ । ४ । १७ ) इति ।

सूत्रार्थः स्वाध्यायविधेः पूर्वप्रपञ्चितया रीत्यैकशाखाध्ययनविधिपरत्वादेकस्यानेकशाखाध्ययनाभावादेकस्मिन्पुरुषे शाखान्तरवाक्यस्यासमवायान्न तच्छ्रवणसंभवः । अतः सर्वो जनः शाखान्तरं शृण्वन्नप्यश्रुतमेव मन्यते । एवं च पितृपरम्पराप्राप्तः समाम्नाय एव स्वशब्दार्थः । स च शाकलबाष्कलकण्वमाध्यंदिनतैत्तिरीयहिरण्यकेश्यादिरूपः । एवमपि याज्ञिकास्तावद्गुणोपसंहारं वैकल्पिकमिति जानन्तः परशाखीयं विध्यन्तमुपसंहृत्य सुखं कर्माण्यनुतिष्ठेयुरिति कृपया तं परकीयमपि विध्यन्तं विध्यादिं च कर्तैक्यतः सूत्रयांबभूवुरिति सर्वैरपि स्वस्वसूत्रकार एवानुसरणीयोऽनुष्ठानेतिकर्तव्यातायामिति विचारक्षमः पन्थाः । न च वाच्यं कुतः सूत्रकारैर्गुणोपसंहारः कृतः, अलं स्वशाखोक्तेतिकर्तव्यतानुष्ठानेनेति । प्रयोगशास्त्रकृद्भिः कात्यायनापस्तम्बप्रभृतिभिर्न्यायतः सिद्धार्थस्यैव सूत्रितत्वात् । जैमिनिरपीममर्थं साधयामास—

“ अपि वाऽप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ” ( पू० मी० ६ । ३ । २ ) इति ।

अत एव प्रयोगशास्त्रकृतोऽपि—

"योगापत्ति वक्ष्यामः" ( आश्व० श्रौ० सू० १ । १ । १ )

इति सूत्रयामासुः । इमान्यङ्गानि, इमानि प्रधानानि, इति खलु न्यायतः साधयितव्योऽर्थस्तमेवार्थमाम्नायतो विचार्य प्रणीतानि वाक्यानि हि श्रौतगृह्यसूत्राणीति वस्तुगतिः। अतः शाखान्तरीय आवश्यकस्तावान्गुणोपसंहारः सूत्रकारैः सूत्रितः । अतस्तावन्तमेवानुष्ठाय भवेयुः श्रेयोभाजनं वैदिका इति मीमांसकहृदयम् । ननु—

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृ० उ० ४ । ५ । ६ )

इति श्रुत्या सकलवैदिकधुरीणानामात्मज्ञानसाध्यपरमपुरुषार्थापवर्गमुख्योपायात्मानात्मविचार एव श्रेयस्करः प्रत्युत—

"कर्मचितो लोकः क्षीयते" ( छान्दो० ८ । १ । ६ )

इत्यादिश्रुत्या धूमार्चिरादिमार्गप्रदर्शनेन च क्षुल्लकफलकोऽयमारम्भ इति चेत्—ब्रूमहे । ये तु नित्यसुखाभिव्यक्तिं येऽपि दुःखध्वंसं वाऽविद्यानिवृत्तिं वा लिङ्गशरीरलयं वाऽपवर्गमाहुस्तेषामपि शरीरपरिग्रहाभावेऽविवाद एव । एतद्विरुद्धायास्तु वात्स्यायनस्मृतेद्वर्यष्टवर्षकामिनीनीविमोक्ष एवापवर्ग इति तस्याः काममूलत्वेनाप्रामाण्यनिश्चयाद्धैसजनाधिकरणन्यायेन श्रुत्यकल्पनात् । अतः सर्ववादिसंमतमिदमेवापवर्गलक्षणं कर्काचार्यैरभाषि—

"शुभाशुभकर्मोपभोगनिमित्तनैरन्तर्येण प्राणिनां शरीरपरिग्रहाभावोऽपवर्गः" । ( का० श्रौ० सू० क० भा० २ । १ ) इति ।

अयं चापवर्गो निषिद्धकाम्यवर्जनान्नित्यानुष्ठानाच्च जायते नेतरथा । नन्विदमयुक्तम् । कर्मणां तावत्—

"कर्मणा पितृलोकः" । ( बृ० १ । ५ । १६ )

इति फलान्तरविधानेन निराकाङ्क्षत्वात् प्रत्युत—

"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति न कर्मणा न प्रजया नास्त्यकृतः कृतेन" ( बृ० उ० ४ । ४ । २२ )

इत्यादिश्रुतिसहस्रैर्मुमुक्षोः कर्मणां त्यागविधानादतो न कर्मसाध्यत्वम् । सत्यम् । परमत्रास्ति कश्चिद्विशेषः—कर्मणां विविदिषावाक्येण मोक्ष उपादानात् । तथाहि यथाऽश्वेन जिगमिषन्तीत्यत्र गमनफले ग्रामसंयोगेऽश्वोपादानं तथा ।

"तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन." ( बृ० उ० ४ । ४ । २२ )

इत्यनेनापवर्गोद्देशेन तृतीयाश्रुत्या कर्मणां संयोगपृथक्त्वाधिकरणन्यायेन तादर्थ्येन प्रयोगान्तरानुपादानान्नित्यविधिप्रेरणयाऽनुष्ठितानामेव नित्यकर्मणां मुक्तिसाधनत्वम् ।

न तु मुक्त्यर्थं तेषामनुष्ठानान्तरमित्यर्थः । सेयं मुमुक्षोः कथा सविस्तरं प्राकाशि तत्रभवता वाचस्पतिना भामत्यां सर्वापेक्षाधिकरणे—

" तथा हि आश्रमविहितनित्यकर्मानुष्ठानधर्मसमुत्पादस्ततः पाप्मा विलीयते । स हि तत्त्वतो नित्याशुचिदुःखानात्मनि संसारे सति नित्यशुचिसुखात्मलक्षणेन विभ्रमेण मलिनयति चित्तसत्त्वमधर्मनिबन्धनत्वाद्विभ्रमाणाम् । अतः पाप्मनः प्रत्यक्षे प्रत्यक्षोपपत्तिद्वाराऽपावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य तात्त्विकीमनित्याशुचिदुःखरूपतामप्रत्यूहं विनिश्चिनोति ततोऽस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते । ततस्तज्जिहासाऽस्योपावर्तते । ततो हानोपायं पर्येषते पर्येषमाणश्चाऽऽत्मतत्त्वज्ञानमस्योपाय इति शास्त्रादाचार्यवचनाच्चोपश्रुत्य तज्जिज्ञासत इति विविदिषोपहारमुखेणाऽऽत्मज्ञानोत्पत्त्या वाऽस्ति कर्मणामुपयोगः। विविदिषुः खलु युक्त एकाग्रतया श्रवणमनने कर्तुमुत्सहते । ततोऽस्य तत्त्वमसि इति वाक्यान्निर्विचिकित्सज्ञानमुत्पद्यते " ( ब्रह्मसू० भा० भा० ३ । ४ । २६ )

" यथोक्तं कर्म सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति " ( के० उ० भा० १ । १ । १ )

इयं हि मुमुक्षूणां सोपानपरम्परा वेदान्तिभिरुपवर्णितेति तदनुयायिनामप्यस्ति नित्यकर्मणामननुष्ठाने प्रत्यवाय इति निरवद्यम् । एतेन कथमभावाद्भावोत्पत्तिरिति प्रलपन्तः परास्ता वेदितव्या इति शिवम् । इदानीं मुमुक्षूणां कर्माण्यनुष्ठेयानि न वेति चिन्तायामनुष्ठेयानीत्येवमुत्तरमीमांसायां निरणायि, अवोचंश्चात्र भगवत्पादाचार्याः—

" यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्ति यथाश्रमं सर्वाण्येवाऽऽश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि " ( ब्र० सू० भा० ३ । ४ । २७ )

"आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि " यावज्जीवमग्निहोत्रं जुहोति " इत्यादिना विहितत्वात् " इति । ( ब्र०सू०भा० ३।४।३२ )

वस्तुतस्तु मुमुक्षुर्वाऽमुमुक्षुर्वा भवतु विहितत्वादेवानुष्ठेयं कर्मेति मीमांसकानां सर्वतन्त्रगोचरः सिद्धान्तः । एवं च नित्यकर्मानुष्ठानप्रकारेतिकर्तव्यता सर्वोऽपि प्रादर्शि तत्तच्छास्त्रीयकल्पसूत्रेषु । अतः कल्पसूत्राणामपि वेदाङ्गत्वेनाध्ययनं स्वाध्यायवद्व्यवस्थितम् । विना तदध्ययनान्नानाशाखास्वाम्नातोऽनेककर्मोपष्टम्भको विध्यादिर्विध्यन्तश्च विप्रकीर्णस्वरूपोऽलसपुरुषैरल्पमत्या सुखेन बोद्धुमशक्य इति ज्ञात्वैव सूत्राणि प्राणैषीत्तत्तदाचार्यः । एवं च साङ्गश्चतुर्विधोऽपि विधिमन्त्रार्थवादनामधेयरूपो वेदो धर्मप्रमाणमिति ज्ञेयम् । तत्र विधिवाक्यानां विधायकत्वेनार्थवादानां स्तावकत्वेन मन्त्राणां स्मारकत्वेन नामधेयानां परिच्छेदकत्वेन सकलोऽपि वेदः प्रमाणमिति स्थितम् । एवं च ( १ ) स्वाध्यायोऽध्येतव्य

इति विधिचोदितषडङ्गसकलस्वशाखापरपर्यायवेदाध्ययनसंसिद्धार्थज्ञानवत्त्वमधिकारितावच्छेदकम्(२) यद्वा स्वाध्यायविध्युत्थापितानुष्ठेयमात्रोपयोगि स्वाध्यायार्थज्ञानवत्त्वमधिकारित्वम् (३) यद्वा तादृशवेदाध्ययनवत्त्वमेवाधिकारिविशेषणं नार्थज्ञानवत्त्वमेव। तृतीयेऽस्मिन्पक्षेऽर्थज्ञानाभावे कर्मण्यधिकारो नास्तीति वक्तुं न युक्तमिति याज्ञिककल्पानां पन्थाः। सोऽयं मीमांसया विरुध्यत इति पाष्ठे प्रपञ्चितमस्माभिरपि पूर्वं न ह्यविद्वानिति संस्तुतम्। अत्र मण्डनप्रभृतयो याज्ञिकाः पृथगेवाभिप्रयन्ति। यथा ननु स्वाध्यायोऽध्येतव्य इति विधौ वार्तिकेऽधीतेन स्वाध्यायेन फलवदर्थज्ञानं कुर्यादिति वाक्यार्थो मीमांसासारे चाधीतेन स्वाध्यायेन यच्छक्यं समीहितं तत्कुर्यादिति वाक्यार्थः स सर्वोऽप्यार्थिक. । वास्तविकस्तु स्वाध्यायोऽध्येतव्य इत्यस्मिन्वाक्येऽध्ययनकरणिकायां भावनायां स्वाध्यायस्य कर्मत्वम्। तच्च योग्यतया प्राप्यत्वं तेनाध्ययनेन स्वाध्यायं प्राप्नुयादिति मुख्योऽर्थः। नचानर्थकस्य प्राप्यत्वायोगाद्वाक्यान्तरेणार्थवत्त्वज्ञानादीदृशं वचनं युज्यते। अधीतेन स्वाध्याय यत्कर्तुं शक्नुयात्तत्कुर्यादिति वाच्यम्। तां चतुर्भिरभ्रिमादत्ते। उरु प्रथस्वेति प्रथयति। ऐन्द्र्या गार्हपत्यमुपतिष्ठते। इत्यादिश्रौतलैङ्गिकविनियोगाभ्यामर्थवत्तानिश्चयेन तत्कल्पनं युक्तमित्युत्पश्यामः। इति। ननु ये तु ब्रह्मचर्यादेव प्रव्रजन्ति तेषां कथं? ब्रूमः। ये किल परिव्राजो भवन्ति तेऽप्याश्रमादाश्रमान्तरमनुभूयैव। यः किल प्रत्यपायोपनिषदे परिव्राड्विधिः सोऽपि गृहस्थाश्रमविहितपरिव्राड्विधेरुत्कृष्यैवेति ब्रूमः। सोऽयं भगवताऽऽपस्तम्बेन लाट्यायनेन च स्वसूत्रे सूत्रितस्तमिमं प्रदर्शयामः—

**“ परिणह्याग्निमाधाय दृषद्वत्या दक्षिणेन कूलेनाऽऽग्नेयेनाष्टाकपालेन शम्या परासीयात् त्रिः प्लक्षं प्रति यमुनामवभृथमभ्यवैति । तदेव मनुष्येभ्यस्तिरो भवति ”। ( आ० श्रौ० सू० २३। १३। १५ )**

सोऽयमर्थः सर्वोऽपि लाट्यायनाचार्येण सूत्रितस्तमिमं प्रदर्शयिष्यामः—

**यत्र क्व च ततो दूरे यमुना स्यात्तत्रैतयेष्ट्येष्ट्वा स्वयं साम गायन्नवभृथमभ्यवेयादगायन्वा। प्रव्रजिष्यतोऽयनमिदं मन्य इति धानंजप्यस्तदेव मनुष्येभ्यस्तिरो भवतीति। न ग्रामं पुनरेयादितीव। स्वर्गं लोकमाक्रमते। व्यावर्तते श्रेयान्भवतीति वा। उदकान्तधानाद्वा यथा सरजस इति। ( ला० श्रौ० सू० १०। १९। १०। १५ )**

अयमत्र तात्पर्यार्थः—सत्रनामकं किंचिदनुष्ठीयमानं नित्यं कर्म तत्र च कर्मान्तेऽवभृथः सूत्रितः स च यमुनायाम्। यदि यमुना दूरे स्यात्तर्हि यस्मिन्कस्मिंश्चिद्देशे इष्टिमिष्ट्वा स्वयं साम गायन्नवभृथमभ्यवेयात्। तदेव मनुष्येभ्यस्तिरो भवतीति एष तिरोभावस्तस्य यन्नित्यमरण्ये वसन्न मनुष्यैर्दृश्यते न मनुष्यैरुपलभ्यते स्वर्गलोकमा-

क्रान्त इव भवति। अथवा व्यावर्तत एवासौ मनुष्येभ्यो नासौ मनुष्यैस्तुल्यो भवति श्रेयान्भवति किं पुनर्मनुष्येभ्यः श्रेयो ब्रह्मप्राप्तिः। ब्रह्म प्राप्नोत्यनेन कर्मणाऽपवृज्यत इत्यर्थः। अयमात्यन्तिकस्तिरोभावः। अथवा तिरोभाव उदकान्तर्धानाद्यदाऽसावभृथमभ्यवैत्यप्सु निमज्जति तदाऽसावन्तर्हितो भवति न दृश्यते तस्मादुदकान्तर्धानात्तिरो भवति यथा सरजस इति दृष्टान्त उपादीयते। यथा सरजसेऽहनि मनुष्यलोकादिवैनमन्तर्दधातीति। सोऽयमर्थ औपनिषदैरुपबृंहितः। तथा च श्रौते कर्मणि सत्रान्ते द्वयमवगतं प्रव्रजनमुदकान्तर्धानं च। तदानुषङ्गिक अरण्यवास इष्टिश्च। अत एवेमामिष्टिं विरजेष्टिमिति ब्रह्मवादिन आहुः। भाषित एषोऽर्थो भङ्ग्यन्तरेण भगवत्पादाचार्यैरीशावास्योपनिषद्भाष्ये—

**"न जीविते मरणे वा गार्धि कुर्वीत, अरण्यमियात्, इति च पदम्"। पदं शास्त्रविधिः। "ततो न पुनरेयादिति च संन्यासशासनात्"** (ई० उ० भा० २)

प्रव्राजिष्यत इमे विधय इमे निषेधा इति तद्विषय औपनिषदैरित एवाऽऽकृष्योपबृंहितो विषयः पुनः स्मृतिकारैर्निबन्धकृद्भिश्च परां काष्ठामापादितः सर्वैरपीदानीमङ्गी क्रियते सोऽयं भगवत्याः श्रुतेर्महिमेति तं नमामो वयं शरणीभूतां भगवतीं विश्ववन्द्यामखिललोकसंतारिणीं भूदेवाननकाननसंचारिणीं पण्डिताननान्तःपुरविहारिणीं चञ्चलायाः श्रियो द्वेष्ट्रीमाम्नायापरनाम बिभ्रतीं श्रुतिम्। अत एव पण्डितप्रकाण्डभूतैः पूज्यपादैः सकललोकगुरुभिर्महता कौशल्येन शारीरकमीमांसायां संन्यासोऽभिहित इति मन्तव्यम्। परं यथाश्रममित्युक्तत्वादृगृहिणस्तावदग्निहोत्रादिकमवश्यमनुष्ठेयमापद्यमानं नापलपितुं शक्यं यत्किंचिज्ज्ञैरिति विदन्तु सुधियः। एतेनेदमपि सिद्धं भवति नानाहिताग्निर्म्रियेतेति शासनादाहिताग्निमात्रेण शरीरं संस्कृतं भवति तैरेवाग्निभिर्दाहः प्रतिपत्तिकर्म। उपयुक्तानामग्नीनामुपयुक्तस्य च शरीरस्यायं संस्कारः। अतोऽपि देशान्तर आहिताग्निमरणे शरीरानुपलब्धौ पालाशविधिः कल्पकारैराम्नातः। पर न्यायतो वचनाच्च यद्युदकान्तेधानं तर्हि पालाशविधिना शरीरं नोत्पादयेत्। अत एव त्रिकाण्डमण्डनोऽपि वामनमतं श्लोकयांबभूव—

**"त्रिंशद्दिनादिभिर्वाऽग्निहोत्राद्युपरमोऽस्त्विति। वेदान्ते पुरुषार्थाधिकरणे प्राह वामनः"** ॥ १–१०३ मण्डनाचार्यः।

एतेन समुच्चयवादः प्रत्युक्तो वेदितव्यः। द्विजत्वविशिष्टगृहस्थत्वावच्छिन्नमुद्दिश्याग्निहोत्रानुष्ठानं वदामः। न हि ब्राह्मणत्वावच्छिन्नमुद्देश्यं संभवति समुच्चयवादिनां मते तु केवलमग्निहोत्रायैव त्यज्यते विद्यमानामपि धर्मपत्नीं परित्यज्य विधुरवदटाट्यमाना भवन्ति तच्च सकलश्रुतिस्मृतिपुराणेतिहासशिष्टाचारमीमांसाविरुद्धमिति वेदितव्यम्। सुस्पष्टं चैतत् सर्वमतस्त्वितरदिति शारीरकमीमांसायामित्युपरम्यते। प्रदर्श्यन्ते नित्यत्ववादिन्यः

प्रमाणसरण्यः । ताश्च स्मृतयो नित्यकर्मणामकरणे दोषं स्मारयन्ति तस्मादवश्य-मनुष्ठेयत्वम् ।

**" निर्धनो धनसाध्येषु नित्येष्वधिकृतो यदि । चौर्यादन्यैः कुमार्गैरपीष्ट्यर्थं धनमर्जयेत् " । १-१०८ मण्डनाचार्यः " ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते । नित्यानि निन्दावाक्यानि काम्यहोमविवक्षया" । १-११० "आवश्यके तु सोमादौ सर्वसंभारसंभृते । सुवर्णव्यतिरिक्ताङ्गद्रव्यालाभे हि चोरयेत् १-१-१११ अप्यन्यायशतं कृत्वा भर्तव्या मनुरब्रवीत्" । विहितत्वाच्चाऽऽश्रमकर्मापि । ( उत्तरमीमांसायाम् । ३ । ४ । ३२ )**

इदमत्र पर्यवसन्नम् । ये शूद्रादिति मन्वायुक्तं निन्दावचनं काम्यहोमविषयं न नित्यकर्मविषयम् । तेषां करणश्रवणस्य बलीयस्त्वात्स्मृतेश्च तदपेक्षया दौर्बल्यात् । सर्वसंभारसमृद्धौ सुवर्णभिन्नदेयदक्षिणालाभे तु चौर्यमपि कृत्वा नित्यं सदक्षिणं कार्यं नादक्षिणो यज्ञो भवतीत्याम्नायात् । अप्यन्यायेति स्मृतेः पोष्यान्तर्गतत्वाच्चाग्नीनां नित्यमनुष्ठानमेवेत्यर्थः । इदं त्वत्रापरं न विस्मर्तव्यम् । ये त्वेतां स्मृतिमुदाहृत्य

**" आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः । हन्त्यल्पदक्षिणो यज्ञो तस्मान्नाल्पधनो यजेत् " ।**

अल्पदक्षिणं यज्ञं नाऽऽरभेतेति वदन्ति तदेतद्वचनं काम्ययज्ञविषयमिति ।

**यस्य नित्यानि लुप्तानि तथैवाऽऽगन्तुकानि च । विपद्यपि न स स्वर्गं गच्छेत्तु पतितो हि सः । तस्मात्कन्दैः फलैर्मूलैर्मधुनाऽऽज्यरसेन वा । नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेत् ।**

इति बौधायनवचोभ्यां ज्ञायते । ये चान्ये यथा विद्वत्त्वमधिकारितावच्छेदकं तथा-आढ्यत्वमप्यधिकारितावच्छेदकमित्याहुस्तदपि काम्यपरमिति ज्ञेयम् । एवं हि तत्र समभिव्याहरन्ति

**" इन्द्रियाणि यशः कीर्तिमायुः स्वर्गं प्रजां पशून् " इति ।**

अतः कन्दैर्मूलैः फलैर्वाऽपि होतव्यमेवाग्निहोत्रं न सर्वथा परित्याज्यमिति संसिद्धं विदुषां संसदि । अविद्वांसस्तु यथा तथा वा जल्पन्तोऽनया प्रक्रियया विद्वत्संसदा प्रत्युक्ता वेदितव्याः । तदिदमग्निहोत्रं यजुषा विधीयते । तत्रैव तस्योत्पत्तिविधिं समामनन्ति—

**" अग्निहोत्रं जुहोति " इति ।**

ननु कस्तावदयमुत्पत्तिविधिर्नाम । उच्यते । कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । द्रव्यं देवता च यागस्वरूपं देवतामुद्दिश्य त्यक्तस्य द्रव्यस्य प्रतिपत्तिरग्नौ प्रक्षेपो होम इत्याचक्षते । केचिद्धोमान्तं यागस्वरूपं वर्णयन्ति । उत्पत्तिविधिरेव प्रबलः । तदिदमुत्पत्तिविधिलक्षणम्—

अङ्गबोधकत्वसमानाधिकरणात्यन्ताभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वत्वपर्याप्त्यवच्छेदकताकप्रतियोगिताकाभाववदङ्गबोधकवाक्यनिष्ठनिरूपकतानिरूपितानिरूप्यताशालिप्राबल्यमित्यस्मद्गुरुचरणा व्याचख्युः।

अतोऽग्निहोत्रतदङ्गप्रायश्चित्तं दक्षिणाग्नावेव वचनादाहवनीये तदभावे दक्षिणाग्नौ। तदिदं सूच्यत आचार्येण—

"ऋक्तश्चेद्भूरिति गार्हपत्ये। यजुष्टो भुव इति दक्षिणे। सामतः स्वरित्याहवनीये"। (आश्वलायनश्रौतसू० १।१२।३२)

तानि चाङ्गानि यजुष एव समुपसंहृत्य साङ्गमग्निहोत्रप्रयोगं कलयामास तत्तत्सूत्रकारः। वेदार्थमेव प्रवृत्तानां कल्पसूत्राणामव्याहतमेव प्रामाण्यम्। ते च कल्पसूत्रग्रन्थाः परिनिष्पन्नप्रयोगरूपकस्योपदेशकाः। अतः पदार्थरूपोपदेशमात्रप्रयोजनो वैदिक एवायमर्थ इति विहितत्वादेवानुष्ठेय आदर्तव्यश्चाभ्युदयनिःश्रेयसार्थिभिः सकलपुरुषार्थसिद्धय इति दर्शनान्तरम्। तेषु सूत्रग्रन्थैरिदमत्र प्रधानम्। एतान्यङ्गानीयमितिकर्तव्यता। एवं साध्यसाधनरूपेण मर्यादया श्रुतिसिद्धया प्रपञ्चितम्।

"योगापत्तिं वक्ष्यामः"

इत्याचार्येणाग्निहोत्रं सूत्रितं तदत्रोपनिबध्नीमः।

यद्यप्येतदानीमध्येत्रध्यापकपरम्परयोपलभ्यमानं सुसंरक्षितं तैत्तिरीयशतपथैतरेयान्यतमब्राह्मणमग्निहोत्रविषय उदाहर्तुं सुशकं तथाऽपि भगवद्भिः प्रयोगशास्त्रप्रणेतृभिः कतमद्ब्राह्मणं स्वीकृत्य प्रणायि प्रयोगशास्त्रमिति न वयमिदंतया परिच्छेत्तुं पारयामः। न हि च तत्तत्प्रयोगशास्त्रकृद्भिस्तत्तत्प्रयोगशास्त्रे प्रयुक्तान्यङ्गानि प्रधानानि च यथावदुपरिनिर्दिष्टब्राह्मणे समुपश्रूयन्ते। इति ब्राह्मणनिदर्शनाद्विरताः सन्तः प्रयोगशास्त्रमेव पुरस्कृत्य तत्प्रयोगमीमांसनं वरमिति तन्निदर्शनाय प्रयोगशास्त्रकृत एव शरणीकुर्मः। अपरिच्छिन्नोऽप्ययं साङ्गः समाम्नायः शब्दसमूहरूपेण वर्तमानोऽग्रे शाखया परिच्छिन्नो बभूव। ततोऽप्यग्रे मन्त्रब्राह्मणरूपेणाविर्भूतत्। ततोऽप्ययं मण्डलकाण्डसूक्तानुवाकरूपाण्यनुससार। ततोऽप्यग्र इदानीमुपलभ्यमानस्वरूपोऽयमष्टकाध्यायवर्गर्क्षरूपेण व्यभाजि भगवता कात्यायनेन महर्षिणेति कालवशात्खलु विपरिवर्ततेऽयं समाम्नायोऽध्ययनाध्यापनानुष्ठानानुष्ठापनसौकर्यायेति साक्षादाम्नायाम्नातपथानुसरणं दुरवगाहमिति जानानाः प्रयोगशास्त्रानुसरणमेवास्मद्बुद्धिगोचरं वरमिति मन्वानास्तदेवात्र निर्दिशामः।

---

# आश्वलायनीयाग्निहोत्रसूत्रम् ।

उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैकयोनय इत्येके ध्रियमाणं वा प्रज्वल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेद्देवं त्वा देवेभ्यः श्रिया उद्धरामीत्युद्धरेदुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार । अह्ना यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मादिति प्रणयेदमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ । तयाऽनन्तं कामसहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुख एवं प्रातर्व्युष्टायां तमेवाभिमुखो रात्र्या यदेन इति तु प्रणयेदस्त ऊर्ध्वमाहिताग्नेर्व्रतचार्याहोमादनुदितहोमी चोदयादस्तमिते होमो नित्यमाचमनमृतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत्त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायाऽऽनन्तर्ये विकल्पो दक्षिणं त्वेव प्रथमं विज्ञायते पिता वा एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीयस्तस्मादेवं पर्युक्षेद्गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुमन्विहीत्याहवनीयात्पश्चाद्गार्हपत्यस्योपविश्योदगङ्गारानपोहेत्सुहुतकृतः स्थ सुहुतं करिष्यथेति तेष्वग्निहोत्रमधिश्रयेदधिश्रितमस्यधिश्रितमधिश्रितं हि ३ म् इति । इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा न दध्यधिश्रयेदधिश्रयेदित्येके ॥ २ ॥

पयसा नित्यहोमो यवागूरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानामधिश्रितमवज्वलयेदनधिश्रयं दध्यग्निष्टे तेजो मा हार्षीरिति स्रुवेण प्रतिषिञ्चयाच्च वा शान्तिरस्यमृतमसीति तयोरव्यतिचारः पुनर्ज्वलता परिहरेत्त्रिरन्तरितं रक्षोऽन्तरिता अरातय इति समुदन्तं कर्षन्निवोदगुद्वासयेद्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति निदधत्सुहुतकृतः स्थ सुहुतमकार्ष्टेत्यङ्गारानतिसृज्य स्रुक्स्रुवं प्रतितपेत्प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इत्युत्तरतः स्थाल्याः स्रुचमासाद्योन्नयानीत्यतिसर्जयीताऽऽहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैनत्स्रुवेणोन्नयेत्यतिसृजेदतिसृष्टो भूरिळा भुव इळा स्वरिळा भूर्भुवः स्वरिळेति स्रुवपूरमुन्नयेदग्निप्रमथिश्रयं पूर्णतमं योऽनुज्येष्ठमृद्धिमिच्छेत्पुत्राणां योऽस्य पुत्रः प्रियः स्यात्तं प्रति पूर्णमुन्नयेत्स्थालीमभिमृश्य समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा प्राणसंमितामाहवनीयसमीपे कुशपूतमाय जान्वाच्य समिधमादध्याद्रजतां त्वाऽग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहेति समिधमाधाय विद्युदसि विद्य मे पाप्मानमग्नौ अर्थैयप उपस्पृश्य प्रदीप्तां द्व्यङ्गुलमात्रेऽभिजुहुयाद्भूर्भुवः स्वरो३मग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति पूर्वामाहुतिं हुत्वा कुशेषु सादयित्वा गार्हपत्यमवेक्षेत पशून्मे यच्छेत्यथोत्तरां तूष्णीं भूयसीमसंसृष्टां प्रागुदगुत्तरतो वा प्रजापतिं मनसा ध्यायात्तूष्णींहोमेषु सर्वत्र भूयिष्ठे स्रुचि शिष्ट्वा त्रिरनुप्रकम्प्यावमृज्य कुशमूलेषु निमार्ष्टि पशुभ्यस्त्वेति नेषा दक्षिणत उत्ताना अङ्गुलीः करोति प्राचीनावीती

तूष्णीं स्वधा पितृभ्य इति वाऽपोऽवनिनीय वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धेत्यप उपस्पृश्याऽऽहिताग्निरनुमन्त्रयेताऽऽधानमुक्त्वा तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेति समिधं ता अस्य सूददोहस इति पूर्वामाहुतिमुपोत्थायोत्तरां काङ्क्षेतेक्षमाणो भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैरग्नेयीभिश्वाग्न आयूंषि पवस इति तिसृभिः ॥ ३ ॥

संवत्सरे संवत्सरे यवाग्वा पयसा वा स्वयं पर्वणि जुहुयादृत्विजामेक इतरं कालमन्तेवासी वा स्पृष्टोदकमुदङ्ङावृत्य भक्षयेदपरयोर्वा हुत्वाऽऽयुपे त्वा प्राश्नामीति प्रथममन्नाद्याय त्वेत्युत्तरं तूष्णीं समिधमाधायाग्नये गृहपतये स्वाहेति गार्हपत्ये नित्योत्तरा तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेति दक्षिणेऽग्नयेऽन्नादायान्नपतये स्वाहेति वा नित्योत्तरा भक्षयित्वाऽभ्यात्ममपः स्रुचा निनयते त्रिः सर्पदेवजनेभ्यः स्वाहेत्यथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः प्रागुदीच्योर्निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तऋषिभ्यः स्वाहेतरजनेभ्यः स्वाहेति पञ्चमीं कुशदेशे पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहेति षष्ठीं पश्चाद्गार्हपत्यस्य प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहेति प्रताप्यान्तर्वेदि निदध्यात्परिकर्मिणे वा प्रयच्छेदग्रेणाऽऽहवनीयं परीत्य समिध आदध्यात्तिस्रस्तिस्र उदङ्मुखस्तिष्ठन्प्रथमां समन्त्रामाहवनीये दीदिहीति गार्हपत्ये दीदायेति दक्षिणे दीदिदायेत्युक्तं पर्युक्षणं ताभ्यां परिसमूहने पूर्वे तु पर्युक्षणादेवं प्रातरुपोदयं व्युषित उदिते वा सत्यऋताभ्यां त्वेति पर्युक्षणमोमुन्नेष्यामीत्यतिसर्जनं हारिणीं त्वा सूर्यज्योतिषमहीरिष्टकामुपदधेस्वाहेति समिदाधानं भूर्भुवः स्वर्गो ३ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति होम उन्मार्जनं च ॥ ४ ॥

---

# वृत्तिसमेतमाश्वलायनीयाग्निहोत्रसूत्रभाष्यम्।

**उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैकयोनय इत्येके ध्रियमाणं वा प्रज्वल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत् ॥ १ ॥**

**देवत्रातभाष्यम्**—उत्सर्ग आधानाद्द्वादशरात्रमजस्रा अत ऊर्ध्वमपि गतश्रियोऽजस्रा एवातोऽन्यस्योत्सर्ग एकस्याग्नेर्द्वयोर्वा तस्मिन्नुत्सर्गे सत्यग्न्युद्धरणविधानं वक्ष्यतेऽपराह्णेऽह्नश्चतुर्थभागे गार्हपत्यं प्रज्वल्य गार्हपत्य एवाजस्रो भवति तं प्रज्वल्य प्रज्वलनमिष्टमन्यथा संबोध्येति वृथात्तत्प्रज्वलनेन दक्षिणाग्निं प्रज्वल्य यद्यग्न्याधेय आहृतो भवति तं दक्षिणाग्निमानीयाऽऽहवनीयमुद्धरेदित्यध्याहर्तव्यं साकाङ्क्षत्वाद्वाक्यस्य। दक्षिणाग्निरिति आनयनोत्तरस्य संज्ञा कृता। विट्कुलं वैश्यकुलं वित्तवतो वा वित्तमस्यास्तीति वित्तवांस्तस्माद्वित्तवतः कुलाद्वा। एकयोनय इत्येके। एका योनिर्येषां त इम एकयोनयः। गार्हपत्यादाहवनीयं प्रणयेत्। गार्हपत्याद्दक्षिणाग्निमाहवनीयं चैक आचार्याः। तथैवाऽऽहिता भवन्ति तेषां ध्रियमाणं वाऽऽधानप्रभृति धार्य एव वा भवति ध्रियमाणं वा दक्षिणाग्निं प्रज्वल्य प्रज्वलनमिष्टं विधीयते प्रज्वल्याऽऽहवनीयमुद्धरेदित्यध्याहर्तव्यं साकाङ्क्षत्वात्। अरणिमन्तं वा, अरणी अस्य विद्येते अरणिमान् दक्षिणाग्निस्तमरणिमन्तं वा दक्षिणाग्निं मथित्वाऽऽहवनीयमुद्धरेदित्यध्याहर्तव्यं साकाङ्क्षत्वात्। यदि मथित्वाऽऽहितो भवति तत्रैषामन्यतमकल्पेनाग्निं प्रज्वल्य गार्हपत्यादाहवनीयसंज्ञमग्निं प्रज्वलन्तमेवोद्धरेदुद्धृत्य हरेत् प्राचीं दिशं दक्षिणाग्न्यधिकारात्पुनर्गार्हपत्यग्रहणम्। इह हरेदित्युक्त्वा पुनरुद्धरेदिति वक्ष्यति तस्मात्तूष्णीमुद्धरणम् ॥ १ ॥

**गार्ग्यनारायणवृत्तिः**—उत्सर्गेऽजस्रोत्सर्गेऽग्निहोत्रहोमार्थं विहरेन्नाजस्रेषु। होमस्त्वजस्रेष्वपि भवतीत्युक्तम्। एवं स्थिते विहरणसहितमग्निहोत्रहोमप्रयोगं वक्तुकाम उत्सर्ग इत्युक्तवान्। अत्र पराह्णशब्देनाह्नश्चतुर्थभागो गृह्यते। विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत्। चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहाद्गार्हपत्याद्वा। नित्यधार्यश्चेत्प्रज्वलयेत्। काले काले यदि निर्मथ्यस्तदा मन्थेत्। एषां प्रकाराणामुत्पत्तिवशाद्व्यवस्था। तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्याज्ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत्। पात्रान्तरेण पृथक् कुर्यादित्यर्थः ॥ १ ॥

**देवं त्वा देवेभ्यः श्रिया उद्धरामीत्युद्धरेत् ॥ २ ॥**

**दे० भाष्यम्**—प्रवत्स्यद्यजमानादिपूत्तरत्र सर्वत्र समन्त्रहोमार्थमेव देवं त्वा देवेभ्य इति तेन यथासमाम्नातेन मन्त्रेण होमार्थमाहवनीयमुद्धरेत् । पूर्वमुद्धरणममन्त्रं सर्वार्थमित्युक्तम् । अथोद्धराऽऽहवनीयमित्यपराह्ण आहेत्युक्तं ब्राह्मणे तद्यजमान आह यदि संनिहितो भवति नोक्तमाचार्येण तथाऽपि वक्तव्यमविरोधात्सर्वशाखाप्रत्ययत्वाच्च यजमानस्य ॥ २ ॥

**वृत्तिः**—अनेन मन्त्रेणाग्निहोत्रार्थमुद्धरेत् । पूर्वस्योद्धरेदिति वचनस्येदं प्रयोजनं गार्हपत्यं प्रज्वलयेत्यादेराहवनीयं ज्वलन्तमुद्धरेदित्यन्तस्य मन्त्रवर्जितोद्धरणप्रकारस्य सर्वार्थत्वज्ञापनम् । एवं सर्वार्थमुद्धरणं विदधतैतत्साधितं भवति—येनाग्निना यत्र प्रयोजनं तत्र तस्योद्धरणं कर्तव्यमिति । शास्त्रान्तरे स्पष्टं वचनमस्ति 'अर्थायार्थायाग्निं प्रणयति' इति । उद्धरणमन्त्रोऽयमग्निहोत्र एव नान्यत्रेति सिद्धम् ॥ २ ॥

**उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार । अह्ना यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मादिति प्रणयेत् ॥ ३ ॥**

**दे० भाष्यम्**—उद्ध्रियमाण इत्येतेन यथासमाम्नातेन मन्त्रेणाऽऽहवनीयं प्रणयेन्नयेदाहवनीयायतनसमीपे ॥ ३ ॥

**वृत्तिः**—प्रणयेत्प्राङ्नयेदग्निमाहवनीयं प्रत्यनेन मन्त्रेण ॥ ३ ॥

**अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ । तयाऽनन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुखः ॥ ४ ॥**

**दे० भाष्यम्**—अमृताहुतिमित्येतेन स्वाहाकारान्तेनाऽऽहवनीयायतनेऽग्निं निदध्यात् स्थापयेदादित्यमभिमुखो यस्यां दिश्यादित्यो भवति प्रतीच्यामवान्तरदिशि तमभिमुखो वा निदध्यात् । तन्मुखे निधत्त इति श्रुतिः । यज्ञ एव तत्स्वर्गे लोके स्वर्गं लोकं निधत्त इति च श्रुतिस्तस्मादादित्यमभिमुख इत्याह । होमन्यायेन निदध्यादमृतायां जुहोमीति दर्शनात् । एते त्रयो मन्त्राः । त्रीणि कर्माणि उद्धरणं, प्रणयनं, निधानमिति ॥ ४ ॥

**वृत्तिः**—आदित्याभिमुखो भूत्वाऽनेन मन्त्रेणाऽऽहवनीयायतनेऽग्निं निदध्यादित्यर्थः ॥ ४ ॥

**एवं प्रातर्व्युष्टायां तमेवाभिमुखः ॥ ५ ॥**

**दे० भाष्यम्**—एवं प्रातर्गार्हपत्यं प्रज्वलयेत्येवमादि य उक्तो विधिरेवं तेनैव विधिना प्रातःकाले होमार्थं विहरेत् । रात्रेश्चतुर्थकालाद्यादित्यस्य प्रथमकालात्प्रातःकालो भवति तस्मिन्प्रणयने प्रातरिष्टकालनियमो विधीयते । व्युष्टायां व्युष्टायामेव विहरेत् । **व्युष्टायामुषस्युदितायामुषसि** तमेवाभिमुखो निदध्यात्प्राच्यां दिश्यवान्तरदिशायां यस्यां

दिश्यादित्यो भवति तमेवाभिमुखो निदध्यात् । एवं प्रातरिति प्रातेऽपि पुनरुच्यते तदानीमादित्यस्याभावादादित्याभिमुख इत्येतस्यार्थाल्लोपः स्यात् ॥ ५ ॥

**वृत्तिः**—एवमेव प्रातर्होमार्थमप्युदित आरभ्य निधानान्तं कुर्यात् । तमेवाभिमुखो निधीयमानाहवनीयाभिमुख इत्यर्थः । एवं सति प्रातःकाल आहवनीयायतनात्पश्चात्स्थितेन निधानं भवति । सायं तु पुरस्तात्स्थितेन व्युष्टायामुपस्युदितायामादित्योदयात् प्राक् ॥ ५ ॥

**रात्र्या यदेन इति तु प्रणयेत् ॥ ६ ॥**

**दे० भाष्यम्**—एवं प्रातरिति यथाम्नातो प्राप्त इहाऽऽरम्याह्ना यदेन इत्येतस्य स्थाने रात्र्या यदेन इत्यूह्य प्रणयेत् । तुशब्दो विशेषणार्थः—अयं तु विशेषोऽन्यत्समानमिति । तुशब्देऽक्रियमाण एतावानेव प्रणयनमन्त्रः स्यात् प्रणयेदिति वचनात् । प्रणयनमन्त्रस्योहो भवति । अन्यथा विधानार्थं तमेवाभिमुखो रात्र्या यदेन इत्याम्नानात् ॥ ६ ॥

**वृत्तिः**—प्रणयनमन्त्रेऽह्ना यदेन इत्यस्य स्थाने रात्र्या यदेन इति कर्तव्यं प्रातःकाले ॥ ६ ॥

**अत ऊर्ध्वमाहिताग्निर्व्रतचार्याहोमात् ॥ ७ ॥**

**दे० भाष्यम्**—अत ऊर्ध्वमतोऽस्मादुद्धरणादूर्ध्वमाहिताग्निर्यजमानो व्रतचारी भवति व्रतचारीति कर्मनामधेयमग्निकर्मैव चरति नित्यवदाचरत्या होमसमाप्तेश्चातुर्मास्यादिषु व्रतान्यादिष्टान्येवमिहानादिष्टानि तस्मात्कर्मैव व्रतमुपदिशन्त्येतदेव व्रतं पत्न्या अपि समानम् ॥ ७ ॥

**वृ०**—सत्रिधर्माश्चातुर्मास्यव्रतानि चात्र व्रतशब्देनोच्यन्ते । विहरणादूर्ध्वमाऽग्निहोत्रप्रयोगसमाप्तेर्व्रतचारी भवत्याहिताग्निः ॥ ७ ॥

**अनुदितहोमी चोदयात् ॥ ८ ॥**

**दे० भाष्यम्**—अनुदितहोमी च व्रतचारी भवति समाप्ते होम आदित्योदयादनुदितहोमी, अनुदित आदित्ये जुहोति, अनुदितहोमी च व्रतचारी भवत्याहोमादिति प्राप्त ओदयाद्भवति हुतेऽपि होमे ॥ ८ ॥

**वृत्तिः**—अनुदितहोमी चेत्समाप्तेऽपि प्रयोग ओदयाद्व्रतचारी भवेत् ॥ ८ ॥

**अस्तमिते होमः ॥ ९ ॥**

**दे० भा०**—अस्तमित आदित्ये होमकाल उदितेषु नक्षत्रेषु सायमित्यन्येषाम् ॥९॥

**वृत्तिः**—कर्तव्यः । अङ्गान्यपि प्रधानकाल एव कर्तव्यानि । यत्पुनरङ्गं विहरणवत्स्वकालविशिष्टं तत्स्वकाल एव कर्तव्यम् ॥ ९ ॥

**नित्यमाचमनम् ॥ १० ॥**

**दे० भाष्यम्**—नियतं होमकाले प्रयतस्यापि कर्माङ्गमाचमनं विधीयते ॥ १० ॥

**वृत्तिः**—उक्तं प्राङ्मुखस्याऽऽचमनं यत्पुरस्तात्तदिदानीं कर्तव्यमस्याङ्गत्वाय ॥१०॥

**ऋतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत्त्रिस्त्रिरेकैकं पुनः पुनरुदकमादाय ॥ ११ ॥**

**दे० भाष्यम्**—कर्ता, ऋतसत्याभ्यामित्येतं मन्त्रं जपित्वा पारि समन्ततः पर्युक्षेत् सिञ्चेत् त्रिस्त्रिरेकैकमग्निं पुनः पुनरुदकमादाय गृहीत्वोक्त्वेत्यर्थः। जपित्वावचनं प्रातर्होमार्थं सत्यऋताभ्यां त्वेति पर्युक्षणमित्यत्र यथाम्नातं प्राप्नोति। अनुक्रमे विकल्पः। पर्युक्षामीति न प्राप्नोति जपित्वावचनात् पर्युक्षामीतिशब्दमुक्त्वा पर्युक्षेदिति सिद्धं सकृद्गृहीतेनापि पर्युक्षणं प्रसज्येत तस्मात्पुनः पुनरुदकमादायेत्युच्यते ॥ ११ ॥

**वृत्तिः**—पर्युक्षणमन्त्रमपि जपित्वा पर्युक्षेदिति पृथक्क्रियते पर्युक्षणातिदिष्टे परिसमूहने मन्त्रो मा भूदिति। त्रिरेकैकमित्येतावतैवैकैकस्याग्नेस्त्रिस्त्रिःपर्युक्षणे सिद्धे त्रिस्त्रिरिति वीप्सावचनं मन्त्रस्यापि त्रिरावृत्तिर्भवत्वित्येवमर्थम्। पुनः पुनरुदकमादायेतिवचनं न सकृद्गृहीतेन त्रिः पर्युक्षेदित्येवमर्थम् ॥ ११ ॥

**आनन्तर्ये विकल्पः ॥ १२ ॥**

**दे० भाष्यम्**—आनन्तर्येऽनुक्रमे विकल्पो नानाकल्पो विकल्पो विहारानुक्रमेण गार्हपत्यमथ दक्षिणाग्निमथाऽऽहवनीयं होमानुक्रमेण वाऽऽहवनीयमेवाग्रेऽथ गार्हपत्यमथ दक्षिणाग्निमिति ॥ १२ ॥

**वृत्तिः**—अग्नीनां पर्युक्षणादिषु कर्तव्येषु केनाऽऽनन्तर्येण कर्तव्या इत्यानन्तर्यविशेषे ज्ञातव्येऽनेन सूत्रेणाग्नीनामुत्पत्तिक्रमस्य होमक्रमस्य च विकल्पो विधीयते ॥ १२ ॥

**दक्षिणं त्वेव प्रथमं विज्ञायते पिता वा एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीयस्तस्मादेवं पर्युक्षेत् ॥ १३ ॥**

**दे० भाष्यम्**—दक्षिणं त्वेव दक्षिणाग्निं त्वेव प्रथमं प्रथमं पर्युक्षेत्। अथ गार्हपत्यमथाऽऽहवनीयम्। तुशब्दो विकल्पाधिकारव्यावृत्त्यर्थः। एवशब्दोऽवधारणार्थः। अवधारणात्पूर्वो विधिर्न क्रियते। दक्षिणं त्वेव प्रथमं कस्मादिति। वचनाद्विज्ञायते श्रूयते पिता वैष पिता किल भवत्यग्नीनां सर्वेषां यो दक्षिणाग्निस्तस्य पुत्रो गार्हपत्याग्निः पौत्र आहवनीयस्तस्मादेवं यथावृद्धानुक्रमेण पर्युक्षेत् ॥ १३ ॥

**वृत्तिः**—पर्युक्षेत्। पर्युक्षणेऽयमेव क्रमो दक्षिणाग्निं गार्हपत्यमाहवनीयमिति। तत्र श्रुतिमेव हेतुमुपन्यस्य तस्मादेवं पर्युक्षेदित्युपसंहृतम्। तेन पर्युक्षणातिदिष्टे परिसमूहनेऽयमेव क्रमः। अन्यत्र पूर्वोक्तो विकल्पः। अत्र विनिवेशः प्रधानात्पूर्वेषामुत्पत्तिक्रमः परेषां प्रधानक्रम इति ॥ १३ ॥

**गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुमन्विहीत्याहवनीयात् ॥ १४ ॥**

**दे० भाष्यम्**—गार्हपत्यादारभ्याविच्छिन्नां कमण्डलुनोदकधारां हरेन्नयेत् । तन्तुं तन्वन्नेतेन मन्त्रेणाऽऽहवनीयाद्यावदाहवनीयं प्राप्नोति ॥ १४ ॥

**वृत्तिः**—अयमाकारो मर्यादायामग्न्युपघातविरोधात् ॥ १४ ॥

**पश्चाद्गार्हपत्यस्योपविश्योदगङ्गारानपोहेत्सुहुतकृतः स्थ सुहुतं करिष्यथेति ।**

**दे० भाष्यम्**—पश्चादपरस्यां दिशि गार्हपत्यस्याग्नेः पश्चादुपविश्याऽऽध्वर्यवत्वान्निरसनोपवेशने न भवतः । उदगुदीच्यां दिश्यङ्गारानपोहेदपनयेत् । सुहुतकृतः स्थेत्यनेन मन्त्रेण ॥ १५ ॥

**वृत्तिः**—पश्चाद्गार्हपत्यस्य तूष्णीमेव दक्षिणोत्तरिणोपस्थेनोपविश्य गार्हपत्यात्कतिपयानङ्गारानुदक्पृथक्कुर्यादधिश्रयणार्थम् ॥ १५ ॥

**तेष्वग्निहोत्रमधिश्रयेदधिश्रितमध्यधिश्रितमधिश्रितं हि ३म् इति ॥ १६ ॥**

**दे० भाष्यम्**—तेष्वङ्गारेषु समिद्धेष्वग्निहोत्रद्रव्यमधिश्रयेदभ्युपश्रयेत् स्थापयेदधिश्रितमित्यनेन मन्त्रेण ॥ १६ ॥

**वृत्तिः**—तेष्विति । पृथक्कृतेष्वङ्गारेष्वित्यर्थः । अग्निहोत्रमिति होमसाधनभूतं द्रव्यमुपचर्यते ॥ १६ ॥

**इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा ॥ १७ ॥**

**दे० भाष्यम्**—इळायास्पदमित्यनेन मन्त्रेण वा विकल्पः ॥ १७ ॥

**वृत्तिः**—अनेन वा मन्त्रेणाधिश्रयेत्पूर्वेण वेति विकल्पविधिः ॥ १७ ॥

**न दध्यधिश्रयेदधिश्रयेदित्येके ॥ १८ ॥**

**दे० भाष्यम्**—पयआदीनि दश द्रव्याणि तेषां सर्वेषामविशेषवचनादधिश्रयणे प्राप्ते प्रतिषेधो न दध्यधिश्रयेत्, दधि नाधिश्रयेत्, अधिश्रयेदित्येके । दध्यधिश्रयेदित्यधिश्रयणे प्राप्ते न दध्यधिश्रयेदिति प्रतिषेधे तु न दध्यधिश्रयेदित्येक इति वचनात्प्राप्तादन्यदेवेदमधिश्रयणं धर्ममात्रं विधीयते यथा दधि द्रव्यान्तरं न संपद्येत तथाऽधिश्रयणं कर्तव्यं भवति ॥ १८ ॥

**वृत्तिः**—अधिश्रयेन्न वेत्येतावतैव सिद्धे गुरुसूत्रकरणं न्यायविकल्पोऽयमिति प्रदर्शनार्थम् । अत्रैक आचार्याः प्रवृत्तिपरत्वाच्छास्त्रस्य कार्यस्य चातीन्द्रियत्वादलोपमाहुः । आचार्यस्तु कार्यार्थत्वात्प्रवृत्तेः कार्यस्य च दृष्टस्य त्यागे प्रमाणाभावात्तत्त्यागे संस्कार्यस्वरूपविनाशात्संस्कार्यसंपादकत्वात्संस्कारस्य लोप एवात्र श्रेयानित्याह ॥ १८ ॥

**पयसा नित्यहोमः ॥ १९ ॥**

**दे० भाष्यम्**—पयो दुग्धं नित्यं सततं होमो नित्यहोमः कामान्न भवति पयसा

पशुकामस्येत्यन्येषामिति तु वचनान्नित्यं नित्यवचनात्कामाय यवाग्वादिभिर्होमे उपरते काम्ये पुनरपि पयसैव जुहुयात्पयआदीनि द्रव्याणि नित्यानि काम्यानि च तत्र पयसाऽऽहृतेन होमः प्राप्तो यस्याग्निहोत्र्युपावसृष्टेति प्रायश्चित्ते तु दर्शनाद् गां दुग्ध्वा जुहुयात्तूष्णीं-वचनाभावान्न शूद्रो दुह्याद्वा विकल्पः ॥ १९ ॥

**वृत्तिः**—नित्यश्चासौ होमश्च नित्यहोमः स पयसा कर्तव्यः । अकामस्याग्निहोत्रहोमः पयसा कर्तव्य इत्यर्थः । कामानुपदेशादेवास्य नित्यत्वे सिद्धे नित्यग्रहणमुत्तरार्थम् ॥१९॥

**यवागूरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम् ॥ २० ॥**

**दे० भाष्यम्**—यवागूरोदनो दधि सर्पिरित्येतानि चत्वारि द्रव्याणि ग्रामकामश्चा-न्नाद्यकामश्चेन्द्रियकामश्च तेजस्कामश्चैतेषां चतुर्णां कामानां यवाग्वादिचतुर्णां द्रव्या-णामानन्तर्येण योगो भवति यवाग्वा ग्रामकामस्यौदनेनान्नाद्यकामस्य, दध्नेन्द्रियकामस्य, सर्पिषा तेजस्कामस्य, तत्र प्रतिषेधः । यवागूं श्रपयतीत्युक्तमध्वर्यूणां तस्याः श्रपणं भवत्योदनः सिद्ध एवाऽऽनीयते न तस्य श्रपणं चोदितमस्ति । क्वचिद्दध्यपि सिद्धमेवाऽऽनी-यते सर्पिरप्येवम् । एतानि चत्वारि पयसा सह पञ्चाऽऽम्नातानि । अथ पञ्चाऽऽम्नातानि तण्डुलैरोजस्कामस्य, बलकामस्य मांसेन, यशस्कामस्य वा तत्पच्यते यथा यवागूः । सोमेन ब्रह्मवर्चसकामस्य, तैलेन श्रीकामस्य, अद्भिर्वृष्टिकामस्य, एतान्यपि चोदितानि द्रष्टव्यानि होम्यं च मांसवर्जमिति ब्रुवता च तानि दश द्रव्याणि ॥ २० ॥

**वृत्तिः**—यथासंख्येन ग्रामकामादीनां यवाग्वादीन्यग्निहोत्रहोमद्रव्याणि भवन्ति । ग्रामकामः प्रसिद्धः । अन्नं च तदाद्यं चान्नाद्यम् । तद्यस्य काम इत्यर्थः । इन्द्रियं शुक्रं चक्षुरादीनि वा । तेजस्त्विट् । नित्यहोम इत्यत्रापि संबध्यते । तेन पुरुषार्थैरपि क्रियमाणो होमो नित्य एव स्यान्न कामार्थः । होमाश्रितानि द्रव्याण्येव कामाश्रितानि भवन्तीति ॥ २० ॥

**अधिश्रितमवज्वलयेत् ॥ २१ ॥**

**दे० भाष्यम्**—अधिश्रितं द्रव्यं ज्वलतोल्मुकेनावज्वलयेदिति । अवज्वलनस्य स्थानमु-पदिष्टं स्यात्तस्मादधिश्रितमित्युच्यते । अधिश्रयणादनन्तरमवज्वलनं सिद्धं भवति ॥२१॥

**वृत्तिः**—अधिश्रितग्रहणादधिश्रितमात्र एवावज्वलयन्न कालविक्षेपः कर्तव्य इत्यव-गम्यते ॥ २१ ॥

**अनधिश्रयं दध्यग्निष्टे तेजो मा शर्मीरिति ॥ २२ ॥**

**दे० भाष्यम्**—अधिश्रितमवज्वलयेदित्युक्ते दध्नोऽधिश्रयणपक्षेऽवज्वलनं न प्राप्नोति तस्मादिदमुच्यते—अनधिश्रयन्नपि दध्यवज्वलयेदिति "अग्निष्टे तेज" इत्यनेन मन्त्रेण । एवं चेन्न दधिश्रयणं कर्तव्यमधिश्रितमवज्वलयेदनधिश्रयमित्येतावता सिद्धे दधिग्रहणं दध्यादीनां प्राप्त्यर्थम् । कानि दध्यादीनि—तण्डुलाः, ओदनं, सोम इत्येतानि दधिप्रभृतीनि

कथं दध्नो धर्मानुक्त्वैवं तण्डुलानोदनं सोम चेत्युक्तमध्वर्यूणां तदेवाऽऽचार्येण दधिग्रहणेन प्रदर्शितं तस्माद्दध्नोऽधिश्रयणे विकल्प उक्तः स ओदनस्यापि भवति । तण्डुलानां सोमस्य च तयोः पाकविरोधात् । अवद्योतनं तु सर्वेषां भवत्यविरोधात् । मा हार्षीरिति विसर्जनीयं पठन्ति तकारान्तस्तु भवति मा हार्षीदिति ॥ २२ ॥

**वृत्तिः**—नाधिश्रयो यस्य तदनधिश्रयम् । अधिश्रयरहितमपि दध्यवज्वलयेदित्यर्थः । सर्वत्रावज्वलनमन्त्रोऽयम् 'अग्निष्टे तेजः' इति । दधि चेत्येतावतैव सिद्धे गुरुसूत्रकरणं व्रीह्यादीनामपक्वानां संग्रहार्थम् ॥ २२ ॥

## स्रुवेण प्रतिषिञ्च्यान्न वा शान्तिरस्यमृतमसीति ॥ २३ ॥

**दे० भाष्यम्**—अवज्वलनानन्तरं स्रुवेणोदकं गृहीत्वाऽग्निहोत्रं प्रतिषिञ्च्यादपां स्तोकेनेत्युक्तमध्वर्यूणाम् । येन वा प्रतिषिञ्च्यादिकल्पः । शान्तिरस्यमृतमसीत्यनेन मन्त्रेण प्रतिषिञ्च्यान्मन्त्रमुक्त्वा विभाषा कर्तव्या । तथा सति मन्त्रस्य विभाषा स्यात् । प्रतिषेकस्यैव विकल्प इष्यते ॥ २३ ॥

**वृत्तिः**—पयसा होमे दोहनपात्रप्रक्षालनं स्रुव आनीय तेन प्रतिषिञ्चेत् । अग्निहोत्रद्रव्यमन्यत्रोदकेनैव शान्तिरिति मन्त्रेण । न वा प्रतिषेकः कर्तव्यः ॥ २३ ॥

## तयोरव्यतिचारः ॥ २४ ॥

**दे० भाष्यम्**—तस्मादेवमुक्तयोरधिकृतयोरवद्योतप्रतिषेकयोरव्यतिचारोऽव्यतिक्रम्य चारो व्यतिचारोऽवद्योतनं कृत्वा प्रतिषेको न क्रियते यदा तदा व्यतिचारो भवति न भवति व्यतिचारः । अवद्योतनं कृत्वा प्रतिषेकोऽपि क्रियते तयोः सह चारो व्यतिचार इत्युच्यते । प्रतिषेकस्य विभाषा तेन सहैवावद्योतनस्यापि विभाषा भवति दध्यादीन्यप्रतिषेच्यान्यध्वर्यूणां सर्पिषि दर्भाग्रे प्रत्यस्यति न प्रतिषिञ्चति । एषु सर्वेष्वस्माकं प्रतिषेको विकल्प्यते ॥ २४ ॥

**वृत्तिः**—तयोः प्रतिषेकाप्रतिषेकयोरित्यर्थः । अव्यतिचारोऽसंकरः । एकस्मिन्पुरुष इत्यर्थः । एकः सर्वदा प्रतिषिञ्चेदपरः सर्वदा न प्रतिषिञ्चेदित्यर्थः ॥ २४ ॥

## पुनर्ज्वलता परिहरेत्त्रिरन्तरितं रक्षोऽन्तरिता अरातय इति ॥ २५ ॥

**दे० भाष्यम्**—पूर्वमेव द्योतनं यथा ज्वलतोल्मुकेन कृतमेवं पुनरपि ज्वलतोल्मुकेनाग्निहोत्रं परिहरेत् । परि समन्ततो हरेन्नयेत् । त्रिरन्तरितमित्यनेन मन्त्रेण सकृन्मन्त्रेण द्विस्तूष्णीं पुनर्ग्रहणादवद्योतनमपि ज्वलतोल्मुकेन सिद्धम् । अन्यथा न प्राप्नोति वचनाभावात् ॥ २५ ॥

**वृत्तिः**—पुनर्वचनाज्ज्वलता येनोल्मुकेनावज्वलनं कृतं तेनैव परिहरणं कुर्यादिति गम्यते । उल्मुकादानं गार्हपत्यादेव न श्रपणार्थात् । श्रपणार्थं पृथक्कृतस्य पुनःप्रक्षेपवि-

धानात् । अन्यत्र कार्यार्थं पृथक्कृतस्य कार्यपरिसमाप्तौ त्याग एव कर्तव्यः । तेनावज्वलनार्थं पृथक्कृतमवज्वलने कृते पृथगेव निधाय तेनैव परिहरणमपि कृत्वा त्यजेत् ॥ २५ ॥

**समुदन्तं कर्षन्निवोदगुद्वासयेद्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति निदधत् ॥ २६ ॥**

**दे० भाष्यम्**—समन्तत उदन्तं समुदन्तं कर्षतीव कर्षन्निव भूमिसंनिकृष्टं नीयत उदगुद्वासयेदुदीच्यां दिश्युद्वासयेत् स्थापयेत् । दिवे त्वेत्येतैस्त्रिभिर्मन्त्रैस्त्रिर्भूमौ निदधन्निदध्यादुद्वासयेदित्यनेनैवाऽऽधाने सिद्धे निदध्यादिति न वक्तव्यम् । तस्यैतत्प्रयोजनं निदधदुद्वासयतीति । तस्मात्त्रिर्भूमौ प्रतिष्ठापयति त्रय एवैते मन्त्रास्त्रिर्भूमौ प्रतिष्ठापयतीत्यन्येषाम् ॥ २६ ॥

**वृत्तिः**—सम्यगुद्गतोऽन्तो यस्य द्रव्यस्य तत्समुदन्तं द्रव्यम् । परितः स्थालीसंबद्धप्रदेशोऽन्त इत्युच्यते । यदा पच्यमानं पय एवमवस्थं भवेत्तदा कर्षन्निवोदगुद्वासयेत् । कर्षन्निवेति मन्दगत्येत्यर्थः । निदधदिति । त्रिभिर्मन्त्रैस्त्रिर्निधानं कुर्वन्नवतारयेत् । प्रथमाद्वितीयाभ्यामाकाशे धृत्वा तृतीयेन भूम्यां निदध्यात् ॥ २६ ॥

**सुहुतकृतः स्थ सुहुतमकार्ष्टेत्यङ्गारानतिसृज्य स्रुक्स्रुवं प्रतितपेत्प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति ॥ २७ ॥**

**दे० भाष्यम्**—सुहुतकृतः स्थ इत्यनेन मन्त्रेणाङ्गारानग्नावेवातिसृजति गमयति. अतिसृज्य स्थालीमुत्तरतः कुशेषूपसादयेदतिसृजेदित्यत्र साकाङ्क्षत्वादासादयेदित्यध्याहर्तव्यम् । अन्यथाऽऽसादनमुपदिष्टं स्याद्वक्ष्यति चोत्तरतः स्थाल्याः स्रुचमासाद्येति स्थालीमासन्नां दर्शयति । स्रुचं स्रुवं चोभयं सह प्रतितपेत् प्रत्युष्टमित्येतेन यथोष्माभिघा भवति ॥ २७ ॥

**वृत्तिः**—अतिसर्गोऽङ्गाराणां गार्हपत्ये प्रक्षेपः ॥ २७ ॥

**उत्तरतः स्थाल्याः स्रुचमासाद्योमुन्नयानीत्यतिसर्जयीत ॥ २८ ॥**

**दे० भाष्यम्**—उत्तरतः स्थाली प्रागासन्ना भवति तस्या उत्तरतः स्रुचमासाद्य स्थापयित्वोमुन्नयानीत्यतिसर्जयीत यजमानः । आसाद्येति वचनात्तत्र देशे कुशाः स्तीर्णा भवन्ति । ओमुन्नयानीति त्रिमात्रमकारान्तं कुर्यात् । अतिसर्जनत्वादुच्चैर्यथा शृणोति ॥ २८ ॥

**वृत्तिः**—स्थाल्या उत्तरतः स्रुचमासाद्य स्रुवहस्त एव सन्नोमुन्नयानीत्यनेन मन्त्रेणाऽऽहिताग्निमतिसर्जयेत् ॥ २८ ॥

**आहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैतच्छ्रुत्वोमुन्नयेत्यतिसृजेत् ॥ २९ ॥**

**दे० भाष्यम्** —आहिताग्निर्यजमान आचम्य प्रयतोऽपि कर्माङ्गत्वादाचामेत् । वेदिं गार्हपत्यं चापरेणातिसृज्य गत्वा दक्षिणतो दक्षिणस्यां दिश्युपविशति । निरसनमकृत्वैतच्छ्रुत्वा कर्तुरतिसर्जनं श्रुत्वोमुन्नयेत्यतिसृजेदनुज्ञां कुर्यात् । पूर्ववन्निमात्रमेव कुर्यात् । आहिताग्निग्रहणं कर्तुरधिकारादाचमनं कर्माङ्गमेव । ततः श्रुत्वेतिवचनात्प्रागेवाऽऽसीनो भवति । अधिकारे तु प्रपदनं विधीयते । असति यजमाने स्वयमात्मनोऽनुजानीयादित्यध्वर्यूणाम् ॥ २९ ॥

**वृत्तिः**—विहरणकाल एवाऽऽहिताग्निश्चाध्वर्युः पत्नी च स्नात्वाऽऽचम्य तीर्थेन प्रविशन्ति । तत्राध्वर्युर्विहरणं कृत्वा होमकाले प्राप्ते निष्क्रम्य प्राङ्मुख उदङ्मुखो वाऽऽचम्य तीर्थेनैव प्रविश्य पर्युक्षणादि कुर्यात् । पत्नी तु गार्हपत्यस्य दक्षिणत आस्त आ होमपरिसमाप्तेः । आहिताग्निश्चाऽऽहवनीयविहरणकाले दक्षिणत उपविश्योद्धराऽऽहवनीयमित्यध्वर्युं संप्रैषमुक्त्वाऽऽस्ते । ततो होमकाले प्राप्ते निष्क्रम्य प्राङ्मुख उदङ्मुखो वाऽऽचम्य तीर्थेनैव प्रपद्यापरेण वेदिदेशं पूर्वेण गार्हपत्यं दक्षिणाग्निं च गत्वा वेदेर्दक्षिणत उपविशेत् । उपविष्टः सन्नेतदतिसर्जनवाक्यं श्रुत्वोमुन्नयेत्यतिसृजेत् ॥ २९ ॥

**अतिसृष्टो भूरिळा भुव इळा स्वरिळा वृध इळेति स्रुवपूरमुन्नयेत् ॥ ३० ॥**

**दे० भाष्यम्**—यजमानेनातिसृष्टः सन् 'भूरिळा' इत्येतैश्चतुर्भिर्मन्त्रैः स्थाल्याः स्रुवः पूर्यते । पूर्णं पूर्णं उन्नयेत् । स्थाल्या उद्धृत्योन्नयेच्चतुरुन्नयेदतिसृष्ट इत्यनुच्यमाने यजमानस्योन्नयनं प्राप्नोत्यधिकारात् ॥ ३० ॥

**वृत्तिः**—अतिसृष्ट इति वचनं प्रवसति यजमाने स्वेनैवातिसृष्ट उन्नयेन्नानतिसृष्ट इत्येवमर्थम् । चत्वार एते मन्त्राः समस्तात्संसर्गाणामतश्चतुष्कृत्व उन्नयेत् । स्रुवपूरमिति णमुल्प्रत्ययंयोगाच्च । अग्रियमग्रियमित्युन्नयनभेददर्शनाच्च । स्रुवपूरमिति स्रुवं पूरयित्वेत्यर्थः । अत्र पञ्चममन्त्रस्याभावात्पञ्चावत्तिनां तूष्णीमेव पञ्चममुन्नीयते पुरुषविशेषधर्मित्वादवदानविशेषसंबन्धस्य ॥ ३० ॥

**अग्रियमग्रियं पूर्णतमं योऽनुज्येष्ठमृद्धिमिच्छेत्पुत्राणाम् ॥ ३१ ॥**

**दे० भाष्यम्**—अग्र्यमग्रे भवमग्र्यमग्र्यमग्र्यं पूर्णतममुन्नयेत् । पूर्णं तत ऊनं तत उत्तरं तत ऊनतममित्यनुज्येष्ठं यजमान आत्मनोऽनुज्येष्ठं ज्येष्ठानुपूर्व्येण ऋद्धिमिच्छेत्पुत्राणां ज्येष्ठस्योत्तमा वृद्धिः । अनन्तरस्योना तत ऊनतरा तत ऊनतमेत्येवमेतदेव विपरीतमध्वर्यूणां योऽनुकमिष्टमृद्धिमिच्छेत्पुत्राणामिति ॥ ३१ ॥

**वृत्तिः**—यो यजमानः पूर्वजातानुसारेणाऽऽत्मनः पुत्राणामृद्धितारतम्यमिच्छेत्तस्य पूर्वः पूर्णतमो भवेत् । अनेकपुत्रस्यायं काम्यः कल्पो न चतुष्पुत्रस्यैव ॥ ३१ ॥

**योऽस्य पुत्रः प्रियः स्यात्तं प्रति पूर्णमुन्नयेत् ॥ ३२ ॥**

**दे० भाष्यम्**—यो यजमानस्य पुत्र इष्टः स्यात्तं पुत्रं प्रत्यादिश्य पूर्णं स्रुवमुन्नयेत् । तस्मादित्युत्तराण्युन्नयनानि पदानि भवन्ति । प्रथमो नित्य उत्तरौ कामिकौ । पुत्रबहुत्वात् । अपितृतीयदक्षिणाविभागन्यायेन चतुर्धा पुत्राणां विभागे प्रियः पुत्रस्तं प्रति पूर्णमुन्नयेत् । अस्येति यजमानप्राप्त्यर्थम् । अन्यथा कर्तुः स्यात् ॥ ३२ ॥

**वृत्तिः**—प्राकृतानामेव पञ्चानां चतुर्णां वैकं स्रुवं प्रियं पुत्रं ध्यात्वा पूर्णमुन्नयेत् । अयमपि काम्यः । अयमेकपुत्रस्यापि भवति ॥ ३२ ॥

**स्थालीमभिमृश्य समिधं स्रुचं चाध्याधि गार्हपत्यं हृत्वा प्राणसंमितामाहवनीयसमीपे कुशेपूपसाद्य जान्वाच्य समिधमादध्याद्रजतां त्वाऽग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहेति ॥ ३३ ॥**

**दे० भाष्यम्**—स्थालीं पाणिनाऽभिमृश्य समिधं पालाशीं स्रुचं च गृहीत्वोपरि हि समिधं देवेभ्यो धारयत्यधस्तात्पितृभ्य इति विज्ञायते । अध्यध्युपर्युपरि गार्हपत्यमग्निसमीपे गृहीत्वाऽऽसाद्य प्राणसंमितां नासिकासंमितां कृत्वाऽऽहवनीयसमीपे कुशाः स्तीर्णा भवन्ति । तेषु कुशेषु समीप आसाद्य स्थापयित्वा दक्षिणं जानुमाच्य नीचं कृत्वा तां समिधमाहवनीये निदध्यात्प्रक्षिपेत् ' रजतां त्वा ' इत्यनेन मन्त्रेण । अध्यधीति निपातः सामीप्यार्थे वर्तते ॥ ३३ ॥

**वृत्तिः**—स्थाल्याः स्रुवेण स्रुग्युन्नयनं कृत्वा स्थालीमभिमृश्य स्रुचा सह समिधं च गृहीत्वाऽध्याधि गार्हपत्यं गार्हपत्यस्योपरि समीपं हृत्वाऽऽहवनीयस्य नेदीयसि नासिकासंमितां हरेत । हृत्वा तस्य पश्चाददूरे कुशेपूपसाद्य दक्षिणं जानु निपात्य तां समिधमादध्याद्रजतामिति मन्त्रेण ॥ ३३ ॥

**समिधमाधाय विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धेत्यप उपस्पृश्य प्रदीप्तां द्व्यङ्गुलमात्रेऽभिजुहुयाद्भूर्भुवः स्वरो३मग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति ॥ ३४ ॥**

**दे० भाष्यम्**—समिधमाधायेति पुनरुच्यते । यदा यजमानः स्वयं जुहोति तदा समिधमाधायानुमन्त्रयेत । यजमानस्य स्थानमुपदिशत्यत्र तत्र प्राप्नोति, उत्तरकालमप्सु श्रद्धेत्यप उपस्पृश्याऽऽहिताग्निरनुमन्त्रयते । ततो विद्युदसीत्यनेनाप उपस्पृश्य होमकाल उपस्पर्शननिराकाङ्क्षत्वात्प्रदीप्तां समिधं नाप्रदीप्तां, द्व्यङ्गुलमात्रे द्व्यङ्गुलप्रमाणं दिशन्त्यप्यभिसमिधं जुहुयात् " भूर्भुवः स्वरो३म् " इत्यनेन मन्त्रेण । द्रवद्रव्यं प्रसेकेन जुहुयात् । अन्यान्यन्यमुखेन ॥ ३४ ॥

**वृत्तिः**—समिधमाधायेत्युच्यते समिदाधानधर्मस्य जानुनिपातनस्यानुवृत्त्यर्थम् । समिधमाधायेत्यनेनैव समिद्ग्रहणेन पूर्वसूत्र आदध्यादित्येवोक्तेऽपि समिध एवाऽऽधाने सिद्धे यत्पूर्वसूत्रे समिद्ग्रहणं करोति तज्ज्ञापयति यत्र यत्र समिधमादध्यात्तत्र तत्र जान्वाच्याऽऽदध्यादिति । विद्युदसीत्यप उपस्पृश्य प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रेऽभिजुहुयात् 'भूर्भुवः स्वरो३म्' इति मन्त्रेण ॥ ३४ ॥

**पूर्वामाहुतिं हुत्वा कुशेषु सादयित्वा गार्हपत्यमवेक्षेत पशून्मे यच्छेति ॥ ३५ ॥**

**दे० भाष्यम्**—तां पूर्वाहुतिं हुत्वैतदपि पुनरुच्यते. पूर्ववद्यजमानस्य स्थानोपदेशार्थं हुत्वेति । कुशेषूपसाद्य गार्हपत्यमवेक्षेत पशून्मे यच्छेत्यनेन मन्त्रेण प्रत्यग्व्यावृत्यावेक्षते ॥ ३५ ॥

**वृत्तिः**—हुत्वेतिवचनं निपातितजानुरेवोत्तरमपि कुर्यादित्येवमर्थम् । पूर्वामिति वचनं पूर्वाहुत्युत्तरकालीनं स्रुचं सादयित्वैव कुर्यादुत्तराहुत्युत्तरकालीनं स्रुग्घस्त एव कुर्यादित्येवमर्थम् ॥ ३५ ॥

**अथोत्तरां तूष्णीं भूयसीमसंसृष्टां प्रागुदगुत्तरतो वा ॥ ३६ ॥**

**दे० भाष्यम्**—अथ वीक्षणादनन्तरमुत्तरामाहुतिं जुहुयात् । अधिकृते मन्त्रे प्राप्ते तूष्णीममन्त्रं भूयसीमुत्तरां पूर्वस्या उत्तरत एवं जुहुयादिति ॥ ३६ ॥

**वृत्तिः**—अथेत्यानन्तर्यवचनेन पूर्वाहुत्योत्तराहुतेः संबन्धः क्रियते । तेन जान्वाच्येत्यस्यानुवृत्तिर्लभ्यते । प्राधान्यं चोत्तराहुतेः । अतः पूर्वाहुतौ हुतायां द्रव्यदोषे सत्युत्तराहुत्यर्थं द्रव्यमुत्पादयितव्यमेव । भूयसीं पूर्वाहुतेर्भूयोद्रव्याम् । असंसृष्टां पूर्वयाऽऽहुत्या । प्रागुदक्पूर्वाहुतेरुत्तरतो वा तस्या एव ॥ ३६ ॥

**प्रजापतिं मनसा ध्यायात्तूष्णींहोमेषु सर्वत्र ॥ ३७ ॥**

**दे० भाष्यम्**—प्रजापतिदेवतां मनसा ध्यायाज्जुहुयाच्चतुर्थ्या विभक्त्या स्वाहाकारेण च प्रजापतये स्वाहेति मनसा जुहुयादिति वा तूष्णींहोमेषु प्रजापतिं ध्यायात्सर्वत्र । अस्मादन्यत्रापि तूष्णींहोमेषु यत्र यत्र तूष्णीं चतुर्थं तूष्णीं सर्वहुतं जुहुयुः । होमग्रहणात्समिदाधाने न भवति तूष्णीं समिधमाधायेति ॥ ३७ ॥

**वृत्तिः**—यत्र तु तूष्णींशब्दविशिष्टो होमश्चोद्यते तत्र प्रजापतिदेवतां ध्यायेद्देवतासाध्यत्वाद्धोमस्य । ध्यानत्वादेव मानसत्वे सिद्धे मनोग्रहणं शब्दध्यानार्थम् । तेन चतुर्थ्यन्तं प्रजापतिशब्दं ध्यात्वा तदनन्तरं स्वाहेत्युपांशूक्त्वा जुहुयात् । होमेष्विति बहुवचनादेव प्रकरणादुत्कर्षे सिद्धे सर्वत्र ग्रहणं गार्ह्येष्वपि प्रापणार्थम् ॥ ३७ ॥

**भूयिष्ठं स्रुचि शिष्ट्वा त्रिरनुप्रकम्प्यावमृज्य कुशमूलेषु निमार्ष्टि पशुभ्यस्त्वेति ॥ ३८ ॥**

**दे० भाष्यम्**—भूयिष्ठं बहुतममुत्तराहुतिवदुत्तरावमं हविः शिष्ट्वा शेषं कृत्वा त्रिरन्त्याहुतिमनुप्रकम्प्य चालयित्वाऽवमृज्यात्राक्पाणिना लेपं परिमृज्य कुशमूलेषु निमार्ष्टि निःशेषेण लेपं निमार्ष्टि पशुभ्यस्त्वेत्येतेन मन्त्रेण ॥ ३८ ॥

**वृत्तिः**—उत्तराहुतेर्भूयिष्ठं भूयोद्रव्यं पूर्वाहुतेर्भूयिष्ठं यथा भवति तथा भक्षार्थं स्रुचि शेषयेत्। पूर्वाहुत्यर्थं प्रक्षिप्ताद्द्रव्यादुत्तराहुत्यर्थं भूयो भवति। तस्मादपि भूयो भक्षार्थं भवति। तत्पूर्वाहुत्यपेक्षया भूयिष्ठमित्युच्यते। भूयिष्ठं द्रव्यं स्रुचि शेषयित्वा स्रुचमेवाऽऽहुतिदेशस्थां प्रकम्पयेत्। ततः स्रुग्गतलेपं पाणिनाऽधोमुखेनावमृज्य पाणिगतं लेपं कुशमूलेषु निमार्ष्टि निमृजेत्पशुभ्यस्त्वेति ॥ ३८ ॥

**तेषां दक्षिणत उत्ताना अङ्गुलीः करोति प्राचीनावीती तूष्णीं स्वधा पितृभ्य इति वाऽपोऽवनिनीय वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धेत्यप उपस्पृश्य ॥ ३९ ॥**

**दे० भाष्यम्**—तेषां कुशमूलानां दक्षिणस्यां दिश्युत्ताना अङ्गुलीः करोति प्राचीनावीती भूत्वा तूष्णीं स्वधा पितृभ्य इत्यनेन मन्त्रेण। अङ्गुलीष्ववनिनीयावसिञ्चेत्। पुनर्यज्ञोपवीतं कृत्वा वृष्टिरसीत्यनेन मन्त्रेणाप उपस्पृश्य। तूष्णींग्रहणं मन्त्रविवक्षार्थम्। अक्रियमाणे वाशब्दः क्रियाविकल्पार्थः स्यान्निनयनमपि होमवत्तूष्णीं निनयने प्रजापतिं ध्यायेत्पैतृकत्वात्कर्मणोऽप्सु श्रद्धेत्युपस्पृश्येति साकाङ्क्षत्वाद्वाक्यस्योदङ् भक्षयेदिति। स हि प्राप्तानुवादो नित्यमप उपस्पर्शममन्त्रवदधिकृतात्तत्प्रतिपत्त्यर्थं परिभाषाव्यवायादन्यथा स्पृष्टोदकवचनमनर्थकमर्थाभावात् ॥ ३९ ॥

**वृत्तिः**—तेषां कुशमूलानां दक्षिणत उत्ताना अङ्गुलीर्निदध्यात्। प्राचीनावीती भूत्वा 'स्वधा पितृभ्यः' इति मन्त्रेण तूष्णीं वा। एतावदेव सूत्रम्। अपश्च कुशमूलानां दक्षिणतो निनयेदवाचीनेन पाणिना। एवावत्स्रुग्वस्त एव करोति। एवं वा तेषां दक्षिणत उत्ताना अङ्गुलीः करोति प्राचीनावीति तूष्णीं स्वधा पितृभ्य इति वाऽपोऽवनिनीय। इदमपि सूत्रमेतावदेव। निधाय स्रुचमप उपस्पृशेत् ॥ ३९ ॥

**आहिताग्निरनुमन्त्रयेत ॥ ४० ॥**

**दे० भाष्यम्**—आहिताग्निरनुमन्त्रयेत समिधम् ॥ ४० ॥

**वृत्तिः**—अधिकारोऽयम् ॥ ४० ॥

**आधानमुक्त्वा तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति समिधम् ॥ ४१ ॥**

**दे० भाष्यम्**—आधानमुक्त्वा समिदाधानमन्त्रमुक्त्वा सायं प्रातश्च यः प्रयुक्तस्तमाह

स्वाहाकारान्तमुक्त्वा तेन ऋषिणेत्येतेन च। उभाभ्यां समिधमनुमन्त्रयेत। आहिताग्निग्रहणं कर्तुरधिकारादेशान्तर उक्तसमिदाधानकाले तु भवति। मन्त्रे स्वाहाकारो होमधर्मनुमन्त्रणे न प्रयोक्तव्यस्तथादृष्टत्वादुपस्थाने। एतैश्चैव वा स्वाहाकारैरिति नित्यमन्त्रस्यायमुपदेशो न तु नैमित्तिकस्य। मित्रो जनान्यातयति ब्रुवाण इति समिदाधानमिति। तत्रापि यजमानो नित्येनैवानुमन्त्रयते। इष्टकोपधानलिङ्गत्वात्। श्रूयते तावद्यदग्नेर्यजुष्मत्य इष्टका इति॥ ४१॥

**वृत्तिः**—समिदाधानमन्त्रेण तेन ऋषिणेत्यनेन मन्त्रेण च समिधमाधीयमानामनुमन्त्रयते॥ ४१॥

**ता अस्य सूद दोहस इति पूर्णामाहुतिम्॥ ४२॥**

**दे० भाष्यम्**—ता अस्य सूद दोहस इत्यनयर्चा पूर्णामाहुतिमनुमन्त्रयते। पूर्णामाहुतिमित्यनुच्यमान उभयत्र प्राप्नोति॥ ४२॥

**वृत्तिः**—एतयर्चा पूर्णामाहुतिमनुमन्त्रयते॥ ४२॥

**उपोत्थायोत्तरां काङ्क्षेतेक्षमाणो भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः॥ ४३॥**

**दे० भाष्यम्**—उपोत्थायोत्तरामुत्तरामाहुतिं हुत्वा तामुपलक्ष्योत्थाय स्थित्वोपतिष्ठते सर्वानग्नीनविशेषवचनाद्व्याहृतयश्च सर्वार्था आग्नेय्योऽपि वास्यानुसमर्था यथावत्संप्रयोगात्तु एकार्था अपि बह्वर्था भवन्ति। विभक्तास्तु नित्यास्तस्मात्सर्वानग्नीनुपतिष्ठते। कं पुनरस्य वैकल्पिकं विधिं वक्ष्यति। अयं पन्था अपि विद्यः। अस्य स्थाने भवति श्रुतिः। काङ्क्षेतेच्छेत मन्त्रलिङ्गोपदेशनार्थं भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैरित्येताः काङ्क्षेत। ईक्षमाणोऽग्नीनीक्षमाण उपतिष्ठेत भूर्भुवः स्वरित्येतेन मन्त्रेणाधिकारादनुमन्त्रणे प्राप्त उपोत्थायेति ब्रूयात्। उपोत्थायोत्तरामिति वचनादुत्तरामुत्थानस्योक्तलक्षणं भवति। उत्तरामुपलक्ष्योत्थाय मन्त्र उच्यमान उपस्थानसंज्ञो भवति। ईक्षमाणवचनात्॥ ४३॥

**वृत्तिः**—इतिकाराध्याहारेण सूत्रच्छेदः। उत्तराहुतेर्हूयमानाया देशतः कालतश्च स्थित्वा कटाक्षेणेक्षमाणस्तामेवाऽऽहुतिमनुमन्त्रयते। काङ्क्षेतशब्दः कटाक्षवचनः। केचिदुत्तरामाहुतिमीक्षमाणोऽनुमन्त्रयते तन्मन्त्राभिहितान्कामान्काङ्क्षेत चेति वर्णयन्ति॥ ४३॥

**आग्नेयीभिश्च॥ ४४॥**

**दे० भाष्यम्**—आग्नेयीनामुपदेशाच्च। अग्निर्देवता यासामृचां ता आग्नेय्यो भवन्ति।

आग्नेयीभिश्चाग्निमुपतिष्ठते । निर्देशात्तावदेतस्य समाम्नायेऽग्निमीळादिसर्वाभिः समाम्नाताभिः क्रमेणान्वहं यथोत्साहमुपस्थानं कर्तव्यम् । चशब्दः समुच्चयार्थो भूर्भुवः स्वरित्यनेन मन्त्रेणाऽऽग्नेयीभिश्चेति ॥ ४४ ॥

**वृत्तिः**—याभिः काभिश्च व्यवराभिराग्नेयीभिरुत्तरामेवाऽऽहुतिमनुमन्त्रयते ॥ ४४ ॥

**अग्न आयूंषि पवस इति तिसृभिः ॥ ४५ ॥**

**दे० भाष्यम्**—अग्न आयूंषि पवस इत्येताभिराग्निपवमानीभिति तिसृभिरुपतिष्ठते ॥ ४५ ॥

**वृत्तिः**—० ॥ ४५ ॥

**संवत्सरे संवत्सरे ॥ ४६ ॥**

**दे० भाष्यम्**—प्रतिसंवत्सरं यस्मिन्नहन्याहिताग्नयो भवन्तीति श्रुतिः । यस्मिन्नहनि सायं प्रातर्भूर्भुवः स्वरित्यनेन मन्त्रेणैताभिश्च तिसृभिरुपतिष्ठते । पुनर्नवा अग्नयो भवन्तीति श्रुतिः । पवमानहवींषि च निरूप्यन्त इत्यन्येषाम् ॥ ४६ ॥

**वृत्तिः**—पूर्णे पूर्णे संवत्सर एताभिरधिकाभिः सकृदनुमन्त्रयेत ॥ ४६ ॥

**यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् ॥ ४७ ॥**

**दे० भाष्यम्**—यवाग्वा च तण्डुलैर्या पच्यते सायं प्रातस्तया च यवाग्वा पयसा वा स्वयं यजमानः पर्वण्यमावास्यायां पौर्णमास्यां च सायं जुहुयात् । सायं प्रातर्यद्यपि काम्येन प्रक्रान्तं भवति पर्वण्येताभ्यामेव जुहुयात् । काम्येनैव बोधयति येन यवाग्वा पयसा वेति विकल्पः । अमावास्यायां चैन्द्रः पुरोडाशो न विद्यते यदा तदा यवाग्वैव होतव्यम् । तथाऽध्वर्यूणां वचनम् ॥ ४७ ॥

**वृत्तिः**—यवाग्वा पयसा वा स्वयं पर्वणि पौर्णमास्याममावास्यायां वा सायं प्रातर्यजमानः स्वयमेवाग्निहोत्रं जुहुयात् । अस्मिन्सूत्रे पर्वणि द्रव्यनियमः स्वयंकर्तृनियमश्च विधीयते । स्वयंहोमे समिधमनुमन्त्र्य ' विद्युदसि ' इति पूर्वामाहुतिमनुमन्त्र्य ' पशून्मे यच्छ ' इत्युत्तरामाहुतिमनुमन्त्र्य ' वृष्टिरसि ' इत्येवं क्रमो भवति । यत्किंचिदग्निहोत्रद्रव्यं काम्यं वैकल्पिकं वा प्रयुज्यते तत्सायमुपक्रम्य प्रातरपवर्गं प्रयुज्यते नान्यथेति । प्रतिनिधिस्वैकप्रयोगपर्यवसायैव ॥ ४७ ॥

**ऋत्विजामेक इतरं कालम् ॥ ४८ ॥**

**दे० भाष्यम्**—ऋत्विजामेको येऽस्य ऋत्विजस्तेषामेक इतरं कालं शेषं कालं जुहुयात् । ऋत्विगितरं कालमिति सिद्ध एकग्रहणाद्ब्राह्मणः प्रतिषेधो नित्यः सर्वकर्मणामिति प्राप्तः ॥ ४८ ॥

**वृत्तिः**—ऋत्विजां मध्य एकः कश्चिदृत्विगितरस्मिन्कालेऽग्निहोत्रं जुहुयात् ॥ ४८ ॥

**अन्तेवासी वा ॥ ४९ ॥**

**दे० भाष्यम्**—अन्तेवासी शिष्यो भवति । स चेतरं कालं शेषं कालं जुहुयात् । वेदग्रहणार्थं यो वसत्युपाध्यायं सोऽन्तेवासी । यः कृत्स्नमधीते स शिष्यः । ब्रह्मचारी च जुहुयादन्येषाम् ॥ ४९ ॥

**वृत्तिः**—इतरस्मिन्कालेऽग्निहोत्रं जुहुयादिति शेषः । अन्ते समीपे वसतीत्यन्तेवासी । स पुनः पुत्रः शिष्यो वा । अत्र किंचिदुच्यते—ऋत्विजस्त्रिविधाः । देवभूताः पितृभूता मनुष्यभूता इति । ये कर्मणि कर्मणि व्रियन्ते ते देवभूताः । येऽन्वयागता ऋत्विजस्ते पितृभूताः । ये त्वेकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं व्रियन्ते ते मनुष्यभूताः । तत्र यस्याऽऽहिताग्नेः पितृभूता मनुष्यभूता वा ऋत्विजः सन्ति तेषामृत्विजामेकः कश्चित्पर्ववर्जितेषु कालेषु जुहुयात् । यस्य तु देवताभूतास्तस्यान्तेवास्येवेति निवेशः ॥ ४९ ॥

**स्पृष्ट्वोदकमुदङ्ङावृत्य भक्षयेत् ॥ ५० ॥**

**दे० भाष्यम्**—स्पृष्ट्वोदकमप उपस्पृश्योदङ्ङावृत्योदीचीं दिशमावृत्य हविर्यद्धुतशिष्टं तस्य गृहीत्वा भक्षयेत् । मन्त्रं वक्ष्यति । उदकस्पर्शने कारणाभावादप्सु श्रद्धेत्यप उपस्पृश्येति तमेवानुवदति ॥ ५० ॥

**वृत्तिः**—उक्तमेवोदकोपस्पर्शनं कृत्वोदगावृत्य स्रुग्गतं शेषं भक्षयेत् । उक्तसंकीर्तनमाहिताग्न्यधिकारे सत्यपि होमकर्तृप्रापणार्थम् ॥ ५० ॥

**अपरयोर्वा हुत्वा ॥ ५१ ॥**

**दे० भाष्यम्**—अपरयोरग्न्योर्हुत्वा भक्षयेद्विकल्पः ॥ ५१ ॥

**वृत्तिः**—भक्षयेदिति शेषः ॥ ५१ ॥

**आयुषे त्वा प्राश्नामीति प्रथमम् । अन्नाद्याय त्वेत्युत्तरम् ॥ ५२ ॥**

**दे० भाष्यम्**—आयुषे त्वा प्राश्नामीत्यनेन मन्त्रेण प्रथमं भक्षयेत् । प्रथमग्रहणेऽक्रियमाण उत्तरमित्यनर्थकं भवति । उत्तरशब्देऽनुच्यमान उभाभ्यां मन्त्राभ्यामेकं भक्षणं प्राप्नोति । 'अन्नाद्याय त्वा' इत्येतेन मन्त्रेणोत्तरं भक्षयेत् । द्विर्भक्षणं भवति प्राश्नामीत्यनुवर्तमाने । अन्यथाऽपरिसमाप्तेऽर्थे मन्त्रः स्यात् ॥ ५२ ॥

**वृत्तिः**—प्रथममुत्तरमिति भक्षयोः संबन्धकरणार्थम् । तेनोत्तरस्यापि मन्त्रस्य प्राश्नाम्यन्तता भवति ॥ ५२ ॥

**तूष्णीं समिधमाधायाग्नये गृहपतये स्वाहेति गार्हपत्ये ॥ ५३ ॥**

**दे० भाष्यम्**—तूष्णीं समिधमविकृतेन च वचनेन मन्त्रे प्राप्ते तूष्णीमित्यमन्त्रं समि-

धमाधाय प्रदीप्तां चेति वर्तते । अग्नये गृहपतये स्वाहेत्यनेन मन्त्रेण गार्हपत्येऽग्नौ स्थाल्याः स्रुवेणाऽऽदाय जुहुयात्प्रदीप्तां चेत्येवमादि सर्वमत्र वर्तते । तूष्णीमिति वचनात् । आहवनीयाधिकाराद्गार्हपत्यवचनम् ॥ ५३ ॥

**वृत्तिः**—जुहुयादित्यध्याहारः । तूष्णींग्रहणमाहवनीये समिदाधाने होमे च ये धर्मा जानुनिपातनं प्रदीप्ताग्निहोमो द्व्यङ्गुलमात्राग्निहोमश्च तेषां प्राप्तिसूचनार्थम् ॥ ५३ ॥

**नित्योत्तरा ॥ ५४ ॥**

**दे० भाष्यम्**—नित्योत्तरा या नित्या प्रागुक्ता प्रजापतिं मनसेति । अनन्तरा योत्तरा तथैव विधानं समानम् । भूयसीमसंसृष्टामित्येतत्तूष्णीम् ॥ ५४ ॥

**वृत्तिः**—उत्तराहुतिं तूष्णीं भूयसीमित्येवमुक्तेत्यर्थः ॥ ५४ ॥

**तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेति दक्षिणे । अग्नयेऽन्नादायान्नपतये स्वाहेति वा ॥ ५५ ॥**

**दे० भाष्यम्**—तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेत्यनेन दक्षिणाग्नौ जुहुयात् । अपवादो नानुवर्तते । तस्मात्पुनस्तूष्णीमित्याहाग्नयेऽन्नादायान्नपतय इति वा । अयं मन्त्रो ब्राह्मणे दृष्टः । तस्मादेतामेव चरन्ति ॥ ५५ ॥

**वृत्तिः**—मन्त्रविकल्पोऽयम् ॥ ५५ ॥

**नित्योत्तरा ॥ ५६ ॥**

**दे० भाष्यम्**—प्रजापतये स्वाहेति सोत्तरा द्वितीया भवति ॥ ५६ ॥

**वृत्तिः**—उत्तराहुतिं तूष्णीं भूयसीमित्येवमुक्तेत्यर्थः ॥ ५६ ॥

**भक्षयित्वाऽभ्यात्ममपः स्रुचा निनयते त्रिः सर्पदेवजनेभ्यः स्वाहेति ॥ ५७ ॥**

**दे० भाष्यम्**—भक्षणं कृत्वाऽनन्तरमभ्यात्मम्, आत्मानमभ्यभ्यात्मम् । अप उदकं स्रुचा निनयतेऽवाङ्मुखयोर्ध्वदण्डया त्रिभिर्निनयेत् । सर्पदेवजनेभ्य इत्येतेन मन्त्रेण भक्षयित्वेति वचनाद्भक्षणेन निनयनस्य संबन्धवचनात् । अपरयोर्वा हुत्वा भक्षणे भक्षणादनन्तरं निनयनमेव । परिसमाप्ते निनयने प्राक्समिदाधानादपरयोर्होमकालो निनयनसमनन्तरमेव । संप्रदान एव होमत्वात्स्वाहाकारदर्शनाच्च होमत्वात् । पुनः पुनरुदकमादाय तेन हि सकृद्गृहीतेन बहवो होमा आदिश्यन्ते । अन्यत्र प्रकृताहुतिभ्यो होमत्वाच्च मन्त्रावृत्तिः । उदङ्ङावृत्त्येत्यधिकारादुदीच्यां दिशि निनयनं भवति । स्रुग्ग्रहणात्कमण्डलुना निनयनं न भवति ॥ ५७ ॥

**वृत्तिः**—भक्षयित्वेतिवचनं भक्षणानन्तरमेव निनयनमपि स्यादित्येवमर्थम् । अभ्यात्ममपः स्रुचा निनयते त्रिः । असंस्कारकर्मत्वान्मन्त्रोऽपि त्रिरावर्तते ॥ ५७ ॥

**अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः प्रागुदीच्योर्निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तऋषिभ्यः स्वाहेतरजनेभ्यः स्वाहेति ॥ ५८ ॥**

**दे० भाष्यम्**—अथैनामथ निनयनानन्तरमेवैतां स्रुचं कुशैरुदकेन च प्रक्षाल्य निर्लेपं कृत्वा चतस्रः स्रुचः पूर्णाः प्रागुदीच्योः प्राच्यामुदीच्यां च निनयेत् । अभ्यात्ममपः स्रुचा निनयते त्रिरित्येतत्सर्वमनुवर्तते । तस्मादेकेन मन्त्रेण त्रिरिति प्राप्ते चतस्र इत्युच्यते। पूर्णाः कर्तव्या इत्यर्थः । याश्चोक्ता याश्च वक्ष्यमाणाः सर्वाः । उपदेशे विशेष उक्तः । ताः सर्वथा भवितुमर्हन्ति । अविरोधाच्चतस्रः स्रुचो दिश आनन्तर्ययोगस्य संभवाद्याज्यानुवाक्यान्यायेन द्वे द्वे स्रुचावेकैकस्यां भवतः । अभ्यात्ममित्येतस्य प्राप्तस्य स्थाने प्राची चोदीची च भवतः । अपां निनयनमित्येतावदेव वर्तत ऋतुभ्यः स्वाहेत्येतैश्चतुर्भिर्मन्त्रैः ॥ ५८ ॥

**वृत्तिः**—अथेत्यभ्यात्मनिनयनानन्तरमेवेदमपि कर्तव्यमिति दर्शयति। एनां स्रुचमित्यर्थः। विहारस्य प्रागुदग्देशे पूर्णाश्चतस्रः स्रुचो निनयेदेकैकेन मन्त्रेणैकैकामिति ॥ ५८ ॥

**पञ्चमीं कुशदेशे पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहेति, षष्ठीं पश्चाद्गार्हपत्यस्य प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहेति ॥ ५९ ॥**

**दे० भाष्यम्**—पञ्चमीं स्रुचं कुशदेशे कुशेपूपसादयेति येऽधिकृतास्तेषां देशे पृथिव्यामित्यनेन मन्त्रेण । पञ्चमीग्रहणं त्रिरित्येतस्यैव निवृत्त्यर्थम् । कुशानामित्यनेनाभ्यात्ममिति निवृत्तम् । ' अपः स्रुचा निनयति ' इत्येतदेव वर्तते । षष्ठीं स्रुचं पूर्णां पश्चादपरस्यां दिशि गार्हपत्याग्नेः प्राणममृते जुहोमीत्यनेन मन्त्रेण । षष्ठीग्रहणं त्रिरित्येतस्यैव निवृत्त्यर्थम् । पश्चाद्वचनेनाभ्यात्मनिवृत्तिः । अपां स्रुचा निनयनमित्यनुवर्तते । शेषं पत्न्यञ्जलावित्युक्तम् । अध्वर्यूणां तदप्यविरुद्धम् ॥ ५९ ॥

**वृत्तिः**—पञ्चमीं षष्ठीमिति पूर्णस्रुक्संप्रत्ययार्थम् ॥ ५९ ॥

**प्रताप्यान्तर्वेदि निदध्यात् ॥ ६० ॥**

**दे० भाष्यम्**—प्रताप्याऽऽहवनीये प्रताप्य स्रुचमन्तर्वेदि निदध्यात्स्थापयेत् । अधिकाराद्गार्हपत्ये प्रतपनं प्राप्तं षष्ठीवचनादधिकृतमाहवनीय एव भवति । अनादेश आहवनीये भवतीत्युक्तम् । अध्वर्यूणामप्याहवनीये प्रताप्येति ॥ ६० ॥

**वृत्तिः**—प्रतपनमाहवनीयेऽन्तर्वेदिशब्दसमन्वयात् । प्रताप्य स्रुचमन्तर्वेदिदेशे निदध्यादित्युक्तम् ॥ ६० ॥

**परिकर्मिणे वा प्रयच्छेत् ॥ ६१ ॥**

**दे० भाष्यम्**—परिकर्मिणे योऽत्र परिकर्मी भवति तस्मै वैतां स्रुचं प्रताप्य प्रयच्छेद्वेति विकल्पार्थः ॥ ६१ ॥

**वृत्तिः**—परिचारकः परिकर्मीत्युच्यते ॥ ६१ ॥

**अग्रेणाऽऽहवनीयं परीत्य समिध आदध्यात्तिस्रस्तिस्र उदङ्मुखस्तिष्ठन् ॥ ६२ ॥**

**दे० भाष्यम्**—अग्रेणाऽऽहवनीयं पूर्वेणाऽऽहवनीयमग्निं परीत्य गत्वा समिध आदध्यादग्निषु प्रक्षिपेत् । अपरिमिताः प्राप्तास्तिस्रस्तिस्र एकैकस्मिन्नग्नावुदङ्मुखस्तिष्ठन्नूर्ध्वमासीनः ॥ ६२ ॥

**वृत्तिः**—पूर्वेणाऽऽहवनीयं विहारस्य दक्षिणदेशं गत्वा तस्य तस्याग्नेर्दक्षिणत उदङ्मुखस्तिष्ठंस्तिस्रस्तिस्रः समिध आदध्यात् । पुनः प्रत्येत्य पर्युक्षणादि कुर्यात् ॥६२॥

**प्रथमां समन्त्राम् ॥ ६३ ॥**

**दे० भाष्यम्**—प्रथमां समन्त्रामुत्तरे तूष्णीम् ॥ ६३ ॥

**वृत्तिः**—सकृन्मन्त्रेणेति परिभाषा प्रधानकर्मसु न प्रवर्तत इति कृत्वा प्रथमां समन्त्रामित्युक्तवानाचार्यः ॥ ६३ ॥

**आहवनीये दीदिहीति गार्हपत्ये दीदायेति दक्षिणे दीदिदायेति ॥ ६४ ॥**

**दे० भाष्यम्**—आहवनीये दीदिहीत्येतेन मन्त्रेणाऽऽहवनीयग्रहणं वेदाधिकारादग्रहणे वेदिमिति स्यात् । समिधमित्युक्तेऽपरिमिताः प्राप्ताः । तिस्रस्तिस्र इत्युच्यमाने प्राङ्मुखत्वे प्राप्त उदङ्मुखस्तिष्ठन्निति वचनात्प्राङ्निनयनेष्वासीनो भवति । तिसृणां सहाभ्याध्याने प्राप्ते प्रथमेत्येकैकस्या आधानम् । अथ प्रथमाया एव मन्त्रेण दक्षिणेन दक्षिणाग्निं गत्वा गार्हपत्येऽभ्यादध्यात् । उदङ्मुखवचनाद्वेयुत्तरेण गार्हपत्यं गत्वोदङ्मुखस्य होमो न दृश्यते । अग्निहोत्रहोमप्रवत्स्यद्यजमानप्रायश्चित्तादिषु प्राङ्मुख एव दक्षिणे दक्षिणाग्नौ दीदिदायेत्येनेन मन्त्रेणाऽऽदध्यात् । होमक्रमेणैतत् ॥ ६४ ॥

**वृत्तिः**—सर्वे स्वाहाकारान्ताः कर्तव्याः ॥ ६४ ॥

**उक्तं पर्युक्षणं ताभ्यां परिसमूहने पूर्वे तु पर्युक्षणात् ॥ ६५ ॥**

**दे० भाष्यम्**—उक्तं पर्युक्षणं तदिहापि पुनः कर्तव्यमित्यर्थः । ताभ्यां पर्युक्षणाभ्यां यथाऽऽदौ तथाऽन्त उभाभ्यां पञ्चमीद्विवचनम् । उभाभ्यां परिसमूहने भवतः परितः समन्तत ऊहनं परिसमूहनं भवति । पर्युक्षणादनन्तरं प्राप्ते पूर्वे तुशब्दः प्राप्तव्यावृत्त्यर्थः । पर्युक्षणादेव पूर्वे परिस्तरणप्रतिषेधः कृतो भवति । प्राप्तं तु लिङ्गदर्शनात् । कुशेषूपसादयेति न च कुशाश्चोदितः । एवमचोदेऽपि प्राप्नुवन्ति । शास्त्रान्तरे दर्शनात्प्राक्पर्युक्षणात्परिस्तरणानां स्थानम् । अन्वाधाय परिसमुह्य परिस्तीर्येति तेषां प्राप्तानां प्रतिषेधः क्रियते क्षणात्पूर्वे तु भवत इति ॥ ६५ ॥

**वृत्तिः**—यदुक्तं पर्युक्षणं तदिहापि कर्तव्यम् । पूर्वोक्तमिदं च द्वे पर्युक्षणे ताभ्य परिसमूहने व्याख्याते इति धर्मातिदेश एकोऽर्थः । परिसमूहने इति योगविभागात्स्वरूपसिद्धिश्च भवति । मन्त्रस्तु जपित्वेति पृथक्करणान्न भवति । लिङ्गाभावाच्च । ये द्वे परिसमूहने पर्युक्षणकर्मके विहिते तयोरनेन क्रमो विधीयते पर्युक्षणाभ्यां पूर्वे परिसमूहने भवत इति ॥ ६५ ॥

**एवं प्रातः ॥ ६६ ॥**

**दे० भाष्यम्**—यथा सायं विहरणादूर्ध्वमुक्तं विधानमेवं तत्सर्वं प्रातरपि भवति ॥ ६६ ॥

**वृत्तिः**—सायंकालेऽग्निहोत्रविधिरुक्त एवं प्रातःकालेऽपि होमः कर्तव्य इत्यर्थः ॥ ६६ ॥
तत्र विशेषमाह—

**उपोदयं व्युषित उदिते वा ॥ ६७ ॥**

**दे० भाष्यम्**—उपोदयं प्रादुष्कालोऽवशिष्टः कालो नियम्यते । उपोदयमुप समीप उदयसमीपे होतव्यम् । व्युषित उपोदय उषस्युदितायां होतव्यम् । उदितेऽनुदिते वाऽऽदित्ये होतव्यम् । इत्येते त्रयः कालविकल्पाः । होमकालस्यानुपूर्ववचनात् । उपोदयमित्येतस्य पूर्वपक्षत्वमत्रोदितेत्यस्य प्रधानत्वम् । यथा—'उद्यन्तु खलु वा आदित्य आहवनीयेन रश्मीन्संदधाति ' इति श्रुतिः । तस्मिन्नुदिते वा होतव्यमिति त्रयः कालाः ॥ ६७ ॥

**वृत्तिः**—उपोदयमादित्योदयसमीप इत्यर्थः । व्युषित उषस्युदित इत्यर्थः । उदित आदित्यमण्डले कृत्स्न उदित इत्यर्थः । एते त्रयः प्रातर्होमप्रधानकालाः । तत्र यद्युपोदयमुदित इत्युच्यते, उदित आदित्ये सत्युदयसमीप इति द्वाभ्यां पदाभ्यामेक एव कालो

विहितः स्यात् । तद्भ्रान्तिनिवृत्त्यर्थं व्युषितशब्दात्पूर्वमुपोदयशब्दं पठितवानाचार्यः । एतेषु त्रिषु कालेषु प्रधानं यथा संपद्यते तथाऽङ्गानामेवोत्कर्षोऽपकर्षो द्रष्टव्यः ॥ ६७ ॥

**सत्यऋताभ्यां त्वेति पर्युक्षणमोमुन्नेष्यामीत्यतिसर्जनं हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहेति समिदाधानं भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति होम उन्मार्जनं च ॥ ६८ ॥**

**इत्यग्निहोत्रसूत्रम् ।**

**दे० भाष्यम्**—सत्यऋताभ्यां त्वेति प्राते पर्युक्षणस्य स्थानेऽन्यो मन्त्र आदिश्यते । सत्यऋताभ्यां त्वा पर्युक्षामीत्यनेन मन्त्रेण पर्युक्षणं जपित्वा वचनात्पर्युक्षामीति प्राप्नोतीत्युक्तम् । अन्यथा यथाम्नातं प्राप्नोति मन्त्रः । ओमुन्नेष्यामीत्यतिसर्जनस्य स्थाने भवति । हरिणीं त्वेत्यनेन मन्त्रेण समिदाधानं भवति । भूर्भुवः स्वरोम्३ सूर्य इत्यनेन मन्त्रेण होमो भवति । उन्मार्जनं च । अवमृष्टकुशमूलेषु निमार्ष्टीत्यवमार्जनम् । अस्य कर्मणः स्थान उन्मार्जनं भवति । पाणिनाऽग्र ऊर्ध्वं निमार्ष्टि तदुन्मार्जनम् । स एव मन्त्रः । अन्यत्तु कर्म । चशब्दः समुच्चयार्थः । य उक्ता मन्त्राः । इदं च कर्म । एतदन्यद्भवति । अतोऽन्यत्समानम् । सायं होमेन यावत्स्यादग्निहोत्रहोमो याजमानत्वाद्यजमानेनैव होतव्यम् । क्षीरहोता वा जुहुयात् । धनेन हि स परिक्रीतो भवति । ब्रह्मचारी वा जुहुयात् । ब्राह्मणो हि स परिक्रीतो भवति । परिक्रीतेन हुतं स्वयमेव हुतं भवति । तस्माद्याजमानं यजमानाधिकारादिदमपि याजमानम् ॥ ६८ ॥

**इत्यग्निहोत्रसूत्रभाष्यम् ।**

**वृत्तिः**—एते प्रातर्होमे विशेषाः ॥ ६८ ॥

**इत्यग्निहोत्रसूत्रे नारायणीया वृत्तिः ।**



# अग्निहोत्रप्रयोगः।

---

एकः—अपराह्णे शुचिर्यज्ञोपवीती प्राङ्मुखोपविष्टो विहाराद्बहिराचम्य तीर्थेन विहारं प्रविश्य गार्हपत्यं प्रज्वल्य

( १ ) विट्कुलात्
( २ ) वित्तवतो वा
( ३ ) गार्हपत्याद्वा
} दक्षिणाग्निमानीय

( ४ ) भ्रियमाणं वा प्रज्वल्य

( ५ ) अरणिमन्तं वा मथित्वा दक्षिणाग्न्यायतने निधाय प्रज्वल्य गार्हपत्याज्ज्वलन्तमग्निं शरावे गृहीत्वा

**देवं त्वा देवेभ्यः श्रिया उद्धरामि।**

इत्युद्धृत्य

**उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार।**
**अह्ना यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मात्।**

इति प्रणीय

**अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ।**
**तयाऽनन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहा।**

इत्यादित्यमभिमुख आहवनीयायतने निदध्यादत ऊर्ध्वमाहिताग्निर्व्रतचार्याहोमात्। ओपोदयं संध्यामुपासीत तत आहिताग्निराचम्य

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायमग्निहोत्रं पयसा होष्यामि।**

इति संकल्प्य

**अग्निहोत्रं जुहुधि।**

इत्येकं प्रति प्रैषं कुर्यात्।

एकः—दक्षिणाग्निं परिसमुह्य

**ऋतसत्याभ्यां त्वा पर्युक्षामि।**

इति जपित्वा त्रिः पुनःपुनरुदकमादाय पर्युक्षेत्।

एवमेव गार्हपत्यमेवमेवाऽऽहवनीयम्।

गार्हपत्यादविच्छिन्नामुदकधारां हरेत्। आ, आहवनीयात्।

**तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्।**
**अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्।** इति।

ततः पश्चाद्गार्हपत्यस्योपविश्य गार्हपत्यादुदगङ्गारानपोहेत् ।

**सुहुतकृतः स्थ सुहुतं करिष्यथ ।**

इति तेष्वग्निहोत्रमधिश्रयेत् ।

**अधिश्रितमध्यधिश्रितमधिश्रितं हि ३ म् ।**

इत्यधिश्रितमवज्वलयेदनधिश्रयं च ।

**अग्निष्टे तेजो मा हार्षीत् ।**

इति । पुनर्ज्वलता त्रिः परिहरेत् ।

**अन्तरितं रक्षोऽन्तरिता अरातयः ।**

इति परिहरणं कृत्वा तदुल्मुकं निरस्याप उपस्पृश्य समुदन्तं कर्षन्निवोदगुद्वासयेत् ।

**दिवे त्वा अन्तरिक्षाय त्वा पृथिव्यै त्वा ।**

इति निदधत् ।

**सुहुतकृतः स्थ सुहुतमकार्ष्ट ।**

इत्यङ्गारान्गार्हपत्येऽतिसृज्य स्रुक्स्रुवं प्रतितपेत् ।

**प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातयः ।**

इत्युत्तरतः स्थाल्याः स्रुचमासाद्य

**ओमुन्नयानि ।**

इत्यतिसर्जयीत ।

**आहिताग्निः**—आचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैतत्कृत्वा ( पत्नी गार्हपत्यस्य दक्षिणत आस्ते )

**ओमुन्नय ।**

इत्यतिसृजेत् ।

**एकः**—अतिसृष्टः—

**भूरिळा, भुव इळा, स्वरिळा, वृध इळा ।**

इति स्रुवं पूरयित्वा स्रुचि चतुरुन्नयेत् । ततः स्थालीमभिमृश्य समिधं स्रुवं चाध्यधिगार्हपत्यं हृत्वा प्राणसंमितामाहवनीयसमीपे कुशेषूपसाद्य जाग्वाग्याऽऽहवनीये समिधमादध्यात् ।

**रजता त्वाऽग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहा ।**

इति समिधमाधाय

**आहिताग्निः**—अग्नये ज्योतिष इदं न मम । रजता त्वाऽग्निज्योतिषं

रात्रिमिष्टकामुपदधे तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । इति ।

एकः—विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धा

इत्यप उपस्पृश्य प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रे जान्वन्य स्रुचाऽभिजुहुयात्—

भूर्भुवः स्वरो ३ मग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ।

आहिताग्निः—अग्नये ज्योतिष इदं न मम ।

ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
जन्मन्देवानां विशस्त्रिष्वारोचने दिवः ॥

एकः—पूर्वामाहुतिं हुत्वा कुशेषु स्रुवं सादयित्वा गार्हपत्यमवेक्षेत —

पशून्मे यच्छ ।

अथोत्तरामाहुतिं भूयसीमसंसृष्टां प्रागुदगुत्तरतां वा पूर्वाहुतेर्जाम्वाच्यैव—

प्रजापतये

इति मनसा ध्यायन्

स्वाहा

इत्युच्चार्य जुहुयात् ।

आहिताग्निः—प्रजापतय इदं न मम ।

उपोत्थायोत्तरां काङ्क्षेतेक्षमाणोऽनुमन्त्रयेत्—

भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः ।
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ।
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ।
अग्ने देवाँ इहाऽऽवह जज्ञानो वृक्त बर्हिषे । असि होता न ईड्यः ।
ताँ उशतो विबोधय यदग्ने यासि दूत्यम् । देवैरासत्सि बर्हिषि ।
घृताहवनदीदिवः प्रतिष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ।
अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ।

एकः—उत्तराहुत्यपेक्षया भूयिष्ठं स्रुचि शिष्ट्वाऽऽहुतिदेशस्थां स्रुचं त्रिरनुप्रकम्प्य स्रुग्गतं लेपं पाणिनाऽधोमुखेनावमृज्य पाणिगतं लेपं कुशमूलेषु निमृजेत् —

पशुभ्यस्त्वा ।

आहिताग्निः—पशुभ्य इदं न मम ।

एकः—स्रुग्घस्त एव कुशमूलानां दक्षिणत उत्ताना अङ्गुलीः कुर्यात् । प्राचीना-वीती भूत्वा—

**स्वधा पितृभ्यः ।**

इत्यपोऽवनिनीय ।

**आहिताग्निः**—प्राचीनावीती—

**पितृभ्य इदं न मम ।**

**एकः**—स्रुचं निधायाऽऽहिताग्निरेकश्च द्वौ यज्ञोपवीतिनौ भूत्वा—

**वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धा ।**

इत्यप उपस्पृशतः ।

**एकः**—गार्हपत्यसमीपं गत्वा जान्वाच्य—

**प्रजापतये ।**

इति मनसा ध्यायन्

**स्वाहा ।**

इत्युच्चार्य गार्हपत्ये समिधमाधाय ।

**आहिताग्निः—प्रजापतय इदं न मम ।**

**एकः—विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धा ।**

इत्यप उपस्पृश्य प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रेऽभिजुहुयात्–

**अग्नये गृहपतये स्वाहा ।**

**आहिताग्निः—अग्नये गृहपतय इदं न मम ।**

**एकः**—पुनः स्रुवेणाऽऽदाय पूर्वाहुत्यपेक्षया भूयसीं पूर्वाहुतेः प्रागुदगुत्तरतो वा

**प्रजापतये ।**

इति मनसा ध्यायन्

**स्वाहा ।**

इत्युच्चार्योत्तरामाहुतिं जुहुयात् ।

**आहिताग्निः—प्रजापतय इदं न मम ।**

**एकः**—दक्षिणाग्निसमीपं गत्वा जान्वाच्य

**प्रजापतये ।**

इति मनसा ध्यायन्

**स्वाहा ।**

इत्युच्चार्य समिधमाधाय

**आहिताग्निः–प्रजापतय इदं न मम ।**

**एकः—विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धा ।**

इत्यप उपस्पृश्य स्थाल्याः स्रुवेणाऽऽदाय प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रेऽभिजुहुयात्—

**अग्नये संवेशपतये स्वाहा ।**

**आहिताग्निः—अग्नये संवेशपतय इदं न मम ।**

**एकः**—पुनः स्रुवेणाऽऽदाय पूर्वाहुत्यपेक्षया भूयसीं पूर्वाहुतेः प्रागुदगुत्तरतो वा

**प्रजापतये ।**

इति मनसा ध्यायन्

**स्वाहा ।**

इत्युच्चार्योत्तरामाहुतिं जुहुयात् ।

**आहिताग्निः—प्रजापतय इदं न मम ।**

इति त्यक्त्वा पश्चाद्गार्हपत्यस्य तिष्ठन्

**अभयं वोऽभयं मेऽस्तु ।**

इत्यग्नीनुपतिष्ठेत ।

**एकः—**उदङ्मुखो विहाराद्बहिः स्रुक्स्थहविरेकदेशमादाय

**आयुषे त्वा प्राश्नामि ।**

इति प्रथमं भक्षयित्वाऽऽचम्य शेषमादाय

**अन्नाद्याय त्वा प्राश्नामि ।**

इत्युत्तरं भक्षयित्वाऽऽचम्य विहारं प्रविश्य वेद्यंसस्यान्तः प्राङ्मुखः स्रुचाऽऽत्माभिमुखं त्रिरपो निनयेत्—

**सर्पदेवजनेभ्यः स्वाहा ।**

मन्त्रोऽपि त्रिरावर्तनीयः ।

**आहिताग्निः—सर्पदेवजनेभ्य इदं न मम ।**

**एकः**—अभ्यात्मनिनयनानन्तरं स्रुचं प्रक्षाल्याद्भिः पूरयित्वा प्राच्यां दिशि

**ऋतुभ्यः स्वाहा ।**

इति निनयेत् ।

**आहिताग्निः—ऋतुभ्य इदं न मम ।**

**एकः**—पुनः स्रुचमद्भिः पूरयित्वा प्राच्यामेव

**दिग्भ्यः स्वाहा ।**

**आहिताग्निः—दिग्भ्य इदं न मम ।**

**एकः**—पुनः स्रुचमद्भिः पूरयित्वोदीच्यां दिशि

**सप्तऋषिभ्यः स्वाहा ।**

**आहिताग्निः—सप्तऋषिभ्य इदं न मम ।**

**एकः**—पुनः स्रुचमद्भिः पूरयित्वोदीच्याम्

**इतरजनेभ्यः स्वाहा ।**

**आहिताग्निः—इतरजनेभ्य इदं न मम ।**

**एकः**—पुनः स्रुचमद्भिः पूरयित्वा कुशदेशे

**पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहा ।**

**आहिताग्निः—अग्नये वैश्वानरायेदं न मम ।**

**एकः**—पुनः स्रुचमद्भिः पूरयित्वा गार्हपत्यस्य पश्चात्

**प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहा ।**

**आहिताग्निः—प्राणायामृतायेदं न मम ।**

**एकः**—आहवनीये स्रुचं प्रताप्यान्तर्वेदि निदध्यात्परिकर्मिणे वा प्रयच्छेत् । ततः पूर्वेणाऽऽहवनीयं विहारस्य दक्षिणदेशं गत्वाऽऽहवनीयस्य दक्षिणत उदङ्मुखस्तिष्ठन्नाहवनीये तिस्रः समिध आदध्यात् । तत्र प्रथमां समन्त्रां

**दीदिहि स्वाहा ।**

**आहिताग्निः—अग्नय इदं न मम ।**

**एकः**—अन्ये द्वे समिधौ तूष्णीमेवाऽऽहवनीये प्रक्षिपेत् । तथैव दक्षिणाग्नेर्दक्षिणं गत्वा गार्हपत्यस्य दक्षिणत उदङ्मुखस्तिष्ठंस्तिस्रः समिधो गृहीत्वा प्रथमां समन्त्रां

**दीदाय स्वाहा ।**

**आहिताग्निः—अग्नय इदं न मम ।**

**एकः**—ततो द्वे तूष्णीमेव गार्हपत्येऽग्नौ प्रक्षिपेत् । ततो दक्षिणाग्नेर्दक्षिणत उदङ्मुखस्तिष्ठंस्तिस्रः समिधो गृहीत्वा प्रथमां समन्त्रां

**दीदिदाय स्वाहा ।**

**आहिताग्निः—अग्नय इदं न मम ।**

**एकः**—ततोऽन्ये द्वे समिधौ तूष्णीमेव दक्षिणाग्नावादध्यात् ।

तत उत्तरत एत्य पुनः प्रत्येत्य परिसमूहनपर्युक्षणे कृत्वाऽऽचामेत् ।

**आहिताग्निः—आचम्यानेन सायमग्निहोत्राख्येन कृतेन कर्मणा परमेश्वरः प्रीयताम् ।**

**इत्यग्निहोत्रप्रयोगः ।**

## प्रातरग्निहोत्रे विशेषः—

१ उदयात्प्रागुद्धरणम् ।

२ उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार । रात्र्या यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मात् ।

३ होमकालः-उपोदयं व्युषित उदिते वा ।

४ प्रातरग्निहोत्रं पयसा होष्यामि ।

५ सत्यऋताभ्यां त्वा पर्युक्षामि ।

६ ओमुन्नेष्यामि ।

७ हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहा ।

८ सूर्याय ज्योतिष इदं न मम ।

९ हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ।

१० ॐ भूर्भुवः स्वरों ३ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।

११ सूर्याय ज्योतिष इदं न मम ।

१२ प्राङ्मुख उत्तानेन पाणिना स्रुचो बिलमारभ्याग्रमुन्मृजति ।

अन्यत्सायमग्निहोत्रेण समानम् ।

### अयं विशेषः—

१ येन द्रव्येण सायं होमस्तेनैव प्रातः ।

२ कर्तृनियमोऽप्येवम् । प्रतिनिधौ नायं नियमः ।

३ स्वकर्तृकहोमे विशेषः—ओमुन्नयानीत्यन्तं कृत्वाऽग्रेणाऽऽहवनीयं गत्वा स्वस्थान उपविश्य, ओमुन्नयेत्युक्त्वा पुनः पश्चाद्गार्हपत्यस्योपविश्य भूरिळेत्यादिध्रुवा सीदेत्यन्ते विद्युदसि० त्रिष्वारोचने दिव इत्यन्ते पशून्मे यच्छ । उत्तराहुतिमनुमन्त्र्य त्रिरनुप्रकम्प्येत्यादि वृष्टिरसीत्यन्तम् ।

### पार्वणो विशेषः—

१ पर्वणि सायं प्रतिपदि प्रातः स्वयमेव जुहुयादग्निहोत्रम् ।

२ यवाग्वा पयसा वा न द्रव्यान्तरेण ।

उपरि निर्दिष्टाः सर्वे विशेषा ज्वरादिनाऽभितप्तेन यथोपपत्त्यनुष्ठेयाः । न तत्र नियमविशेषव्यापारः

## अध्वप्रमीताग्निहोत्रविधिः ।

१ यद्याहिताग्निरध्वनि प्रमीयेत तद्वार्ताश्रवणानन्तरं पाथिकृतीमिष्टिं कृत्वा तदङ्गागमनपर्यन्तमग्निहोत्रधर्मकस्तूष्णीं होमः कार्यः । नतु कथंचिदपि यजमानदेशं प्रत्यग्नयो नेयाः । यथोक्तं सिद्धान्तभाष्ये—

" नासति यजमाने ग्राममर्यादामतिहरेयुः ।
यद्यग्नीन्हरेयुर्लौकिकाः संपद्येरन् ॥ "

अथ तस्मिन्होमे विशेषः—

या मृतवत्सा वत्सान्तरेण दुह्यते तत्पयसा होमः कार्यः । साङ्गं प्रधानम् । तूष्णीं प्रधाने प्रजापतिं मनसा ध्यायेदिति वृत्तिकृत् । तन्मते त्वेकैवाऽऽहुतिः । नात्र तूष्णीं प्रधानहोमे प्रजापतिं ध्यायेदिति सिद्धान्तभाष्यकृत् । तन्मते आहुतिद्वयम् । तत्र त्यागौ नित्यवत् । मतद्वयेऽपि सर्वहुतत्वान्न भक्षाय शेषः । सायंप्रातर्विध्यन्तो नित्यवत् ।

**अत्र देवत्रातः**—यजमानशरीरानयनपर्यन्तं तूष्णीं हुत्वा तदानयनोत्तरं पाथिकृतीं कृत्वा शरीरसंस्कारः कार्यः । अधः समिद्धारणं न प्राशनम् । न स्रुङ्निनयने, आदावन्ते च परिसमूहनपर्युक्षणे न स्तः । यत्पयःसंस्कारात्प्राक्कर्म तल्लुप्यते ।

**अत्र सिद्धान्तभाष्यकृत्**—मुमूर्षुविषय एवायं विधिर्न मृतविषयः । मृतविषय एवायमिति वृत्तिकृद्देवत्रातौ ।

यद्याहिताग्नेरपरपक्षे मरणशङ्का भवति तदा कृष्णपक्षाहुतीः सर्वाः शुक्लप्रतिपत्प्रातर्होमेन सह पक्षहोमन्यायेन हुत्वा दर्शोऽप्यपकृष्य कार्यः । चातुर्मास्यान्तराले तस्य यानि पर्वाण्यवशिष्टानि तान्यपकृष्य कार्याणि । मरणशङ्कायामेवैष विधिर्न मृतावस्थायामिति सर्वे ।

**अत्र देवत्रातो विशेषमाह**—होमार्थं तूष्णीं विहरणं होमयोरन्तरा मरणशङ्कायां पूर्वाहुत्योत्तरामाहुतिं तन्त्रेण कुर्यात् । जीवति चेत्पुनः काले होमाः कार्याः । अनाहिताग्नेर्नैष विधिरिति ।

**अत्र त्रिकाण्डमण्डनः**—

आहिताग्निः कदाचित्तु कृष्णपक्षे मृतो यदि ।
तदा शेषाहुतीः सर्वा जुहोतीत्याश्वलायनः ॥ (त्रिका० २।११७)।

मरणोत्तरं तु पक्षहोमन्यायेन क्रियमाणा आहुतयोऽध्वप्रमीतस्य होमवत्कार्याः । इष्टीनां स्थाने पूर्णाहुतयः कार्याः ।

इत्यध्वप्रमीताग्निहोत्रविधिः ।

## पक्षहोमप्रकारः ।

आहिताग्निः—ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पक्षहोमरूपमग्निहोत्रं होष्यामि ।

पर्वदिनात्प्राग्यावन्ति दिनानि तावन्ति चतुरुन्नयनानि प्रतिपदि सायं बृहति पात्रान्तरे स्रुचं स्थापयित्वा तत्र गृह्णीयात् । ततः सर्वं नित्याग्निहोत्रं समाप्य

अनेन पक्षहोमरूपाग्निहोत्राख्येन कृतेन कर्मणा परमेश्वरः प्रीयताम् ।

तदेतत्सर्वं सुस्पष्टं समग्राहि त्रिकाण्डमण्डनभास्करमिश्रेण—

प्रतिपद्युन्नयेत्सायमापद्यन्यत्र वा दिने ।
यावन्त्यौपवसथ्याहात्प्राग्दिनानि भवन्ति हि ॥
तावन्ति परिगृह्णीयाच्चतुरुन्नयनानि च ।
पात्रान्तरसहायायां नित्यायां प्राकृतस्रुचि ॥
स्थूलं स्रुगन्तरं वाऽपि कृत्वा तत्र समुन्नयेत् ।
एका समित्सकृद्धोमः सकृदेव निमार्जनम् ॥
उपस्थानं सकृत्कार्यं शेषा प्रकृतिरिष्यते ।
एवमेवोत्तरत्राह्नि प्रातर्होमान्समस्य तु ॥
जुहोत्यौपवसथ्याहे प्रातर्होमावधीन्सकृत् ।
पक्षहोमे हि तत्रैकमुदाहृत्योच्यते मनाक् ॥
चतुरुन्नयनान्यस्मिन्नष्टाविंशतिमुन्नयेत् ।
चतुर्धा कृत्वा जुहुयात्षट्पञ्चाशतमाहुतीः ॥
प्रक्षेपास्तत्र चत्वारः प्रतिप्रक्षेपमाहुतीः ।
मन्त्रेण जुहुयाद्विद्वांश्चतुर्दश चतुर्दश ॥
आपच्चेदनुवर्तेत दीर्घकालं कदाचन ।
यावज्जीवमविच्छिन्नान्पक्षहोमान्समाचरेत् ॥
आपदेवावधिस्तत्र न पक्षगणनाऽवधिः ॥ इति ।

कृतेऽपि पक्षहोमेऽग्नेर्धारणं कार्यमेव । अरणिषु समारोपः कार्यः । तदाह मण्डनाचार्यः—

समारोपविधानेन समारोपयतेऽनलान् ।
ये धार्यन्तेऽथवा धार्यान्धारयत्येव पूर्ववत् ॥

अत्र बहुवचनं तु अजस्राभिप्रायेण । एवं चाऽऽपदनुसारेण कृतहोमसमासस्य समारोपोऽस्त्यमुनैव न्यायेन । नित्यहोमिनोऽपि प्रवासामयाविघ्ननिमित्तवशाद्धारणाशक्तौ होमप्रयोगमपवृज्य प्रत्यहं समारोपोऽप्युक्तो भवति । अतिक्रान्तमर्यादः किलात्राथर्वपरिशिष्टकारः—अत्यशक्तौ काले काले प्रचर्याऽऽत्मनि समिधि वाऽऽरोपयेदत्यन्ताशक्तावप्यपकृष्यापि प्रचर्याऽऽरोपयेन्नित्यानि नातिपातयेन्नोत्कर्षेणावरोपयेदिति । कथं नु नामायमधिकारी नित्यं कर्मानुतिष्ठेदिति यत्नोपचर्यतेयं विभावनीया ।

इति पक्षहोमप्रकारः ।



## शेषहोमप्रकारः ।

आहिताग्निः—ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शेषहोमरूपमग्निहोत्रं होष्यामि ।

येन प्रकारेण पक्षहोम उक्तस्तेनैव प्रकारेण शेषहोमः कार्यः । अयं च विशेषः—प्रतिपद्व्यतिरिक्तदिने द्वितीयादिषु यस्मिन्दिने चाऽऽपत्प्राप्तिस्तद्दिनमारभ्य पर्वहोमदिनात्प्रागथवा यद्दिने चाऽऽपन्निवृत्तिस्तद्दिनपर्यन्तं वा भवति । सर्वोऽप्ययं समस्यहोम एव । आपन्निमित्तको द्व्यादिदिनात्मकोऽपि भवतीति तदुक्तं मण्डनः संजग्राह प्रथमकण्डिकायाम्—

एवं प्रतिपदोऽन्यत्र यत्राऽऽपदुपपद्यते ।
तथैवौपवसथ्याहात्प्राग्यत्राऽऽपद्विनश्यति ॥
तृतीयायां चतुर्थ्यां वा पञ्चम्यां वा परत्र वा ।
तदादीनां तदन्तानां होमानां स्यात्समस्यता ॥

एवं पक्षहोमवच्छेषहोमरूपमग्निहोत्रं हुत्वा—

अनेन पक्षहोमरूपाग्निहोत्राख्येन कृतेन कर्मणा परमेश्वरः प्रीयताम् ।

इति शेषहोमप्रकारः ।

---

## समस्यहोमप्रकारः ।

आहिताग्निः—ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं समस्याग्निहोत्रं होष्यामि ।

सायंप्रातर्होमौ सायं समस्य होतव्यौ । तदेतच्छ्लोकयामास मण्डनः—

सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ।
आपन्नो जुहुयात्तत्र समिदेकाऽथवा द्वयम् ॥
सायंहोमस्य मुख्यत्वात्तदीयं तन्त्रमिष्यते ।
चतस्र आहुतीः कुर्यात्तत्र द्वे सायमाहुती ॥
द्वे प्रातराहुती सायं होमे चैका समिद्यदि ।
समिन्कृता द्वितीया चेत्सा भवेत्प्रातराहुतिः ॥
द्विः सायं होमवत्पृच्छ्याद्द्विः प्रातर्होमवत्स्रुचम् ॥

शेषं नित्यहोमवत्।

अनेन समस्याग्निहोत्रहोमेन कृतेन कर्मणा श्रीपरमेश्वरः प्रीयताम्।

इदमपि पक्षान्तरं स एवाऽऽह—

सायंतनान्समस्याऽऽदौ सर्वान्प्रातस्तनानपि।
पुनस्तानुभयान्सायं समस्येदुक्तमार्गतः॥
यावन्तोऽत्र समासास्ते सर्वे सायमुपक्रमाः।
प्रातःकालापवर्गाश्च न तु प्रातरुपक्रमाः॥

इति समस्याग्निहोत्रप्रकारः।

---

१ **पक्षहोमः**—पक्षशब्दः पञ्चदशदिनात्मकार्धमासवाचकः। अत्र तु प्रतिपदि सायमारभ्यामावास्याप्रातःपर्यन्तकालवाचकः। तथा च तेषु दिवसेषु कर्तव्या येऽग्निहोमास्ते सर्वे प्रतिपदि सायं सायंतना द्वितीयायां प्रातः प्रातस्तना होतव्याः। तस्य कर्मविशेषस्य पक्षहोम इति नामधेयम्। अध्वर्युभ्योऽयं ग्राह्यः।

२ **शेषहोमः**—नात्र प्रतिपद्येव सायमित्यादिनियमः। अपि तु पक्षमध्ये पञ्चषा होमा निर्वर्तिताः। अवशिष्टा होमा ये पक्षहोमन्यायेन निर्वर्त्यन्ते स शेषहोमः।

३ **समस्यहोमः**—प्रातर्होमाः सायमेव यत्र हूयन्ते सायंहोमेन सह समस्यैकीकृत्य यत्र प्रातर्होमो हूयते स समस्यहोम इति।

# आहिताग्निप्रवासविधिसूत्रम्।

प्रवत्स्यन्नग्नीन्प्रज्वल्याऽऽचम्याति क्रम्योपतिष्ठत आहवनीयं शंस्य पशून्मे पाहीति। गार्हपत्यं नर्यप्रजां मे पाहीति। दक्षिणमथर्वपितुं मे पाहीति। गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहान्गोपायतं युवम्। अविनष्टानविहृतान्पूषैनानभिरक्षत्वस्माकं पुनरायनादिति। यथेतं प्रत्येत्य प्रदक्षिणं परियन्नाहवनीयमुपतिष्ठते। मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे। तत्त्वं बिभृहि पुनरा ममैतोस्तवाहं नाम बिभराण्यग्न इति प्रव्रजेदनपेक्षमाणो मा प्रगामेति सूक्तं जपन्नारादग्निभ्यो वाचं विसृजेत सदा सुगः पितुमाँ अस्तु पन्था इति पन्थानमवरुद्ध्यानुपस्थिताग्निश्चेत्प्रवासमापद्येतेहैव सन्तत्र सन्तं त्वाऽग्ने हृदा वाचा मनसा वा बिभर्मि। तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठत इति प्रतिदिशमग्नीनुपस्थायापि पन्थामगन्महीति प्रत्येत्य समित्पाणिर्वाग्यतोऽग्नीञ्ज्वलतः श्रुत्वाऽभिक्रम्याऽऽहवनीयमीक्षेत विश्वदानीमाभरन्तोऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम। नमस्ते अस्तु मीह्ळुषे नमस्त उपसद्वने। अग्ने शुम्भस्व तन्वः संमारय्यासृजेत्यग्निषु समिध उपनिधायाऽऽहवनीयमुपतिष्ठते। मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः। ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेद इति। ततः समिधोऽभ्यादध्यादाहवनीये—अगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्। अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्व स्वाहेति। गार्हपत्येऽयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहेति। दक्षिणेऽयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः। अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहेति। गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहानजूगुपतं युवम्। अविनष्टानविहृतान्पूषैनानभ्यरक्षीदास्माकं पुनरायनादिति यथेतं प्रत्येत्य प्रोष्य भूयो दशरात्राच्चतुर्गृहीतमाज्यं जुहुयान्मनोज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु। या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहेत्यग्निहोत्राद्धोमे च प्रतिहोममेके परिसमुह्योदग्विहारादुपविश्य भूर्भुवः स्वरिति वाचं विसृजेत गृहानीक्षेताप्यनाहिताग्निर्गृहा मा बिभीतोप वः स्वस्त्येवोऽस्मासु च प्रजायध्वं मा च वो गोपतीरिषदिति प्रपद्येत गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान्। इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानीति शिवं शग्मं शंयोः शंयोरिति त्रिरनुवीक्षमाणो विदितमप्यलीकं न तदहर्ज्ञापयेयुर्विज्ञायतेऽभयं वोऽभयं मेऽस्त्वित्येवोपतिष्ठेत प्रवसन्प्रत्येत्याहरहर्वेति॥ ५॥

# सवृत्त्याहिताग्निप्रवासविधिसूत्रभाष्यम् ।

**प्रवत्स्यन्नग्नीन्प्रज्वल्याऽऽचम्यातिक्रम्योपतिष्ठते ॥ १ ॥**

**दे० भाष्यम्**—प्रवसतो यजमानस्य यदुच्यते प्रवत्स्यन्प्रवसिष्यन्यजमान इदं वक्ष्यमाणं कृत्वा प्रवसेत् । प्रकृष्टो वासो यत्र गत्वा यो होमकाल आगन्तुं न शक्नोति स प्रवासः । प्रवसिष्यन्यजमानः प्रवत्स्यन्प्रवसिष्यन्प्रवासं गमिष्यन्निदं विधानं कुर्यात् । अधिकारश्चैतदग्नीन्प्रज्वल्याग्नीन्विहृत्य भवत्यजस्रान्वा प्रज्वल्य सुसमिद्धान्कृत्वाऽऽचम्य प्रयतोऽपि पुनराचम्यातिक्रम्य ततः प्रविश्य तत उपतिष्ठते ॥ १ ॥

**वृत्तिः**—यस्मिन्ग्रामेऽग्नय आसते तस्मात्प्रदेशाद्ग्रामान्तर एकरात्रावमो वासः प्रवासः । तं करिष्यन्प्रवत्स्यन्भवति । अग्नीनिति बहुवचनात्सर्वान्विहृत्य प्रज्वलयेत् । प्रज्वल्याऽऽचम्य तीर्थदेशेन प्रपद्यातिक्रम्याग्नीनुपतिष्ठते । अतिक्रम्येति । अव्यक्तोपस्थानदेशमातिक्रम्यात्यन्तसमीपं गत्वा तं तमग्निमुपतिष्ठत इत्यर्थः । इदं कर्माऽऽहिताग्निः स्वयमेव कुर्यात् ॥ १ ॥

इदमनेनेत्याह—

**आहवनीयं शंस्य पशून्मे पाहीति । गार्हपत्यं नर्यप्रजां मे पाहीति । दक्षिणमथर्वपितुं मे पाहीति । गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् । अविनष्टानविहृतान्पूषनाभिरक्षत्वस्माकं पुनरायनादिति ॥ २ ॥**

**दे० भाष्यम्**—आहवनीयमग्निं शंस्येत्यनेन मन्त्रेण । प्रज्वल्येति प्रज्वलनमिष्टं विधीयते । आचमनं कर्माङ्गं प्रयतस्यापि विधीयते । आचम्योपतिष्ठत इत्युक्ते तत्राऽऽचम्यैवोपस्थानं प्राप्तम् । आरादुपकारित्वादुपस्थानस्य । तस्मादतिक्रम्योपतिष्ठत इत्युच्यते । आहवनीयग्रहणं गार्हपत्याविवक्षार्थम् । अन्यथा गार्हपत्यस्यैवायं मन्त्रः स्यात् । गार्हपत्यं गत्वोपतिष्ठते नर्यप्रजां मे पाहीत्यनेन मन्त्रेण । दक्षिणाग्निमुपतिष्ठते ' अथर्व ' इत्यनेन मन्त्रेण । गार्हपत्याहवनीया अग्नी ईक्षते ' इमान्मे ' इत्यनेन मन्त्रेण ॥ २ ॥

**वृत्तिः**—दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन्गार्हपत्याहवनीयावीक्षते—इमान्मे मित्रावरुणा इति । उत्तरत्र ' यथेतं प्रत्येत्य ' इतिवचनात्तत्रैव तिष्ठन्निति लभ्यते । द्विवचनलिङ्गाद्युगपदेवेक्षेत ॥ २ ॥

**यथेतं प्रत्येत्य प्रदक्षिणं पर्यन्नाहवनीयमुपतिष्ठते । मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे । तत्त्वं बिभृहि पुनरामदैतोस्तवाहं नाम बिभराण्यग्न इति ॥ ३ ॥**

**दे० भाष्यम्**—यथेतं यथागतं प्रत्येत्य प्रतिगत्य गार्हपत्यं गार्हपत्यदेशं प्राप्य गार्हपत्यदेशात्प्रदक्षिणं दक्षिणतो विहारं कृत्वा परीयाद्गच्छन्नाहवनीय मुपतिष्ठते ' मम नाम ' इत्यनेन । मन्त्रस्थस्यैवोपस्थानं प्राप्तमाराादुपकारित्वात्तस्मादार्थैवमित्युच्यते । ' प्रत्यत्ये ' इत्यनुच्यमाने दक्षिणाग्निदेशादेव प्रत्यागच्छन्नुपस्थानं ब्रूयात् । प्रत्येत्येत्युक्ते समीपं गत्वोपस्थानं प्राप्तम् । कस्मादिदमुच्यते । प्रदक्षिणं परिगच्छन्नुपतिष्ठत इति । तस्माद्गार्हपत्यदेशं प्राप्य तत एवोपस्थानमन्त्रः प्रतिपद्यते । एवं ब्रुवतो दक्षिणतो विहारो भवति । ततः प्रदक्षिणमित्युच्यते । परियन्नेवोपतिष्ठते न गत्वा। आहवनीयग्रहणं गार्हपत्याहवनीययोरधिकारात्प्रव्रजेत्परीयन्नुपतिष्ठत इत्युक्त उपस्थानमन्त्रं समाप्य यावदाहवनीयं न प्राप्नोति ॥ ३ ॥

**वृत्तिः**—आहवनीयमुपस्थायोत्तरेण विहारं गत्वा गार्हपत्यस्य प्रत्यगुदग्देशेऽत्यन्तसमीपं गत्वा तमुपस्थाय तद्वदेव स्थित्वा दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन्गार्हपत्याहवनीयेक्षणं कृत्वा पुनस्तेनैव मार्गेणाऽऽहवनीयसमीपं गत्वा ततो गमनाय प्रदक्षिणमावर्तमान आहवनीयमुपतिष्ठते ' मम नाम प्रथमम् ' इत्यनेन मन्त्रेण ॥ ३ ॥

**प्रव्रजेदनपेक्षमाणो मा प्रगामेति सूक्तं जपन् ॥ ४ ॥**

**दे० भाष्यम्**—तीर्थदेशादेव प्रव्रजेद्गच्छेदग्नीननवेक्षमाणः प्रव्रजेन्मा प्रगामेत्येतत्सूक्तं जपन्गच्छेत् । सूक्तग्रहणं सकृत्सूक्तप्रयोगार्थम् । जपन्गच्छेदित्युक्ते गमिक्रियाया दीर्घत्वात्सूक्तस्याभ्यावृत्तिः प्राप्ता । अतः सूक्तग्रहणात्सूक्तमेव भवति । न पुरावर्तनम् ॥ ४ ॥

**वृत्तिः**—पृष्ठतोऽग्नीननीक्षमाणो मा प्रगामेति सूक्तं जपन्यथेष्टं गच्छेत् । सूक्तग्रहणमनभ्यासार्थम् ॥ ४ ॥

**आरादग्निभ्यो वाचं विसृजेत ॥ ५ ॥**

**दे० भाष्यम्**—आरादग्निभ्य आराद्दूरादग्निभ्यो देशेऽग्नीनामसंदर्शने वाचं विसृजेत् । विसृष्टा वाग्भवति यथाकामं भवतीत्यर्थः । वाग्विसर्गमन्त्रो न विद्यते । उत्तरकाल उपदेशात् ॥ ५ ॥

**वृत्तिः**—अग्निभ्यो दूराद्गत्वा वाचं विसृजेत् । यावद्गतेऽग्न्यागारच्छादिर्न दृश्यते तावदत्राऽऽराच्छब्देनोच्यते । अत्र वाग्विसर्गविधानादितः प्राग्वाग्यत एव सर्वं कुर्यात् ॥ ५ ॥

**सदा सुगः पितुमाँ अस्तु पन्था इति पन्थानमवरुह्य ॥ ६ ॥**

**दे० भाष्यम्**—सदा सुग इत्येतामृचं पन्थानमवरुह्य प्राप्य जपेत् ॥ ६ ॥

**वृत्तिः**—ब्रूयादिति शेषः । योऽभिलषितदेशगामी पन्थास्तं प्राप्येत्यर्थः ॥ ६ ॥

**अनुपस्थिताग्निश्चेत्प्रवासमापद्येत । इहैव सन्तत्र सन्तं त्वाऽग्ने हृदा वाचा**

**मनसा वा बिभर्मि। तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपातिष्ठत इति प्रतिदिशमग्नीनुपस्थाय ॥ ७ ॥**

**दे० भाष्यम्**—अनुपस्थिताग्निश्चेदनुपस्थिता अग्नयो येन सोऽनुपस्थिताग्निः। स चेत्प्रवासमापद्यते प्राप्यैतद्ग्रामान्तरं कस्मैचिदर्थायाऽऽगतस्य तत एव समापद्येत। स चेदग्नयो विहृता इति मन्येत तदा तत्रस्थ एव विहारमभिमुखोऽग्नीनुपतिष्ठते 'इहैव सन्तत्र सन्तम्' इत्येतेन मन्त्रेण। प्रतिदिशं दिशं दिशं विहारं मनसि ध्यात्वा या यस्याग्नेर्दिक् तां दिशमभिमुखस्तस्याग्नेरुपस्थानं कुर्यादेतेनैव मन्त्रेण। पूर्वोक्तेनैवानुक्रमेणाऽऽहवनीयमेवाग्निं गार्हपत्यमथ दक्षिणाग्निमित्युपस्थाय प्रव्रजेदनपेक्षमाण इत्येवमादि समानमेवमुक्त्वा प्रत्यागत्य चाभयं वोऽभयं मेऽस्त्वित्येवोपतिष्ठेत। एते मन्त्रा लिङ्गतो युज्यन्ते ॥ ७ ॥

**वृत्तिः**—यदि कदाचिद्यथोक्तोपस्थानमकृत्वैव गन्तव्यं स्याद्दैवान्मानुषाद्वा निमित्तात्तदा तत्रैव स्थितः 'इहैव सन्' इत्यनेन मन्त्रेण सर्वानग्नीनुत्पत्तिक्रमेण तं तमग्निं मनसि ध्यात्वा तां तां दिशमभिमुखमुपस्थाय गच्छेत् ॥ ७ ॥

**अपि पन्थामगन्महीति प्रत्येत्य ॥ ८ ॥**

**दे० भाष्यम्**—अपि पन्थामित्यनेन मन्त्रेण प्रत्यागच्छन्प्रत्येत्य सकाशं प्राप्य ॥ ८ ॥

**वृत्तिः**—ब्रूयादिति शेषः। प्रवासं कृत्वा प्रत्येत्य स्वग्रामसमीपं प्राप्य 'अपि पन्थामगन्महि' इति ब्रूयात् ॥ ८ ॥

**समित्पाणिर्वाग्यतोऽग्नीञ्ज्वलतः श्रुत्वाऽभिक्रम्याऽऽहवनीयमीक्षेत। विश्वदानीमाभरन्तोऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम। नमस्ते अस्तु मीह्लुषे नमस्त उपसद्वने। अग्ने शुम्भस्व तन्वः सं मा रय्या सृजेति ॥ ९ ॥**

**दे० भाष्यम्**—समिधः पाणौ यस्य सोऽयं समित्पाणिः। वाग्यतो यदि ग्रामदर्शने वासार्थे गच्छतीत्यन्येषां वाग्यतो भूत्वाऽऽगत्याग्निं प्रज्वलनं कृत्वाऽग्नयो ज्वलन्त इति कस्यचिद्वचनं श्रुत्वा वचनादन्येन विहृता अग्नयो भवन्तीति सिद्धम्। तत आचम्यातिक्रम्य प्रविश्याऽऽरादुपकारित्वादभिक्रम्याऽऽहवनीयमीक्षेत विश्वदानीमिति मन्त्रद्वयेन ॥ ९ ॥

**वृत्तिः**—वाग्यतः समिधो गृहीत्वा पुत्रेण शिष्येण वा पूर्वं प्रस्थापितेनाग्नीन्विहृताञ्ज्वलतश्च ज्ञात्वा स्वयमाहिताग्निराचम्य शुचिर्भूत्वा तीर्थेन प्रपद्यान्यक्तदेशादत्यन्तं समीपदेशमभिक्रम्याऽऽहवनीयमीक्षेत 'विश्वदानीम्' इति द्वाभ्यां मन्त्राभ्याम् ॥ ९ ॥

**अग्निषु समिध उपनिधायाऽऽहवनीयमुपतिष्ठते । मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः । ते विभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेद इति ॥ १० ॥**

**दे० भाष्यम्**—अग्निषु समिध उपनिधायाऽऽहवनीयमुपतिष्ठते—' मम ' इत्येतेन मन्त्रेण । अग्निषु समिध इति सर्वेषामविकारादाहवनीयग्रहणम् ॥ १० ॥

**वृत्तिः**—इदानीमानीताः समिधो विभज्य तस्य तस्याग्नेः समीपे निधाय तत आहवनीयमुपतिष्ठते ' मम नाम तव च ' इत्यनेन मन्त्रेण ॥ १० ॥

**ततः समिधोऽभ्यादध्यात् ॥ ११ ॥**

**दे० भाष्यम्**—तत उपस्थानानन्तरं या उपनिहिताः समिधस्ता अभ्यादध्यात् । अभ्युपरि आदध्यात्प्रक्षिपेत् ॥ ११ ॥

**वृत्तिः**---उपनिहिता एवास्मिन्ननेनेत्याह---

**आहवनीये—अगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्व स्वाहेति । गार्हपत्येऽयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहेति । दक्षिणेऽयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः । अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहेति । गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहावजूगुपतं युवम् । अविनष्टानविहृतान्पूषैनानभ्यराक्षीदाऽस्माकं पुनरायनादिति ॥ १२ ॥**

**दे० भाष्यम्**—आहवनीयेऽभ्यादध्यात् ' अगन्म विश्ववेदसम् ' इति मन्त्रेण । आहवनीयग्रहणं गार्हपत्यविवक्षार्थम् । अक्रियमाणे गार्हपत्यार्थः स्यात् । गार्हपत्ये समिधोऽभ्यादध्यादयमग्निरित्येतेन । दक्षिणे दक्षिणाग्नौ समिधोऽभ्यादध्यादयमग्निः पुरीष्य इत्येतेन । गार्हपत्याहवनीयौ गार्हपत्यश्चाऽऽहवनीयश्च गार्हपत्याहवनीयावग्नी ईक्षेत दक्षिणाग्निसमीप एव स्थित्वेमान्मे मित्रावरुणावित्येतेन मन्त्रेण ॥ १२ ॥

**वृत्तिः**—दक्षिणाग्निसमीपे स्थित इत्युक्तम् ॥ १२ ॥ ( २ । ५ । २ सूत्रे )

. **यथेतं प्रत्येत्य प्रोष्य भूयो दशरात्राच्चतुर्गृहीतमाज्यं जुहुयात्—मनोज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहेति ॥ १३ ॥**

**दे० भाष्यम्**--यथेतं यथागतेनैव मार्गेण प्रत्येत्य प्रतिनिवृत्य प्रोष्य भूयो दशरात्रा बह्वयो रात्रयः प्रोष्य प्रवत्स्य गार्हपत्य आज्यं विलाप्य तूष्णीमुत्पूयाऽऽहवनीयं

गत्वाऽऽसीनः स्रुचि चतुर्गृहीतमाज्यं कृत्वा जुहुयान्मनोज्योतिरित्येतेन मन्त्रेण । यथेतमित्यनुच्यमाने दक्षिणाग्नावेव प्राप्नोति । तत्र स्थित्वा प्रत्येत्य विषमोऽर्थः । प्रत्येत्य तदानीमेव जुहुयादिति । भूयो दशरात्रादिति वचनाद्दशरात्रीः प्रोष्यञ्जुहोति । चतुर्गृहीतवचनात्स्रुग्जुहूरेव भवत्यनादेशे । आज्यग्रहणं पयआदीनां हौम्यद्रव्याणामधिकारादासीनो जुहुयात् । अग्निहोमाधिकारादस्या आहुतेरग्निहोत्रहोमार्थस्याग्निहोत्रहोमानां समानार्थोऽयं होमः ॥ १३ ॥

**वृत्तिः**—यथेतमित्युक्तार्थम् । यथेतं प्रत्येत्य सर्वस्य विहारस्य परिसमूहनं कृत्वा तस्योत्तरत उपविश्य वाचं विसृजेत भूर्भुवः स्वरित्यनेन । असत्यतिप्रवासनिमित्त एवं प्रयोगक्रमः । सति तु तन्निमित्ते यथेतं प्रत्येत्य नैमित्तिकं कृत्वा परिसमूहनवाग्विसर्गौ कुर्यात् । एवमेव सूत्रस्वरूपं विवेच्यम् । दशरात्रादूर्ध्वं प्रवासं कृत्वा जुह्वां चतुर्गृहीतं गृहीत्वाऽनया जुहुयान्मनो ज्योतिरित्येतयर्चा । चतुर्गृहीतशब्दादेवाऽऽज्यद्रव्यसिद्धौ सत्यामाज्यग्रहणं तूष्णीमुत्पवनलाभार्थम् ॥ १३ ॥

**अग्निहोत्राहोमे च ॥ १४ ॥**

**दे० भाष्यम्**—अग्निहोत्राहोमे च । अग्निहोत्रस्य होमोऽग्निहोत्रहोमस्तस्मिन्नग्निहोत्रस्याहोमे चैतामेवाऽऽहुतिं जुहुयाद्भूयो दशरात्रादित्युक्तं दशरात्रं प्रवासेऽव्युच्छिन्नो भवति तस्माद्दशरात्रमहुत एतामाहुतिं जुहुयादत ऊर्ध्वं पुनराधेयं भवत्युच्छिन्नत्वात् ॥ १४ ॥

**वृत्तिः**—अग्निहोत्रहोमविच्छेदे चैतामाहुतिं जुहुयात् । विशेषाभावादेकस्य द्वयोर्बहूनामपि विच्छेद एषैव प्रायश्चित्तिः कार्या ॥ १४ ॥

**प्रतिहोममेके ॥ १५ ॥**

**दे० भाष्यम्**—प्रतिहोममेके । अहुतानां प्रतिहोममेके मन्यन्ते । प्रतिसंख्यं यावदिह चतुर्गृहीतानि गृहीत्वा ‘ पक्षहोमन्यायेन ’ जुहुयात्प्रतिहोमं वा भवतीति विकल्पः । प्रतिहोमे सति यत्प्रकृतिरग्निहोत्रद्रव्यं तेनैव जुहुयात् ॥ १५ ॥

**वृत्तिः**—चशब्दोऽत्राध्याहार्यः । एतामाहुतिं हुत्वा प्रतिहोमं च कुर्यादित्यर्थः । प्रतिहोमो नाम यावन्तः काला होमेन विच्छिन्नास्तावतामेकैकं कालं प्रत्येकैको होमः कर्तव्य इत्यर्थः । एवं परिसमुह्येत्यादि पूर्वमेव व्याख्यातम् ॥ १५ ॥

**परिसमुह्योदग्विहारादुपविश्य भूर्भुवः स्वरिति वाचं विसृजेत । गृहानीक्षेताप्यनाहिताग्निर्गृहा मा बिभीतोप वः स्वस्त्येवोऽस्मासु च प्रजायध्वं मा च वो गोपतीरिषा ति प्रपद्येत गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानीति शिवं शग्मं शंयोः**

**शंयोरिति त्रिरनुवीक्षमाणः । विदितमप्यलीकं न तदहर्ज्ञापयेयुः । विज्ञायतेऽभयं वोऽभयं मेऽस्त्वित्यग्नीनुपतिष्ठेत प्रवसन्प्रत्येत्याहरहर्वेति ॥ १६ ॥**

**दे० भाष्यम्**—परिसमुह्य परिसमूहनं कृत्वाऽग्नीनामुदग्विहारादुदीच्यां दिश्युपविश्य भूर्भुवः स्वरित्येतां स्वस्थाने समानजातिन्यायेन हुत्वाऽनुमन्त्रणं भवत्येव । अहरहर्देवा-न्वाचयिष्यतीति श्रुतेः । वाशब्दः समुच्चयार्थः । भवति सायंप्रातरनेनोपस्थानम् । आग्ने-यीभिः पावमानीभिश्च । वाकारशेषविनाशनार्थः ॥ १६ ॥

**वृत्तिः**—ईक्षणं प्रपदनं चानाहिताग्निरपि कुर्वीत । 'गृहा मा बिभीत' इतीक्षेत । 'गृहानहम्' इति प्रपद्येत । प्रतिपद्यमान एवं प्रपद्येत 'शिवं शग्म शंयोः शंयोः' इति त्रिरनुवीक्षमाणः । अनुवीक्षणमनुमन्त्रणं मन्त्रेण प्रकाशनम् । तत्पुनर्मन्त्रेण विना कर्तुं न शक्यत इति मन्त्रोऽपि त्रिरावर्तते । अलीकमप्रियम् । अवगतमप्यप्रियं प्रवासा-दागतस्य तस्मिन्नहनि न निवेदयेयुः । वाशब्दश्च शस्यार्थे । 'अभयं वः' इत्यनेन मन्त्रेण प्रवत्स्यन्प्रवासादागतश्चाहरहरग्निहोत्रहोमे चोपतिष्ठेतेति श्रुतिरत्रोपन्यस्ता विज्ञायत इति । अस्मिन्पक्षे प्रयोगक्रमः—विहृत्य प्रज्वाल्याऽऽचम्य तीर्थेन प्रपद्य तत्रैव स्थित्वा सर्वानग्नीन्सकृदेवोपस्थाय प्रदक्षिणमावृत्य तीर्थेनैव निष्क्रम्य 'मा प्रगाम' इति जप-न्प्रव्रज्य 'सदासुगः' इति पन्थानं प्राप्य ब्रूयात् । प्रत्येत्य 'अपि पन्थाम्' इत्युक्त्वा विहृताञ्ज्वलितांस्तीर्थेनैव प्रपद्य तत्रैव स्थित्वा 'अभयं वः' इत्युपस्थाय परिसमूहनादि शेषं पूर्ववत् । अतिप्रवासोऽस्ति चेत्तस्य नैमित्तिकमपि कुर्यात् । अग्निहोत्रहोमे च दक्षि-णाग्निहोमानन्तरम् 'अभयं वः' इत्युपतिष्ठेत । पूर्वोक्तस्यानुमन्त्रणस्य याजमानवादस्य चोपस्थानत्वान्न विकल्पः । तेन समुच्चय एव । अनुपस्थिताग्नेः प्रवास इहैव सन्निवेत-देव नान्यत्किंचित् ॥ १६ ॥

## प्रवासोपस्थानम् ।

( इदमाहिताग्निनैव कार्यम् ) ।

**आहिताग्निः**—वाग्यतो भूत्वा

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रवासविधिनाऽग्नीनुपस्थास्ये ।**

प्रवासं करिष्यन्नाहवनीयादीनग्नीन्विहृत्य प्रज्वल्याऽऽचम्याऽऽ( नात्राग्निहोत्रीयोद्धरणप्रणयननिधानमन्त्राः ) हवनीयस्यात्यन्तसमीपं गत्वा तमुपातिष्ठेत—

**शंस्य पशून्मे पाहि ।**

एवमुपस्थायोत्तरेण विहारं गत्वा गार्हपत्यस्य प्रत्यगुदग्देशेऽत्यन्तसमीपं गत्वा तमुपतिष्ठेत—

**नर्य प्रजां मे पाहि ।**

एवमुपस्थायापरेण विहारं गत्वा दक्षिणाग्नेः प्रत्यगुदग्देशेऽत्यन्तसमीपं गत्वा तमुपतिष्ठेत—

**अथर्व पितुं मे पाहि ।**

एवमुपस्थाय तत्रैव तिष्ठन्गार्हपत्याहवनीयावीक्षेत—

**इमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् ।**
**अविनष्टानविहतान्पूषैनानभिरक्षत्वस्माकं पुनरायनात् ॥**

इतीक्षित्वा पुनस्तेनैव मार्गेणाऽऽहवनीयसमीपं गत्वा ततो यथेष्टदेशगमनाय प्रदक्षिणमावर्तमान आहवनीयमुपातिष्ठेत—

**मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे ।**
**तत्त्वं बिभृहि पुनरामदैतोस्तवाहं नाम बिभराण्यग्ने ॥**

इत्युपस्थाय पृष्ठतोऽग्नीननीक्षमाणो मा प्रगामेति सूक्तं जपन्यथेष्टदेशं गच्छेत् ।

**मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मां तस्थुर्नो अरातयः ॥ १ ॥**
**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः । तमाहुतं नशीमहि ॥ २ ॥**
**मनोन्वा हुवामहे नाराशंसेन सोमेन । पितृणां च मन्मभिः ॥ ३ ॥**
**आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे ॥ ४ ॥**
**[illegible] जनः । जीवं व्रातं सचेमहि ॥ ५ ॥**
**वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥ ६ ॥ इति ।**

यावद्गतेऽग्न्यागारच्छदिर्न दृश्यते तावदग्निभ्यो दूरं गत्वा वाचं विसृज्याभिलषितदेशगामिनं पन्थानमवरुह्य ब्रूयात्—

**सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः संपिपृक्त ।**
**भगो मे अग्ने सख्येन मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥**

इति । ( म०३—अ०५—सू०२ )

यदि कदाचिद्यथोक्तोपस्थानमकृत्वैव गन्तव्यं स्याद्दैवान्मानुषाद्वा निमित्तात्तदा तत्रैव स्थितः सर्वानग्नीनुत्पत्तिक्रमेण तं तमग्निं मनसा ध्यात्वा तां तां दिशमभिमुखमुपतिष्ठेत—

**इहैव सन्तत्र सन्तं त्वाऽग्ने हृदा वाचा मनसा वा बिभर्मि ।**
**तिरो मा सन्तं मा प्रहासीज्र्योतिषा त्वा वैश्वानरेणोपतिष्ठते ॥ इति ।**

तत आचम्य

**अनेन प्रवासोपस्थानेन श्रीपरमेश्वरः प्रीयताम् ।**

**इति प्रवासोपस्थानविधिः ।**



## प्रवासादागतस्य विधिः ।

—:x:x:x:—

आहिताग्निः—प्रवासं कृत्वा स्वग्रामसमीपं प्राप्य

अपि पन्थामगन्महि स्वस्ति गामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ (म०६ अ०५ सू०२)

इति ब्रूयात् । ततः समित्पाणिर्वाग्यतोऽग्नीञ्ज्वलतः श्रुत्वाऽऽचम्य

ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रवासागमनविधिं करिष्ये ।

शुचिर्भूत्वा तीर्थेनात्यन्तसमीपदेशमभिक्रम्याऽऽहवनीयमीक्षेत—

विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषाम । नमस्ते अस्तु मीढ्ळुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वः सं मा रय्या सृज ॥

इतीक्षित्वाऽऽनीताः समिधो विभज्य तस्य तस्याग्नेः समीपे निधायाऽऽहवनीयमुपतिष्ठेत—

मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः ।
ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेदः ॥

इत्युपस्थायैकैकां समिधं तस्मिंस्तस्मिन्नग्नावादध्यात् ।

आहवनीये—अगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् ।
अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्व स्वाहा ॥ इति ।

गार्हपत्ये—अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ।
अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहा ॥ इति ।

दक्षिणे—अयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः ।
अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहा ॥ इति ।

समिध आधाय दक्षिणाग्निसमीपे स्थित्वा

इमान्मे मित्रावरुणौ गृहानजूगुपतं युवम् ।
अविनष्टानविहृतान्पूषैनानभ्यराक्षीदाऽस्माकं पुनरायनात् ॥

इतीक्षित्वा यथेतं प्रत्येत्य दशरात्रादूर्ध्वं प्रवासं कृत्वाऽऽगतेन स्वप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानाऽन्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां तूष्णीमाज्यं त्रिरुत्पूय जुह्वां चतुर्गृहीतं गृहीत्वाऽऽहवनीये प्रत्यगुदगाहवनीयादवस्थाय जुहुयात्—

**मनो ज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहा । मनसे ज्योतिष इदं न मम ।**

इति हुत्वा त्यजेत् । अत ऊर्ध्वं वक्ष्यमाणो विधिर्दशरात्रादर्वाक्प्रवासं कृत्वाऽऽगतस्योर्ध्वमागतस्य च समान एवेति ज्ञेयम् । द्वयोर्बहूनामप्यग्निहोत्रहोमविच्छेदे सति चतुर्गृहीतं जुहुयात् । तत्र संकल्पः—

**अग्निहोत्रहोमविच्छेदनिमित्तप्रत्यवायजनितदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्ताज्याहुतिं होष्यामि ।**

इति संकल्प्याऽऽज्यं पूर्ववत्तूष्णीं त्रिरुत्पूय जुह्वां गृहीत्वा पूर्ववत्स्थित्वा जुहुयात्—

**मनो ज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहा । मनसे ज्योतिष इदं न मम ।**

इति हुत्वा त्यक्त्वा च सर्वविहारं परिसमुह्य विहारस्योत्तरत उपविश्य

**भूर्भुवः स्वः ।**

इति वाचं विसृज्य विहारादबहिराचम्य

**अनेन प्रवासागमननिमित्तविधिना कृतेन श्रीपरमेश्वरः प्रीयताम् ।**

ततो गृहानीक्षेत—

**गृहा मा बिभीतोप वः स्वस्त्येवोऽस्मासु च प्रजायध्वं मा च वो गोपती रिषत् । इति ।**

ततो गृहान्प्रपद्येत—

**गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् ।**
**इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानि ॥ इति ।**

प्रपद्यमान एवं प्रपद्येत—

**शिवं शग्मं शं योः शं योः ।**

इति त्रिरनुमन्त्र्य प्रपद्येत । ततो गृहान्प्रपन्नं तमाहिताग्निं यः कोऽप्यवगतमप्यप्रियं न निवेदयेत् । इति ॥

अत्र प्रवत्स्यन्प्रत्येत्याहरहः प्रयोगान्तरं कुर्यादित्थमवीवृतद्वृत्तिकृत् ।

**प्रवत्स्यन्**—अग्नीन्विहृत्य प्रज्वाल्याऽऽचम्य तीर्थेन प्रपद्य तत्रैव स्थित्वा सर्वानग्नीन्सकृदेव—

**अभयं वोऽभयं मेऽस्तु ।**

इत्युपस्थाय प्रदक्षिणमावृत्य तीर्थेनैव निष्क्रम्य 'मा प्रगाम' इति जपन्प्रव्रज्य "सदा सुगः" इति पन्थानं प्राप्य ब्रूयात् ।

**प्रत्येत्य**—"अपि पन्थाम्" इत्युक्त्वा विहृतान्प्रज्वलितांस्तीर्थेनैव प्रपद्य तत्रैव स्थित्वा "अभयं वः" इत्युपस्थाय मनोज्योतिरित्यादि पूर्ववत् ।

**अहरहः**—दक्षिणाग्निहोमानन्तरम् "अभयं वः" इत्युपतिष्ठेत । अनुपस्थिताग्नेः प्रवास इहैव सन्नित्येतदेव । नान्यत्किंचित् ।

**इति प्रवासादागतस्य विधिः ।**

## अथ समारोपसूत्रम् ।

**समारोपयेदयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत्पाणी वा या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति यदि पाण्योररणी संस्पृश्य मन्थयेत्प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथा भव यजमानाय शं योरिति ॥ १ ॥**

इति समारोपसूत्रम् ।

---

## सवृत्तसमारोपविधिसूत्रभाष्यम् ।

**समारोपयेदयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत् ॥ १ ॥**

**दे० भाष्यम्—**इदानीं समारोपणविधानं वक्ष्यते । अयं ते योनिर्ऋत्विय इत्येतयर्चा । अरणी उत्तरारण्यधरारणी च । गार्हपत्येऽग्नौ प्रतितपेदध्वर्युर्यजमानो वा । एतेनैव मन्त्रेण दक्षिणाग्नौ समारोपयेत् । गार्हपत्यग्रहणं गार्हपत्याद्यनुक्रमेषु सर्वेषु समारोपयेद्विकृतावपि सर्वेषु समारोपणं दर्शयति । अग्नीनस्य समारोप्येति पृथगरणीष्वग्नीन्समारोप्येत्यन्येषाम् । सर्वेष्वग्निषु द्वाभ्यामेवारणीभ्यां समारोपणमन्येषाम् । अस्माकं त्वन्याहितेष्वजस्रेषु च न ॥ १ ॥

**वृत्तिः—**पूर्वे एव द्वे अरणी गार्हपत्ये प्रतितपेन्नाग्न्यन्तरे । यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरे तेनैव मन्त्रेण समारोपणं भवति ॥ १ ॥

**पाणी वा या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति ॥ २ ॥**

**दे० भा०—**पाणी वा गार्हपत्ये प्रतितपेद्यजमानः । 'या ते अग्ने' इत्यनेन मन्त्रेण । पाणी प्रतितपेदरणी वेति विकल्पः । यजमान एव प्रतितपेन्मन्त्रलिङ्गादात्माऽऽत्मानमच्छेति ॥ २ ॥

**वृत्तिः—**द्वौ पाणी गार्हपत्ये सकृदेव प्रतितपेत् । द्वयोरपि समारोपणं यजमान एव कुर्यात् । पूर्वमन्त्रस्य प्रयगाशीष्ट्वात् । उत्तरस्य चाऽऽत्मानमितिलिङ्गात् । कर्त्रन्तरविधानाभावाच्च ॥ २ ॥

**यदि पाण्योररणी संस्पृश्य मन्थयेत्प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो**

**हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शं योः ॥ ३ ॥**

**इति समारोपविधिसूत्रम् ।**

**दे० भा०**—यदि पाण्योररण्योः समारोप्यः पाण्योर्वेत्युक्तम् । तत्र यदि पाण्योः समारोपणं कृतं भवति ततो मन्थनकालेऽरणी पाणिभ्यां संस्पृश्य मन्थयेत् । 'प्रत्यवरोह' इत्यनेन मन्त्रेण स्पृशेत् ॥ ३ ॥

**इति समारोपविधिसूत्रभाष्यम् ।**

**वृत्तिः**—अरण्योर्हस्तयोर्वा समारोपणमुक्तम् । तत्रावरोहणकाले यजमानः 'प्रत्यवरोह जातवेदः' इत्येतं मन्त्रमुक्त्वा मन्त्रान्ते तयोररण्योरग्निं मन्थयेत्स्वयं वा मन्थेत् । एवमरणी समारोपणे । यदि हस्तयोः समारोपणं स्यात्तदैतेन मन्त्रेणारणी संस्पृश्य मन्थयेत् । यजमानो मन्थनकाले यावदग्नेर्जन्म तावदरणी संस्पृशन्नेवाऽऽस्ते । मथ्यमानेऽग्नौ यद्युत्पादनसमर्थः प्रयत्नो निष्फलः स्यात्तदा पुनरारम्भावसरे मन्त्र आवर्तयितव्यः । एवं व्यर्थे व्यर्थे पुनः पुनरावर्तयेत् । अग्न्यवरोहार्थमरणी मन्थयेदित्येकोऽर्थः । यदि पाण्योः समालोपणं तदैवमवरोहयेत्पाणिभ्यामरणी अनेन मन्त्रेण संस्पृश्य मन्थयेदित्यपरोऽर्थः ॥ ३ ॥

**इति समारोपविधिसूत्रवृत्तिः ।**

---

## अथ समारोपप्रयोगः ।

प्रातरग्निहोत्रहोमानन्तरं सगृहः प्रवत्स्यंश्चेदाहिताग्निराचम्य

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थमापन्निमित्तमग्निं समारोपयिष्ये ।**

इति संकल्प्यारणी गृहीत्वा

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।**
**तं जानन्नग्न आसीदाथानो वर्धया गिरः ॥ ( ऋ० सं० ३-१-३३ )**

इति गार्हपत्ये प्रतितप्य यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरेऽनेनैव मन्त्रेण दक्षिणाग्नावरणी प्रतितपेत् ।

अथवा द्वौ पाणी गार्हपत्ये प्रतितपेत् । तत्र मन्त्रः—

**या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमानः ।**

**आचम्यानेन समारोपविधिना श्रीपरमेश्वरः प्रीयताम् ।**

इति समारोपप्रयोगः ।

---

## अथावरोहणप्रयोगः ।

समारोप्याग्निं वासे वासेऽग्निं मन्थेत् । तत्र मन्त्र –

**प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शंयोः ॥ इति ।**

अथवा पाणिभ्यामरणी प्रत्यवरोहेत्यनेन मन्त्रेण संस्पृश्य मन्थेदिति । यावदग्न्युत्पादनं मन्त्रावृत्तिः ।

इत्यवरोहणप्रयोगः ।

---

## *प्रथमाग्निहोत्रारम्भः ।

**अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति ।( आपस्तम्ब० श्रौ० सू० ५ । २२ । १० )**

तदिदमध्वर्यूणामुक्तमाश्वलायनादिभिरपि कर्तव्यमेवातस्तत्प्रयोगं प्रयुञ्ज्महि ।

आधानानन्तरं द्वादशदिनमध्ये पूर्णमाससोमारम्भप्रसक्तौ द्वादशदिनपर्यन्तमजस्रेष्वेव तत्कार्यम् । तत्रोद्धरणकालेऽग्न्युत्पत्तिक्रमेण प्रादुष्करणं कार्यम् । कालातिक्रमे सर्वप्रायश्चित्तं कार्यम् । त्रयोदशेऽहनि प्रातर्होमान्तेऽग्नित्यागः । ततः सायंकालप्रभृति होमार्थमुद्धरणं कार्यम् । द्वादशदिनमध्ये पौर्णमाससोमारम्भप्रसक्तौ पवमानेष्ट्यन्तेऽग्नीन्परित्यज्यानन्तरं सायं होमार्थमुद्धरणं कार्यम् । तत्राग्निहोत्रमारप्स्यमानोऽपराह्णे यज्ञोपवीती पत्न्या सहाऽऽचम्य तीर्थेन प्रविश्य जघनेन गार्हपत्यं कुशपाणिः–

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थमग्निहोत्रमारप्स्ये । यावज्जीवमग्निहोत्रं होष्यामि । जीर्णो विरंस्ये ।**

**इति संकल्प्याध्वर्युं वृणुयात् ।**

**अग्निहोत्रहोमेऽध्वर्यु त्वामहं वृणे ।**

**अग्निहोत्रमारप्स्यमानो दशहोतारं होष्यामि ।**

**ततोऽध्वर्युराज्यं संस्कृत्य जुह्वां चतुर्गृहीतं गृहीत्वा**

**चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः ।**

**वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । आऽस्मासु नृम्णं धात्स्वाहा ।**

---

* अयं प्रयोग आपदेवमुनुनाऽनन्तदेवेन कृतस्तथैव संगृहीतोऽस्ति ।

**आहिताग्निः—वाचस्पते ब्रह्मण इदं न मम । तत आचम्याग्निहोत्रारम्भविधिना कृतेन श्रीपरमेश्वरः प्रीयताम् ।**

ततो दक्षिणत उपविश्य द्वितीयादिहोमेऽध्वर्युवरणं कृत्वा

**' उद्धराऽऽहवनीयम् ' ।**

इत्यध्वर्युं प्रैषं करोति । ततोऽध्वर्युर्विहाराद्बहिराचान्तस्तीर्थेन प्रविश्य गार्हपत्यप्रज्वलनादि सर्वं कुर्यात् ।

अत्राऽऽश्वलायनाचार्येणैक इत्येव सूत्रितम् । अध्वर्युभिरत्वध्वर्युरित्येव ।

---

## अथ सविषयविधिवाक्यानुक्रमणम् ।

अग्निहोत्राङ्गप्रधानकर्मविधायकानि वाक्यानि सर्वाणीमानि भगवत आश्वलायनाचार्यप्रणीतश्रौतसूत्रद्वितीयाध्यायीयद्वितीयखण्डमारभ्य चतुर्थखण्डपर्यन्तमिति ज्ञेयानि । तदिदं विधिवाक्यजातं कस्मिन्ब्राह्मणे स्थितमिति न प्रतीमः ।

ननु सन्त्येव तर्हि सूत्राणि यथास्थानं किमर्थमयमुपक्रमः । यदि स्युर्ब्राह्मणे तर्ह्यर्थवादामिश्रितत्वात्पृथक्कृतिरपेक्षिता । सूत्राणां च प्रायोऽर्थवादराहित्यान्मा नाम भूत्पृथक्कृतिः ।

मैवम् ।

सूत्रेषु सत्स्वप्येषु वाक्येषु न यथावज्ज्ञातुं सुशकं जिज्ञासुभिरित्यस्त्युपक्रमस्य प्रयोजनम् । बुद्धिवैशद्यार्थं च ।

## आश्वलायनीयश्रौतसूत्रम्—द्वितीयाध्यायः ।(२।४)

१ गार्हपत्यप्रज्वलनम्—अपराह्णे गार्हपत्यं प्रज्वल्य ।

२ दक्षिणाग्नेरानयनम—दक्षिणाग्निमानीय ।

३ आहवनीयोद्धरणम्—आहवनीयं ज्वलन्तमुद्धरेत् ।

४ प्रणयनम्—प्रणयेत् ।

५ निधानम्—निदध्यात् ।

६ आहिताग्नेर्व्रतचर्या—आहिताग्निर्व्रतचार्याहोमात् ।

७ होमकालः—अस्तमिते होमः । प्रदोषान्तो वा ।

८ आचमनम्—नित्यमाचमनम् ।

९ परिसमूहनम्—ताभ्यां परिसमूहने ।

१० परिसमूहनकालः—पूर्वे तु पर्युक्षणात् ।

११ पर्युक्षणम्—पर्युक्षेत् ।

१२ परिसमूहनपर्युक्षणक्रमः—दक्षिणगार्हपत्याहवनीयाः ।
१३ धाराहरणम्—धारां हरेत् ।
१४ उपवेशनम्—पश्चाद्गार्हपत्यस्योपविश्य ।
१५ अङ्गारापोहनम्—अङ्गारानपोहेत् ।
१६ अग्निहोत्राधिश्रयणम्—अग्निहोत्रमधिश्रयेत् ।
१७ नित्यहोमे द्रव्यविधानम्—पयसा नित्यहोमः ।
१८ अवज्वलनम्—अवज्वलयेत् ।
१९ परिहरणम्—परिहरेत् ।
२० अङ्गाराणामतिसर्गः—अङ्गारानतिसृज्य ।
२१ स्रुक्स्रुवोः प्रतितपनम्—स्रुक्स्रुवं प्रतितपेत् ।
२२ स्रुगासादनम्—स्रुचमासाद्य ।
२३ अतिसर्जनम्—अतिसर्जयेत ।
२४ आहिताग्नेराचमनम्—आहिताग्निराचम्य ।
२५ अतिव्रजनम्—अपरेण वेदिमतिव्रज्य ।
२६ आहिताग्न्युपवेशनम्—दक्षिणत उपवेश्य ।
२७ अतिसर्जनश्रवणम्—एतच्छ्रुत्वा ।
२८ अतिसर्जनम्—अतिसृजेत् ।
२९ स्रुवपूरोन्नयनम्—स्रुवपूरमुन्नयेत् ।
३० स्थाल्यभिमर्शः—स्थालीमभिमृश्य ।
३१ स्रुक्समिधोर्हरणम्—समिधं स्रुवं चाध्यधि गार्हपत्यं हृत्वा ।
३२ उपसादनम्—उपसाद्य ।
३३ जानुनिपातनम्—जान्वाच्य ।
३४ समिदाधानम्—समिधमादध्यात् ।
३५ अपामुपस्पर्शनम्—अप उपस्पृश्य ।
३६ प्रधानहोमदेशः—द्व्यङ्गुलमात्रे ।
३७ होमविधानम्—अभिजुहुयात् ।
३८ सादनम्—कुशेषु सादयित्वा ।
३९ गार्हपत्यावेक्षणम्—गार्हपत्यमवेक्षेत ।
४० उत्तराहुतिविधानम्—अथोत्तरां तूष्णीं भूयसीमसंसृष्टाम् ।
४१ उत्तराहुतेर्देशविधानम्—प्रागुदगुत्तरतो वा ।
४२ प्राजापत्यध्यानम्—प्रजापतिं मनसा ध्यायात् ।

४३ स्रुचि शेषस्थापनम्—भूयिष्ठं स्रुचि शिष्ट्वा ।
४४ स्रुचः प्रकम्पनम्—त्रिरनुप्रकम्प्य ।
४५ अवमार्जनम्—अवमृज्य ।
४६ निमार्जनम्—निमार्ष्टि ।
४७ अङ्गुल्युत्तानकरणदेशः—तेषां दक्षिणतः ।
४८ अङ्गुल्युत्तानकरणविधिः—उत्ताना अङ्गुलीः करोति ।
४९ प्राचीनावीतिविधिः—प्राचीनावीती ।
५० अपां निनयनम्—अपोऽवनिनीय ।
५१ अपामुपस्पर्शनम्—अप उपस्पृश्य ।
५२ अनुमन्त्रणम्—अनुमन्त्रयेत ।
५३ उत्थानम्—उपोत्थाय ।
५४ उत्तराहुतेः कटाक्षपूर्वकमीक्षणम्—उत्तरां काङ्क्षेतेक्षमाणः ।
५५ पर्वणि द्रव्यनियमः—यवाग्वा पयसा वा पर्वणि ।
५६ पर्वणि होमकर्तृनियमः—स्वयं पर्वणि जुहुयात् ।
५७ अन्यत्र पर्वणो होमकर्तृनियमः—ऋत्विजामेक इतरं कालमन्तेवासी वा ।
५८ उदकस्पर्शः—स्पृष्ट्वोदकम् ।
५९ उदगावर्तनम्—उदङ्ङावृत्य ।
६० भक्षणम्—भक्षयेत् ।
६१ समिदाधानम्—समिधमाधाय ।
६२ अपां निनयनम्—अपो निनयते ।
६३ स्रुचः प्रक्षालनम्—एनां कुशैः प्रक्षाल्य ।
६४ अपां निमयनम्—अपो निनयेत् ।
६५ प्रतापनम्—प्रताप्य स्रुचम् ।
६६ निधानम्—निदध्यात् ।
६७ समिदाधानम्—समिध आदध्यात् ।
६८ परिसमूहनम्—ताभ्यां परिसमूहने ।
६९ पर्युक्षणम्—उक्तं पर्युक्षणम् ।
७० प्रातर्विधिः—एवं प्रातः ।
७१ प्रातर्होमकालः—{ उपोदयं व्युषसि उदिते वा । सङ्गवान्तः ।

ति सविषयविधिवाक्यानुक्रमणम् ।

## मन्थनयन्त्रकम् ।

---

**शमीगर्भस्याश्वत्थस्यारणी आहरति** ( आपस्तम्बश्रौ० सू० ९ । १ । २ )
**अश्वत्थाच्छमीगर्भादरणी आहरेत्** । ( आश्वलायनश्रौ० सू० २ । १ । १६ )
**अश्वत्थशमीगर्भारणी प्रयच्छति** । ( कात्यायनश्रौ० सू० ४ । १९४ )

तदेतत्सर्वं मनसि निधाय तत्र भगवान्कात्यायनः कर्मप्रदीपनाम्नि च्छन्दोगपरिशिष्टापरनामधेये ग्रन्थे श्लोकयांबभूव—

**अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ।**
**तस्य या प्राङ्मुखी शाखा योदीची योर्ध्वगाऽपि वा ॥ १ ॥**
**अरणिस्तन्मयी प्रोक्ता तन्मयी चोत्तरारणिः ।**
**सारवद्दारवं चात्रमोविली च प्रशस्यते ॥ २ ॥**

**प्रभा**—आरणेयस्य मन्थनप्रकारं वक्तुं प्रथमं मन्थनयन्त्रघटकमरण्यादिकमाह—अश्वत्थो य इति द्वाभ्याम् । शमीगर्भस्य लक्षणं वक्ष्यते । पवित्रभूमौ जातो यः शमीगर्भोऽश्वत्थस्तस्य प्राङ्मुख्युदक्गतोर्ध्वगता वा या शाखा । अधरारणिरुत्तरारणिश्च तन्मयी मुनिभिः कथिता । चात्रमोविली च सारयुक्तखदिरादिकाष्ठनिर्मितं मुनिभिः प्रशस्यते । चात्रं नाम मन्थनदण्डः । चात्रोर्ध्वभागनियन्त्रणार्थः काष्ठविशेष ओविली ॥ १ ॥ २ ॥

**शमीगर्भः**—शम्या गर्भः—शमीगर्भः । इति षष्ठीसमासः ।
**इयं वै शमी तस्या एष गर्भो यदश्वत्थः** । इति श्रुतेः ।

**संसक्तमूलो यः शम्या शमीगर्भः स उच्यते ।**
**अलाभे त्वशमीगर्भादाहरेदविलम्बितः ॥ ३ ॥**
**चतुर्विंशतिरङ्गुष्ठा दैर्घ्यं षडपि पार्थवम् ।**
**चत्वार उच्छ्रयो मानमरण्योः परिकीर्तितम् ॥ ४ ॥**

**प्रभा**—इदानीं शमीगर्भस्य लक्षणमाह—संसक्तमूल इति । यस्याश्वत्थस्य मूलं शम्या सह संसक्तं सम्यग्लग्नं सोऽश्वत्थः शमीगर्भः कथ्यते । शमीगर्भस्याश्वत्थस्यालाभे पुनरशमीगर्भादप्यरणिमाहरेत् । गुणलोपे च मुख्यस्येति न्यायादित्यभिप्रायः । शमीगर्भस्यान्वेषणया कालविलम्बो न कर्तव्य इति वक्तुमविलम्बित इत्युक्तम् ॥ ३ ॥

अरण्यादीनां परिमाणमाह—चतुर्विंशतिरितिद्वाभ्याम् । चतुर्विंशतिसंख्याका अङ्गुष्ठा अङ्गुष्ठा अङ्गुला अरण्योर्दैर्घ्यं दीर्घताप्रमाणमित्यर्थः । षडङ्गुलास्तयोः पार्थवं पृथुत्वम् । तत्परिमाणमिति यावत् । चत्वारोऽङ्गुला अरण्योरुच्छ्रय उच्चतापरिमाणमित्येतत् । तदेवमरण्योः परिमाणं सर्वतोभावेन कथितम् ॥ ४ ॥

**अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम् ।**
**ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ ५ ॥**

**प्रभा**—अष्टाङ्गुल इति । चात्रमध्यस्थो मन्थनार्थः काष्ठविशेषः प्रमन्थ इत्युच्यते । स खल्वष्टाङ्गुलपरिमाणः स्यात् । चात्रमोविली च द्वादशाङ्गुलपरिमाणं स्यात् । एतत्सर्वं मिलितं यथाविन्यस्तं मन्थनयन्त्रमिति कथ्यते । मन्थनयन्त्रकमिति स्वार्थे कन् । गोभिलपुत्रेणाप्येवमेव मन्थनयन्त्रमुक्तम् । केवलमरण्योर्दीर्घतायामन्यदपि परिमाणद्वयमुक्तम् । तथा च गृह्यसंग्रहः—

**आश्वत्थीं तु शमीगर्भामरणीं कुर्वीत सोत्तराम् ।**
**ऊरुदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा ॥ इति ।**
**खादिरे बध्नाति, पालाशे बध्नाति, रोहितके बध्नाति,**

इतिवदमीषां विकल्पो बोद्धव्यः ॥ ५ ॥

**अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते ।**
**तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा ॥ ६ ॥**
**गोबालैः शणसंमिश्रैस्त्रिवृद्वृत्तमनंशुकम् ।**
**व्यामप्रमाणं नेत्रं स्यात्प्रमथ्यस्तेन पावकः ॥ ७ ॥**

**प्रभा**—अङ्गुष्ठेति । बृहत्पर्वग्रन्थिभिर्मध्यरेखाभिः । निगदव्याख्यातमन्यत् ॥ ६ ॥

मन्थनसाधनं नेत्रमाह—गोबालैरिति । शणसंमिश्रैर्गोबालैर्नेत्रं स्यादिति संबन्धः । नेत्रं रज्जुः । नेत्रं विशिनष्टि—त्रिवृदित्यादिना । त्रिवृत्त्रिगुणं वृत्तं वर्तुलम् । अनंशुकम् अंशुरहितम् । अंशवस्तन्तूनां क्षुद्रा अवयवाः । व्यामप्रमाणं विस्तृतसहस्तबाहुद्वयतिर्यगन्तरालं व्याम उच्यते । तत्परिमाणं तेन नेत्रेण प्रकर्षेणाग्निर्मन्थनीयः ॥ ७ ॥

**मूर्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी ।**
**अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुलं वक्ष उच्यते ॥ ८ ॥**
**अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम् ।**
**एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ बस्तिर्द्वौ तु गुह्यकम् ॥ ९ ॥**
**ऊरू जङ्घे च पादौ च चतुस्त्र्येकं यथाक्रमम् ।**
**अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥ १० ॥**

**प्रभा**—अरण्यवयवं तत्परिमाणं चाऽऽह—मूर्धाक्षीति त्रिभिः । वक्त्रं मुखम् । कन्धरा ग्रीवा । ग्रीवाहृदययोर्मध्यं वक्षः । सुगममन्यत् । एतच्च मूलादारभ्य मानं वृक्षदार्वादीनां तथैव मानस्यौत्सर्गिकत्वादिति नारायणोपाध्यायाः ॥ ८ ॥

अङ्गुष्ठमात्रमिति । द्वावङ्गुष्ठा एवमुत्तरत्र बस्तिर्नाभेरधो भागः । स्पष्टमन्यत् ॥ ९ ॥

ऊरू जङ्घे चेति ऊरू जङ्घे पादौ चेत्येतानि यथाक्रमं चतुरङ्गुष्ठत्र्यङ्गुष्ठैकाङ्गुष्ठपरिमितानि भवन्ति । सोऽयं चतुर्विंशत्यङ्गुष्ठानां विभागः । एतेऽरण्यवयवा याज्ञिकैः सर्वतोभावेन निश्चयेन कथिताः ॥ १० ॥

**यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते ।**
**तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥ ११ ॥**
**अन्यत्र मथ्यते यत्तु तद्रोगभयमाप्नुयात् ।**
**प्रथमे मन्थने ह्येष नियमो नोत्तरेषु च ॥ १२ ॥**
**उत्तरारणिनिष्पन्नः प्रमन्थः सर्वदा भवेत् ।**
**योनिसंकरदोषेण युज्यते ह्यन्यमन्थकृत् ॥ १३ ॥**

**प्रभा**—मन्थनस्थानमाह यत्तदिति । यत्तदिति सर्वनामद्वयेन प्रसिद्धिमवद्योतयति । यद्गुह्यमिति कथितं सा देवस्याग्नेर्योनिरुत्पत्तिस्थानमुच्यते । सेति विधेयप्राधान्यविवक्षया स्त्रीत्वेन निर्देशः । तस्यां मन्थनेन योऽग्निरुत्पद्यते स कल्याणकृदभ्युदयकारीति मुनिभिः कथ्यते ।

गोभिलपुत्रस्त्वाह—

मूलादष्टाङ्गुलमुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्रात्तु द्वादशाङ्गुलम् ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः ॥ इति ।

तत्र प्रथमवचनेन गुह्यस्य देवयोनित्वं भङ्ग्यन्तरेणोक्तम् । द्वितीयवचनेन तत्संधेरिति विशेषः । सोऽयं विकल्पः ॥ ११ ॥

अन्यत्रेति । यदिति मन्थनक्रियाविशेषणम् । यत्पुनर्देवयोनेरन्यत्र मथ्यते, तस्माद्धेतो रोगभयं प्राप्नोति मन्थनकर्ता । अयं च नियमः प्रथमाधाने यन्मन्थनं क्रियते तत्रैव न पुनराधाने कर्तव्ये द्वितीयादिमन्थनेषु ॥ १२ ॥

इदानीं प्रमन्थनिर्माणे विशेषमाह—उत्तरारणीति । उत्तरारणेः सकाशात्काष्ठशकलमुद्धृत्य तेन प्रमन्थो निष्पन्नो भवेत् । सर्वदा द्वितीयाद्याधानेष्वपि । अन्येन काष्ठेन प्रमन्थकरणे दोषमाह—योनीति । मन्थः प्रमन्थः । यस्मादन्येन काष्ठेन प्रमन्थकर्ता

योनिसंकरदोषेण युज्यते तस्मात्सर्वदैवोत्तरारणिनिष्पन्नः प्रमन्थो भवेदिति पूर्वार्धोक्तेऽर्थे हेतुवचनमुत्तरार्धम् ॥ १३ ॥

आर्द्रा सशुषिरा चैव घुणाङ्गी स्फुटिता तथा ।
न हिता यजमानानामरणिर्नोत्तरारणिः ॥ १४ ॥

**प्रभा**—अरण्योर्विशेषमाहाऽऽर्द्रेति । सशुषिरा सच्छिद्रा । घुणः कीटविशेषः । सोऽङ्गे यस्याः सा घुणाङ्गी । स्पष्टमन्यत् ॥ १४ ॥

परिधायाहतं वासः प्रावृत्य च यथाविधि ।
बिभृयात्प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया ॥ १५ ॥
चात्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः ।
कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरि न्यसेत् ॥ १६ ॥
चात्रोर्ध्वकीलकाग्रस्थामोविलीमुदगग्रगाम् ।
विष्टभ्य धारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः ॥ १७ ॥
त्रिरुद्वेष्ट्याथ नेत्रेण चात्रं पत्न्यहतांशुका ।
पूर्वं मन्थेदरण्यन्ते प्राच्यग्नेः स्याद्यथा च्युतिः ॥ १८ ॥

**प्रभा**—इदानीं मन्थनप्रकारमाह—परिधायेति । अहतं यन्त्रनिर्मुक्तं नवमिति यावत् । वासः परिधाय प्रावृत्य चोत्तरीयमपि विधाय । यथाविधीत्युभयत्र संबध्यते । ततश्च परिधान उत्तरीयकरणे च—

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।
धर्म्ये कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥ इति ।
सव्यादंसात्परिभ्रष्टः कटिदेशे धृताम्बरः ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

इति चैवमादिस्मृत्यन्तरोक्तो विधिरनुसरणीय इत्युक्तं भवति । एवंभूतः प्राङ्मुखः सन्वक्ष्यमाणया परिपाट्या मन्थनयन्त्रं धारयेत् ॥ १५ ॥

चात्रबुध्न इति । विचक्षणो मन्थनप्रकाराभिज्ञः । चात्रस्य मूले प्रमन्थस्याग्रं रन्ध्रपूरणेन निश्चलं कृत्वाऽरणिमुत्तराग्रां कृत्वा दण्डवदूर्ध्वस्थितं चात्रमरणेरुपरि स्थापयेत् ॥ १६ ॥

चात्रोर्ध्वेति । चात्रस्योर्ध्वे यत्कीलकं लोहशङ्कुस्तदग्रस्थितामुदगग्रामोविलीं कृत्वा विष्टभ्याऽऽश्रित्य गाढं पीडयित्वा वा यन्त्रं निष्कम्पं संधाय शुचिः कृताचमनादिः प्रयतः प्रयत्नवांस्तद्गतचित्त इति यावत् । यन्त्रं धारयेत् ॥ १७ ॥

त्रिरुद्वेष्ट्येति । अथानन्तरं नेत्रेण पूर्वोक्तलक्षणेन चात्रमुपर्युपरि क्रमेण वारत्रयं वेष्टयित्वाऽहतवसना पत्नी पूर्वे अरण्यन्ते मन्थेत् । अरणिपूर्वान्ते मन्थनस्य प्रयोजनमाह—

प्राचीति । अग्नेश्च्युतिर्निःसरणं प्राची प्राक्प्रदेशगता यथा भवेत्तथा मन्थेत् । प्राचीति सप्तम्यन्तपाठेऽपि तथैवार्थः ॥ १८ ॥

इति * मन्थनयन्त्रकम् ।

---

## अग्निहोत्रसामग्री ।

१ विद्वानाहिताग्निः—अग्निहोत्रानुष्ठानार्थम् ।
२ गार्हपत्याद्यग्नयः—अङ्गप्रधानहोमरूपप्रतिपत्तिकर्मार्थम् ।
३ विट्कुलम्— } दक्षिणाग्न्यानयनार्थम् ।
४ वित्तवतः कुलं वा— }
५ काष्ठकरीषादि—अग्नीनां प्रज्वलनार्थम् ।
६ अग्न्युद्धरणशरावौ—आहवनीयोद्धरणप्रणयनाद्यर्थम् ।
७ आपः—आचमननिनयनाद्यर्थम् ।
८ कमण्डलुः—धाराहरणार्थम् ।
९ संदंशः—अङ्गारातिसर्जनाद्यर्थम् ।
१० अङ्गाराः—अग्निहोत्राधिश्रयणार्थम् ।
११ पयः- प्रधानहोत्रभक्षणार्थम् ।
१२ स्थाली—पयोधिश्रयणार्थम् ।
१३ ज्वलदुल्मुकम्—अवज्वलनपरिहरणार्थम् ।
१४ स्रुवः—प्रतिषेकोन्नयनाद्यर्थम् ।
१५ स्रुक्—होमसाधनम् ।
१६ समिधः—होमार्थम् ।
१७ कुशाः—स्रुगासादनार्थम् ।
१८ अजिनं वासो वा—यज्ञोपवीतप्राचीनावीत्यर्थम् ।
१९ आग्नेय्य ऋचः—अनुमन्त्रणाद्यर्थम् ।
२० एकः—नित्यहोमार्थम् ।
२१ अन्तेवासी—,, ,,

---

* एतदग्निहोत्रमन्थनयन्त्रकं कर्मप्रदीपे प्रकाशितं प्रयोगशास्त्रकृद्भिस्तावदरणिद्वयमेवाऽऽम्नातमस्ति तन्मते संवर्षणमेव मन्थनमिति ज्ञायते । चात्रमोविलीन्यादिकं नास्त्येषेति सूत्रकृदाशय इति भाति ।

२२ परिकर्मा—सामग्रीसज्जीकरणार्थम् ।
२३ अधरारणिः—अग्निनिष्पत्त्यर्थम् ।
२४ उत्तरारणिः—प्रमन्थार्थम् ।
२५ चात्रम्—घर्षणकाष्ठाधारः ।
२६ ओविली—चात्राधारभूतः काष्ठविशेषः ।
२७ घृतम्—अधरारणेः स्निग्धीकरणार्थम् ।
२८ नारिकेलफलत्वचो रज्जुः—अग्निनिष्पत्त्यनन्तरमेव प्रदीपनार्थम् ।
२९ गोवालाः—चात्रालोडनार्थम् ।
३० अश्वत्थः शमीगर्भः—अरण्यर्थम् ।
३१ खादिराणि काष्ठशकलानि—शरावाङ्गारार्थम् ।
३२ वैकङ्कतः—स्रुगर्थम् ।
३३ वस्त्रम्—यज्ञोपवीतार्थम् ।
३४ खदिरः— { चात्रौविल्यर्थम् । स्रुवार्थं च ।

इत्यग्निहोत्रसामग्री ।

---

## अग्निहोत्रप्रयोगमन्त्रभाष्यम् ।

**देवं त्वा देवेभ्यः श्रिया उद्धरामि ॥ १ ॥ ( आश्वलायनश्रौ० सू० २ । २ । २ )**

**भाष्यम्**—हेऽग्ने देवं द्योतमानं, त्वा त्वामग्न्येकदेशभूतम्, देवेभ्यो द्योतमानवह्न्यादिदेवतार्थम् । श्रियै—ऋग्यजुःसामोक्तफलसंपत्प्राप्तये “ ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम् ” इति श्रुतेः । उद्धरामि गार्हपत्याग्न्यायतनादूर्ध्वदेशं प्रापयामि ॥ १ ॥

**उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वांश्चकार ।**
**अह्ना यदेनः कृतमस्ति किंचित्सर्वस्मान्मोद्धृतः पाहि तस्मात् ॥ २ ॥**

**भाष्यम्**—हे, उद्ध्रियमाणाग्नेऽहमविद्वानजानन् सन् यदहं पापं चकाराकरवम् । तथा विद्वाञ्जानन्नपि यत्पापं चकाराकरवम् । तस्मात्पाप्मनो दुरितान्मा मामुद्धरापसारयेत्यर्थः । अपि चोद्धृतः संस्त्वं यत्किंचिदेनोऽह्नाऽहनि “ सप्तम्यर्थे तृतीया ” कृतमस्ति तस्मात्सर्वस्मादेनसः पापान्मा मां पाहि पालय रक्षेत्यर्थः ॥ २ ॥

**अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ तयाऽनन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहा ॥ ३ ॥**

**भाष्यम्**—अमृतस्य व्रीह्यादेर्योनौ उत्पत्तिस्थानभूतायाममृतायाममरणधर्मिण्यां चिरस्थायिन्यामिति यावत् । पृथिव्याममृताहुतिममृता आहुतयो यस्मिंस्तं यत्र हुता आहुतयोऽमृतरूपा भवन्तीत्यर्थः । अग्निं गार्हपत्यादुद्धृतादग्नेरेकदेशं जुहोमि स्थापयामि प्रकरणाज्जुहोतिः स्थापनार्थः । तया पूर्वोक्ताग्निस्थापनरूपयाऽऽहुत्याऽनन्तं काममनन्तान्कामान् " जातावेकवचनम् " अहमेकः क्षीरहोताऽध्वर्युर्ब्रह्मचारी वाऽन्तेवासी जयानि प्राप्नवानि । यद्यप्यत्रास्मच्छब्दगोचरो होमकर्तोच्यते तथाऽपि न तस्यानन्तकामजेतृत्वम् । किंतु यजमानस्यैव । होमकर्ता तु दक्षिणया परिक्रीतः । अतः स दक्षिणातिरिक्तं फलं न लभते । अयं प्रथमः प्रजापतिर्हिरण्यगर्भः पूर्वोक्तयाऽऽहुत्याऽनन्तान्कामाञ्जिगाय । अतोऽग्ना आहवनीयाग्न्यायतनेऽग्निरग्निं स्वाहा स्थापयामि । प्रकरणादयमर्थोऽवसीयते ॥ ३ ॥

**ऋतसत्याभ्यां त्वा पर्युक्षामि ॥ ४ ॥**

**भाष्यम्**—ऋतं मानसिकं सत्यम् । सत्यं वाक्कायिकम् । ताभ्यां हेऽग्ने त्वा त्वां पर्युक्षामि परिषिञ्चामि परित उदकेन सिञ्चामि । त्वत्परितो वर्तमानोऽहं मनोवाक्कायैः सत्यं नातिक्रमिष्य इत्यर्थः ॥ ४ ॥

**तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।**
**अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ ५ ॥**

**भाष्यम्**—हेऽग्ने तन्तुं यज्ञं तन्वन्विस्तारयन्रजसो रञ्जनात्मकस्य लोकस्य भानुं भासकमादित्यमन्विहि अनुगच्छ रश्मिद्वारा सूर्यमण्डलं प्रविशेत्यर्थः । किं च ज्योतिष्मतः प्रकाशवतो यज्ञस्य पथो गमनमार्गान् । अथवा ज्योतिष्मतो दीप्तिमतः स्वर्गस्य पथो मार्गान्देवयानान्रक्ष पालय । किंदृशान्मार्गान्धिया कर्मणा कृतान्संपादितान् । किं च सोऽग्निर्जोगुवां स्तोतॄणामपः कर्मनामैतत् । क्रियया व्याप्यं कर्मानुल्बणमनतिरिक्तं वयत करोतु यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिरिति हि ब्राह्मणम् । स त्वं मनुर्भव मन्तव्यो भव स्तुत्यो भवेत्यर्थः । किंच दैव्यं जनं देवसंघं जनयोत्पादय यज्ञाभिगमनवन्तं कुर्वित्यर्थः ॥ ५ ॥

**सुहुतकृतः स्थ सुहुतं करिष्यथ ॥ ६ ॥**

**भाष्यम्**—हेऽङ्गारा यूयं सुहुतकृतः सुहुतकारिणः स्थ भवथ । तस्मात्सुहुतं सुपक्वं यथा स्यात्तथा करिष्यथ कुरुतेत्यर्थः । व्यत्ययेन लृट् ॥ ६ ॥

अधिश्रितमध्यधिश्रितमधिश्रितं हिंऽम् ॥ ७ ॥

**भाष्यम्**—अधिश्रितमङ्गारेषु स्थापितम् । "अभ्यासे भूयांसमर्थं मन्यन्ते" इति न्यायेनाऽऽम्रेडितम् । हिंकारः सामत्वसंपादनार्थः । प्लुतिः सांप्रदायिकी ॥ ७ ॥

इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व ।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विवति ॥ ८ ॥

**भाष्यम्**—हे जातवेदोऽग्न इळाया इडायामिडापात्र्यां पदमाधेयभूतं पद्यते स्थाप्यते तदिति व्युत्पत्तेर्घृतवद्घृतयुक्तं चराचरं स्थावरजङ्गमप्राण्यात्मकम् । स्थावरजङ्गमात्मकप्राणिस्थितिभूतमित्यर्थः । इदमङ्गारेषु स्थाप्यमानं हविर्हूयत इति हविः पयोयवाग्वोदनादिरूपम् । जुषस्व सेवस्व । ये विश्वरूपा ग्राम्याणां पशूनां गवाश्वाजाविपुरुषगर्दभोष्ट्राणाम् । ग्रामे भवा ग्राम्यास्तेषां सप्तानां मयि आहिताग्नौ पुष्टिरस्तु । सर्वेऽपि सप्त पशवो बाहुल्येन मम गृहे वर्तन्ताम् । तद्विभवद्वारा पुष्टो भवेयमिति भावः ॥ ८ ॥

अग्निष्टे तेजो मा हार्षीत् ॥ ९ ॥

**भाष्यम्**—अग्निर्गार्हपत्याग्निस्ते हविषस्तेजो ब्रह्मवर्चसादितेजःप्रापकं वीर्यं मा हार्षीन्मा विनाशयतु ॥ ९ ॥

शान्तिरस्यमृतमसि ॥ १० ॥

**भाष्यम्**—हे हविस्त्वं शान्तिः शान्तिसाधकममृतममरणधर्मसाधकम् । आयुर्वै घृतमितिवल्लक्षणा । असि ॥ १० ॥

अन्तरितं रक्षोऽन्तारिता अरातयः ॥ ११ ॥

**भाष्यम्**—अन्तारितमन्तर्धानमाप्तं रक्षो राक्षसजातिः । जातावेकवचनम् । अन्तरिता अन्तर्धानमाप्ता अरातयः शत्रवः । अनेनोल्मुकपरिहरणेनान्तर्भूय विघ्नं कुर्वन्तो नष्टा भवन्त्वित्यर्थः ॥ ११ ॥

दिवे त्वा, अन्तरिक्षाय त्वा, पृथिव्यै त्वा ॥ १२ ॥

**भाष्यम्**—हे हविः । त्वां द्युलोक आकाशेऽन्तरिक्षायान्तरिक्षलोके मेरुपृष्ठादारभ्याऽऽध्रुवाद्ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः । पृथिव्यै भूर्लोक आऽवीचेर्मेरुपृष्ठं यावद्भूर्लोकः । सर्वत्र चतुर्थी सप्तम्यर्थे द्रष्टव्या । व्यत्ययो बहुलमिति सूत्रात् ॥ १२ ॥

सुहुतकृतः स्थ सुहुतमकार्ष्ट ॥ १३ ॥

**भाष्यम्**—हेऽङ्गारा यूयं सुहुतकृतो हविर्द्रव्यप्रज्वालकाः स्थ भवथ । यूयं सुहुतं सुष्ठु हुतं यथा स्यात्तथा हविरकार्ष्ट कृतवन्तः ॥ १३ ॥

**प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातयः ॥ १४ ॥**

**भाष्यम्**—स्रुक्स्रुवोरन्तर्भूतं रक्षो मलिनिमरूपं प्रत्युष्टं दग्धं भवतु । तथाऽरातयः शत्रवोऽपि प्रत्युष्टा दग्धा भवन्त्वित्यर्थः ॥ १४ ॥

**ओमुन्नयानि ॥ १५ ॥**

**भाष्यम्**-ऊर्ध्वं प्रापयाणि ॥ १५ ॥

**ओमुन्नय ॥ १६ ॥**

**भाष्यम्**—ऊर्ध्वं प्रापय ॥ १६ ॥

**भूरिळा भुव इळा स्वरिळा वृध इळा ॥ १७ ॥**

**भाष्यम्**—अत्र स्रुचीडापात्रत्वमतिदिश्य भूर्भुवः स्वरिति लोकत्रयात्मकत्वमेव स्तूयते । वृधो वृद्धिकारिण्यः संतत्यादिवृद्धिकारिणीत्यर्थः । आर्षं बहुवचनम् ॥ १७ ॥

**रजतां त्वाऽग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहा ॥ १८ ॥**

**भाष्यम्**—रजतां रजतवर्णायमानां त्वा त्वामग्निज्योतिषमग्न्युद्दीपनकर्त्रीं रात्रिं रात्र्यामिष्टकामिष्टकावदग्न्याधारभूतां समित्काष्ठे ह्यग्निर्गूढस्तिष्ठतीति । उपदधे जुहोमि स्वाहा स्वाहेति प्रदानार्थकमव्ययम् । " स्वाहा देवहविर्दाने " इत्यभिधानमालायाम् ।

अहोरात्राण्येवेष्टकारूपेण समाम्नातास्तैत्तिरीयैः—

**यत्सायं प्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उपधत्ते यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यत्सायं प्रातर्जुहोत्यहोरात्राण्येवाऽऽप्त्वेष्टकाः कृत्वोपधत्ते (तै० संहितायाम् ३ । ४ । १० ) ॥**

**भाष्यम्**—अग्निहोत्री कालद्वयेऽग्निहोत्रं जुहोतीति यत्ताः सर्वा आहुतिरूपा इष्टका एव यजमान उपधत्ते । यद्यप्यत्र मृन्मया इष्टका न सन्ति तथाऽपि यः पुरुष आहिताग्निर्भवति एतस्याहोरात्राण्येवेष्टकाः संपद्यन्ते । अतो यदि सायं प्रातर्नियमेन जुहोति तदानीमनुष्ठानेनाहोरात्राण्येव प्राप्तकालरूपा इष्टकाः कृत्वोपधानं कृतवान्भवति ॥ ( ३ । ४ । १० ) ॥ १८ ॥

**विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धा ॥ १९ ॥**

**भाष्यम्**—हे देवते त्वं विद्युद्वियोगहेतुरसि । अतो मे पाप्मानं विद्य वियोजय । अग्नावग्निसाध्ये कर्मणि अग्निहोत्रे मे श्रद्धा चास्तु ॥ १९ ॥

**भूर्भुवः स्वरोमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ २० ॥**

**भाष्यम्**—भूर्भुवः स्वः, महाव्याहृतयः । एताभिर्व्याहृतिभिः पृथिव्यन्तरिक्षद्युलोका अभिधेयाः । ब्रह्मक्षत्रविशो वा वर्णाः । अन्नप्रजापशवो वा । ओङ्कारः सर्वदेवतावाचकः । ओङ्कारः सर्वदेवत्य इति कात्यायनानुक्रमणात् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । इति पाणिनिसूत्रात्प्रथमास्थाने चतुर्थी । अग्निर्ज्योतिर्ज्योतिरग्निरिति मन्त्राभ्यासः । अभ्यासे भूयांसमर्थं मन्यन्त इत्यभिप्रायः । अथ कोऽर्थः । अग्नये ज्योतिषे स्वाहा सुहुतमस्तु ।

अथवा—स्वस्याहानमस्तु । हानं हा न हा अहाः स्वस्याहाऽपरित्याग आत्मनो द्रव्यस्य वेति ।

अथवा—योऽग्निर्ज्योतिर्ज्योतिश्चाग्निस्तस्मै स्वाहा ।

तैत्तिरीयैरयं मन्त्र एवं व्याख्यातः—

अग्निर्ज्योतिरित्याह । अग्निर्वै रेतोधाः । ज्योतिरग्निः स्वाहेत्याह । प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । रेत एव तद्दधाति ॥ २० ॥

**पशून्मे यच्छ ॥ २१ ॥**

**भाष्यम्**—हे गार्हपत्य पशून्ग्राम्यानारण्यान्हविःसाधनभूतान्मे मह्यं यच्छ देहि । यज्ञार्थमेव हि पशवो याच्यन्ते । श्रावितोऽयमर्थस्तैत्तिरीयैः—"ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्ताम्" इति ॥ २१ ॥

**पशुभ्यस्त्वा ॥ २२ ॥**

**भाष्यम्**—हे पाणिगतलेप त्वा त्वां पशुभ्यः कृते यच्छामीति शेषः ॥ २२ ॥

**स्वधा पितृभ्यः ॥ २३ ॥**

**भाष्यम्**—इमा आपः पितृभ्यः पितॄणां कृते दत्ताः सन्त्विति शेषः ॥ २३ ॥

**वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धा ॥ २४ ॥**

**भाष्यम्**—हे देवते वृष्टिश्छेदनहेतुरसि । अतो मे पाप्मानं वृश्च छिन्धि । अप्सु चाप्शब्दः कर्मनामसु पठितो निघण्टौ । शास्त्रीयकर्मानुष्ठाने श्रद्धाऽस्तु ॥ २४ ॥

**तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ २५ ॥**

**भाष्यम्**—हे समित्तेन ऋषिणा मन्त्रदर्शिना । तेन ब्रह्मणा मन्त्रेण । तया देवतया तया त्वदभिमानिन्या देवतया । अङ्गिरोभिरिवोपहिता सत्यग्निमती त्वं ध्रुवा निश्चला सती सीदोपविश वह्नावित्यर्थः ॥ २५ ॥

**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।**
**जन्मन्देवानां विशस्त्रिष्वारोचने दिवः ॥ २६ ॥**

**भाष्यम्**—दिवो रोचने स्वर्गस्य प्रकाशकेऽस्य जन्मनि यजमानस्य जन्मनि निमित्तभूते सति देवानां संबन्धिन्यो विशः प्रजारूपाः पृश्नयोऽल्पगोसदृशाः सूददोहसोऽन्नस्य दोहयित्र्यस्ता इष्टकाः सोमं श्रीणन्ति पक्कं कुर्वन्ति । कदा त्रिषु सवनेषु । तस्मादस्य समिदुपधानस्य सोमसाम्यं प्रदर्शितं भवति ॥ २६ ॥

**भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः ॥ २७ ॥**

**भाष्यम्**-हे भगवति समित्त्वं महाव्याहृत्यात्मिका । अतस्त्वां याचे शोभनप्रजाः प्रजाभिः स्यां भवेयम् । शोभनवीरश्च वीरैः शोभनपोषश्च पोषैः । पोषो भूगोहिरण्यधान्यादिभिः । वीरैः पुत्रैरिति वा । सुवीरः शास्त्रीयमार्गवर्तिशोभनपुत्रयुक्तो भवेयम् ॥ २७ ॥

**अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥२८॥**

**भाष्यम्**—अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते—अग्निर्देवानां दूत आसीदुशनाः काव्योऽसुराणामिति । तादृशं देवदूतमग्निमस्मिन्कर्मणि वृणीमहे संभजामः। कीदृशं होतारं देवानामाह्वातारम् । विश्ववेदसं सर्वधनोपेतम् । अस्य प्रवर्तमानस्य यज्ञस्य निष्पादकत्वेन सुक्रतुं शोभनकर्माणं शोभनयज्ञं वा ॥ २८ ॥

**अग्निमग्निं हवीमभिः सदाऽऽहवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ २९ ॥**

**भाष्यम्**—यद्यप्यग्निः स्वरूपेणैक एव तथाऽपि प्रयोगभेदादाहवनीयादिस्थानभेदात्पावकादिविशेषणभेदाद्वा बहुविधत्वमभिप्रेत्याग्निमग्निमिति वीप्सा । तं हवीमभिराह्वानकरणैर्मन्त्रैः सदाऽऽहवन्त निरन्तरमनुष्ठातार आह्वयन्ति । कीदृशं विश्पतिं विशां प्रजानां होत्रादीनां पालकं हव्यवाहं यजमानसमर्पितस्य हविषो देवान्प्रति वोढारम् । अत एव पुरुप्रियं बहूनां प्रीत्यास्पदम् ॥ २९ ॥

**अग्ने देवाँ इहाऽऽवह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ ३० ॥**

**भाष्यम्**—हेऽग्ने जज्ञानोऽरण्योरुत्पन्नस्त्वं वृक्तबर्हिष आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय । तं यजमानमनुग्रहीतुमिह कर्मणि हविर्भुजो देवानावह । नोऽस्मदर्थं होता देवानामाह्वाता त्वमीड्यः स्तुत्योऽसि ॥ ३० ॥

**ताँ उशतो विबोधय यदग्ने यासि दूत्यम् । देवैरासत्सि बर्हिषि ॥३१॥**

**भाष्यम्**—हेऽग्ने यद्यस्मात्कारणाद्दूत्यं यासि देवानां दूतकर्म प्राप्नोषि तस्मात्का-

रणादुशतो हविः कामयमानांस्तान्देवान्हविःस्वीकारार्थं विबोधय । विबोध्य च बर्हिष्यस्मिन्कर्मणि तैर्देवैः सहाऽऽसत्सि आसीदाऽऽगत्योपविश ॥ ३१ ॥

**घृताहवन दीदिवः प्रतिष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ॥ ३२ ॥**

**भाष्यम्**—हे घृताहवन घृतेनाऽऽहूयमान दीदिवो दीपमानाग्ने त्वं रक्षस्विनो रक्षोयुक्तान्रिषतो हिंसकाञ्छत्रून्प्रत्यस्माकं प्रतिकूलान्दह स्म सर्वथा भस्मी कुरु ॥ ३२ ॥

**अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ॥ ३३ ॥**

**भाष्यम्**—अग्निराहवनीयाख्यस्तस्मिन्प्रक्षिप्यमाणेनाग्निना निर्मथ्येन प्रणीतेन वा सह समिध्यते सम्यग्दीप्यते । कीदृशोऽग्निः कविर्मेधावी । गृहपतिर्यजमानगृहस्य पालकः । युवा नित्यतरुणः । हव्यवाड्ढविषो वोढा । जुह्वास्यो जुहूरूपेण मुखेन युक्तः ॥ ३३ ॥

**आयुषे त्वा प्राश्नामि । अन्नाद्याय त्वा प्राश्नामि ॥ ३४ ॥**

**भाष्यम्**—हे हविर्द्रव्याऽऽयुष आयुषो वृद्ध्यै त्वा त्वां प्राश्नामि भक्षयामि । हे हविर्द्रव्यान्नाद्यायान्नं च तदाद्यं चान्नाद्यं तस्मै खाद्यान्नकामनिमित्तं त्वां भक्षयामि ॥ ३४ ॥

**गृहपतये स्वाहा ॥ ३५ ॥**

**भाष्यम्**—गृहपतये गृहपतिना संयुक्ताय गार्हपत्याय स्वाहा दत्तमस्तु ॥ ३५ ॥

**अग्नये संवेशपतये स्वाहा ॥ ३६ ॥**

**भाष्यम्**—संवेशपतये कर्मणामधिपतये । वेशशब्दः कर्मनामसु पठितो यास्केन निघण्टौ ॥ ३६ ॥

**अग्नयेऽन्नादायान्नपतये स्वाहा ॥ ३७ ॥**

**भाष्यम्**—अन्नादायाग्नये योऽयमन्वाहार्यपचनोऽस्ति एष तेषामाहितानां चाग्नीनां मध्येऽतिशयेनान्नादः । अन्नपतयेऽन्नस्वामिने स्वाहा दत्तमस्तु । वेदिता स्वयमन्नादो रोगराहित्येन भोक्तुं समर्थोऽन्नपतिरन्नस्वामी च भवति । तथा प्रजया हि पुत्रादिरूपया सहान्नाद्यं प्राप्नोति ॥ ३७ ॥

**सर्पदेवजनेभ्यः स्वाहा ॥ ३८ ॥**

**भाष्यम्**—सर्पा देवजना गन्धर्वास्तेभ्यः स्वाहा हविर्दत्तमस्तु ॥ ३८ ॥

**ऋतुभ्यः स्वाहा । दिग्भ्यः स्वाहा । सप्तऋषिभ्यः स्वाहा । इतरजनेभ्यः स्वाहा ॥ ३९ ॥**

**भाष्यम्**—ऋत्वभिमानिदिगभिमानिदेवताभ्यो दत्तमस्तु । कश्यपादिसप्तऋषिभ्यः । इतरजनेभ्यो देवजनेभ्यो य इतरे तेभ्यश्च दत्तमस्तु ॥ ३९ ॥

**पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहा ॥ ४० ॥**

**भाष्यम्**—अग्नये स्वाहेति दत्तमुदकरूपं हविः पृथिव्यां जुहोमि प्रक्षिपामि **वैश्वानरो** विश्वान्नरानितो लोकादमुं लोकं नयति । हेतुकर्तृत्वेन सर्वासु प्रवृत्तिष्वयमेव नरान्नयति । यथा पञ्चाग्निविद्यायामुच्यते—

"अपि वा सति तस्मिन्सर्वाः प्रवृत्तयः फलवत्यो नराणां भवन्तीति हेतुकर्तृत्वेन सर्वासु प्रवृत्तिष्वयमेव नरान्नयति प्रवर्तयतीति वैश्वानरः"।

अथवा—"विश्व एनं नरा नयन्तीति वा" कर्मकारकम् । स नीयमानस्तासु तासु क्रियास्वङ्गभावं नरैः कर्म संपद्यते ।

अपि वा विश्वानर एव कश्चित् स्यात् । स पुनः कस्मात् । प्रत्यृता सर्वाणि भूतानि विश्वानि ह्यसौ भूतानि प्रति ऋतः प्रविष्ट इत्यर्थः । तस्य विश्वानरस्यापत्यं वैश्वानरः ॥ ४० ॥

**प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहा ॥ ४१ ॥**

**भाष्यम्**—प्राणामृतयोरभेदः । यतोऽमृतं जलम् । प्राणाश्च जलमयाः । आपोमयाः प्राणा इति श्रवणात् ॥ ४१ ॥

**दीदिहि दीदाय दीदिदाय ॥ ४२ ॥**

**भाष्यम्**—हे आहवनीयगार्हपत्यदक्षिणाग्नयो यूयमस्मभ्यं प्रजावित्तादि दत्तेत्यभ्यर्थना ॥ ४२ ॥

प्रातःकाले त एव मन्त्राः परं यत्र क्व वाऽस्ति विशेषस्तमिमं प्रदर्शयामः । हरिणीं हरिद्वर्णाम् । सूर्यज्योतिषं सूर्यज्योतिष इव प्रदीप्ताम् । अहो दिवसे ।

**भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ ४३ ॥**

**भाष्यम्**—इति प्रातरग्निहोत्रहोममन्त्रः सायंहोममन्त्रवद्व्याख्येयः । सूर्यसंबन्धि तेजो रात्रावग्निं प्रविशतीति सायमग्निर्ज्योतिरिति मन्त्रो युक्तः । उदयकालेऽग्निसंबन्धि ज्योतिः सूर्यं प्रविशति तस्मात्प्रातः सूर्यो ज्योतिरिति मन्त्रः ।

"अग्निं वावाऽऽदित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी संपद्येते । उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे" । इति तैत्तिरिश्रुतेः ॥ ४३ ॥

**इत्यग्निहोत्रमन्त्रभाष्यम् ॥**

---

## अथ समारोपप्रयोगमन्त्रभाष्यम् ।

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।**
**तं जानन्नग्न आसीदाथा नो वर्धया गिरः । (ऋ० सं ३।१।३३)॥ १ ॥**

**भाष्यम्**—हेऽग्नेऽयं गार्हपत्यप्रदेशस्ते योनिस्तव स्थानम् । स च योनिर्ऋत्विय ऋतुसंबन्धात्सर्वस्मिन्नप्यृतावनेन होमनिष्पत्तेः । यतो गार्हपत्यप्रदेशाज्जात उद्भूतस्त्वमरोचथा दीप्यसे तं प्रदेशं जानन्मम स्थानमित्यवगच्छन्नासीद प्रतितिष्ठ । अनन्तरमस्माकं गिरो वाणीर्वर्धयेत्यर्थः ।

अथवा—यतो यस्मादरणिस्थानाज्जात उत्पन्नः सन्दीप्यसे तमरणिप्रदेशं स्थानभूतं जानंस्तत्रारण्योरासीदेति ॥ १ ॥

**या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नर्या पुरूणि ।**
**यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमानः ॥ २ ॥**

**भाष्यम्**—हेऽग्ने ते तव यज्ञिया तनूर्यज्ञयोग्या या तनूस्तया तन्वा सहेहाऽऽगच्छ । आगत्य चाऽऽत्मानमारोह । त्वं मदीयात्मा सन्मच्छरीरमारोह । किं कुर्वन् ( अस्माकम् ) नर्या नरस्य योग्यानि वसूनि धनानि पुरूणि बहून्यच्छाऽभिमुखानि कृण्वंस्त्वं यज्ञस्वरूपो भूत्वा यज्ञनिर्वाहकं मद्देहं योनिं स्वं स्थानमासीद प्राप्नुहि । हे जातवेदो भुवः सकाशादाभिमुख्येन जायमानस्त्वं स्वां योनिमाप्नुहीत्यर्थः ॥ २ ॥

**प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् ।**
**प्रजां पुष्टिं रयिमस्मासु धेह्यथा भव यजमानाय शं योः ॥ ३ ॥**

**भाष्यम्**—हे जातवेदः पुनरपि त्वं प्रत्यवरोहारण्योः सकाशाद्भूमाववतर । अवतीर्य च प्रजानन्नस्य देवस्येदं हविरिति प्रकर्षेण जानन्नोऽस्मदीयं हव्यं देवेभ्यो वह प्रापय । प्रजादिकमस्मासु संपादय । अथानन्तरं यजमानाय स्वस्तिकरो भव । सर्वथा यजमानसहितानामस्माकं स्वस्ति कुर्वित्यर्थः ॥ ३ ॥

इति समारोपप्रयोगमन्त्रभाष्यम् ।

## अथ प्रवासोपस्थानमन्त्रभाष्यम् ।

**शंस्य पशून्मे पाहि ॥ १ ॥**

**भाष्यम्**—हे शंस्य ऋत्विग्भिः प्रशंसनीयरूपत्वाच्छंस्य आहवनीयस्तत्संबुद्धिः । मे मम पशून्पाहि रक्ष । शंसु स्तुतौ ॥ १ ॥

**नर्य प्रजां मे पाहि ॥ २ ॥**

**भाष्यम्**—नर्य नरेभ्यो मनुष्येभ्यो हितो गार्हपत्यस्तत्संबुद्धिः । मे मम प्रजां पाहि गोपाय ॥ २ ॥

**अथर्व पितुं मे पाहि ॥ ३ ॥**

**भाष्यम्**–हेऽथर्व चतुर्वेदप्रवर्तकाचार्यरूप दक्षिणाग्ने पितुं पालकं मे मम प्राणं पाहि रक्ष । अत्राथर्वशब्दमुवटमहीधरावेवं व्याचख्यतुः—

अथर्वाऽतनवानथर्वः "अत सातत्यगमने" सततं हि दक्षिणाग्निर्गार्हपत्यस्थानं गच्छति । अथर्व इति वाजसनेयिनः समामनन्ति ।

निरुक्तकारस्त्वेवं निरुक्तयांबभूव— ' अथर्वाणोऽथनवन्तः । थर्वतिश्चरतिकर्मा तत्प्रतिषेधः "॥ ३ ॥

**इमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् ।**
**अविनष्टानविहृतान्पूषैनानाभिरक्षत्वस्माकं पुनरायनात् ॥ ४ ॥**

**भाष्यम्**—हे मित्रावरुणा एतन्नामकौ देवौ युवं युवां म इमान्संनिकृष्टान्गृहाञ्शालां गोपायतं रक्षतम् । किं चास्माकं पुनरायनान्मम आवत्पुनरागमनं तावद्यथाऽविनष्टाः केनाप्यविहृताः पशवः स्युस्तथैनान्पशून्पूषा पालयित्री देवता रक्षतु ॥ ४ ॥

**मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे ।**
**तत्त्वं बिभृहि पुनरा ममैतोस्तवाहं नाम बिभराण्यग्ने ॥ ५ ॥**

**भाष्यम्**—ब्राह्मणस्य नामद्वयं विद्यते । देवदत्तयज्ञदत्तादिकमेकमुपाध्यायदीक्षितादिकमपरम् । अत एव श्रूयते–" तस्माद्द्विनामा ब्राह्मणोऽर्द्धुकः " इति । तत्राध्यापनादेरूर्ध्वं प्रवृत्तत्वादुपाध्यायादिकं चरमम् । अग्रे जन्मकाले मातापितृभ्यां कृतत्वाद्देवदत्तादिकं प्रथमम् । हे जातवेदो मम यत्प्रथमं नाम तत्त्वं धारय । कियन्तं कालम् । पुनरा ममैतोरस्मदीयपुनरागमनात् । अहमपि तव नाम धारयाणि । त्वमत्र वैकल्यं निर्हरन्मदीयं कार्यं कुरु । त्वन्नामधारिणो मम गन्तव्यदेशे वैकल्यमेव न संभवतीत्यर्थः ॥ ५ ॥

**मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मां तस्थुर्नो अरातयः ( ऋ० ८ । १ । १९ ) ॥ ६ ॥**

**भाष्यम्**—हे इन्द्र वयं गौपायनाः पथः समीचीनान्मार्गान्मा प्रगाम मा परागच्छाम । असमातिगृहमेव गच्छाम । मा च सोमिनोऽसमातेर्यज्ञात्प्रगाम । माऽस्थुर्मा तिष्ठन्तु नोऽस्माकमन्तर्मार्गमध्येऽरातयः शत्रवः । यद्वा सोमिनः सोमवतो यागान्मा प्रगाम ॥ ६ ॥

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः । तमाहुतं नशीमहि ॥ ७ ॥**

**भाष्यम्**—योऽयमग्न्याख्यस्तन्तुराहवनीयादिरूपेण विस्तृतो यज्ञस्य प्रसाधनः प्रकर्षेण साधयिता देवैः स्तोतृभिर्ऋत्विग्भिर्विस्तारितो वर्तते वेद्यां तमाहुतं सर्वतो हूयमानं नशीमहि प्राप्नुयाम । नशतिर्व्याप्तिकर्मा ॥ ७ ॥

**मनो न्वाहुवामहे नाराशंसेन सोमेन । पितृणां च मन्मभिः ॥ ८ ॥**

**भाष्यम्**—वयं बन्धुश्रुतबन्ध्वादयो मनः सुबन्धोः संबन्धि मायाविभिरपहृतं नु क्षिप्रमाहुवामहे । केन साधनेनेति तदुच्यते । नाराशंसेन नराशंसचमसगतेन सोमेन । नरैः शस्यन्त इति नराशंसाः पितरः । तेषां चमसानां कम्पनमेव होमः । तथाविधेन सोमेन पितॄणामङ्गिरसां मन्मभिर्मननीयैः स्तोत्रैश्च ॥ ८ ॥

**आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ ९ ॥**

**भाष्यम्**—हे सुबन्धो ते मनः पुनरैत्वभिचरतः सकाशात्पुनरागच्छतु । किमर्थमित्युच्यते । क्रत्वे कर्मणे लौकिकवैदिकविषयाय दक्षाय बलाय च । यद्वा क्रत्वेऽपानाय दक्षाय प्राणाय प्राणो वै दक्षोऽपानः क्रतुरिति श्रुतिः । जीवसे जीवनाय च । ज्योक्च चिरकालं सूर्यं दृशे सूर्यं द्रष्टुमत्यन्तं चिरजीवनायेत्यर्थः ॥ ९ ॥

**पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥ १० ॥**

**भाष्यम्**—नोऽस्माकं पितरः पितृभूता अङ्गिरसस्तेषां जनः संघ इत्यर्थः । स च जीवं व्रातं प्राणादीन्द्रियसंघातं पुनर्ददातु । तथा दैव्यो जनः । जनशब्दः संघवचनः । देवानां संघोऽपि जीवं व्रातं च ददातु । वयं च तदुभयं सचेमहि प्राप्नुयाम ॥ १० ॥

**वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥ ११ ॥**

**भाष्यम्**—हे सोमदेव वयं बन्ध्वादयस्तव व्रते त्वदीये कर्मणि । व्रतमिति कर्मनाम । तव तनूषु त्वदीयेष्वङ्गेषु च मनो बिभ्रतस्तात्पर्ययुक्तां बुद्धिं धारयन्तः प्रजावन्तः प्रजाभिः पुत्रपौत्रादिभिर्युक्ताः सचेमहि संगच्छेमहि । जीवं व्रातं चेति शेषः ॥ ११ ॥

**सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः संपिपृक्त । भगो मे अग्ने सख्येन मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥ ( ऋ० ३ । ३ । २७ ) ॥ १२ ॥**

**भाष्यम्**—हेऽग्नेऽस्माकं पन्था मार्गः सदा सर्वदा सुगः सुखेन गन्तुं शक्यः

पितुमानन्नवांश्चास्तु । हे देवा मघ्वा माधुर्येणैतेनोदकेनौषधीः संपिपृक्त संपर्चयत सेचयतेत्यर्थः । हेऽग्ने त्वया सख्ये संजाते सति मे मम भगो धनं न मृध्या न विनश्यतु । किं च रायो धनस्य पुरुक्षोर्बह्वन्नस्य च सदनं स्थानमुदश्यां प्राप्नुयाम् ॥ १२ ॥

**इहैव सन्तत्र सन्तं त्वाऽग्ने हृदा वाचा मनसा वा बिभर्मि । तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठते ॥ १३ ॥**

**भाष्यम्**—हेऽग्ने इहैव देशे सन्नहं तत्र तत्र गृहविशेषे सन्तं त्वामग्ने हृदा प्राणेन वाचा मनसा च बिभर्मि धारयामि । ग्रामान्तरे गतस्यापि मम मनोवाक्प्राणादयो भवद्विषयदेशवर्तित्वेन तिरोभूय सन्तमवस्थितं मा मां मा प्रहासीर्मा परित्यजन्तु । वैश्वानरेण सर्वमनुष्यहितेन ज्योतिषा युक्तं त्वामुपतिष्ठत उपतिष्ठे सेव इत्यर्थः ॥ १३ ॥

**अपि पन्थामगन्महि स्वस्ति गामनेहसम् ।**
**येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु । ( ऋ० ४ ।८ । १३ ) ॥ १४ ॥**

**भाष्यम्**—पन्थां पन्थानं मार्गमप्यगन्महि अपि गताः प्राप्ताः स्मः । कीदृशम् । स्वस्ति गां सुखेन गन्तव्यमनेहसं पापरहितम् । येन पथा गच्छन्विश्वाः सर्वा द्विषो द्वेष्ट्रीः प्रजाः परिवृणक्ति परिवर्जयति बाधते वसु धनं च विन्दते लभते तादृशं पन्थानमित्यर्थः ॥ १४ ॥

**विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रति वेशा रिषाम॥१५॥**

**भाष्यम्**—हेऽग्नेऽनातुरेण पीडारहितेन मनसा विश्वदानीं सर्वदा नित्यकालं ते त्वदर्थमाभरन्त आहरन्तः सन्तोऽत एवास्माकं वेशा निवासस्थानानि मा प्रतिरिषाम मा हिंसीः । त्वदर्थं समिदाद्याहरतोऽस्मान्परिपालयेत्यर्थः ॥ १५ ॥

**नमस्ते अस्तु मीह्लुषे नमस्त उपसद्वने ।**
**अग्ने शुम्भस्व तन्वः सं मा रय्या सृज ॥ १६ ॥**

**भाष्यम्**—हेऽग्ने मीह्लुषे धनप्रापकाय सुखरूपाय वा ते तुभ्यं नमोऽस्तु । नमस्त उपसद्वन उपसद्वते हेऽग्नेऽस्माकं तन्वः शरीराणि शुम्भस्व भासयस्व प्रकाशय । तथा च मा मां रय्या धनादिना संसृज संगमय । धनमृक्सामयजूरूपं प्रापयेत्यर्थः ॥ १६ ॥

**मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः ।**
**ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेदः ॥१७॥**

**भाष्यम्**—हे जातवेदो मम देवदत्तादि नाम तव च वह्न्यादि नामेत्येवं ये नामनी

विपरिवृत्यान्योन्यवाससी विपर्ययेण वसानाविवेदानीमावां चरावः । अत ऊर्ध्वं हे जातवेदस्ते पूर्वोक्ते ना आवयोस्तन्वौ देवदत्तवह्न्यादिनामनी यथायथं त्वदीयं वह्न्यादि नाम तवैव मदीयं च देवदत्तादि नाम मदीयमेव यथा भवति तथा विभृवः परिदधावहै । एवं सति कुशलं जीवनं भवति । दक्षसे कुशलाय जीवसे जीवनायाऽऽयुर्वृद्धिधनादिसंपत्त्या प्रशस्तजीवनं च भवति ॥ १७ ॥

**अगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् ।**
**अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्व ॥ १८ ॥**

**भाष्यम्**—प्रत्यागत आहवनीये समिधमादध्यात् । हे आहवनीय यं त्वामगन्माऽऽगन्माऽऽगता वयम् । विश्ववेदसं सर्वतोधनम् । अस्मभ्यं षष्ठ्यर्थे चतुर्थ्यस्माकम् । वसुवित्तममतिशयेन धनस्य वेदितारम् । स त्वं हे भगवन्नग्ने सम्राट् । राजृ दीप्तौ । सम्यग्दीप्तिमन् । अभिद्युम्नं द्युम्नं द्योततेर्यशो वाऽन्नं वा " द्युम्नं द्योततेर्यशो वाऽन्नं वा " । इति निरुक्ते । अभिसहः । सह इति बलनाम निघण्टौ । आयच्छस्व । यमेरेतद्रूपम् । एतदुक्तं भवति—अस्मानभ्यन्नं यशो वा बलं वा गृह्णीष्वाऽऽगमयेत्यर्थः । यद्वा—अस्मान्द्युम्नमभि बलं वाऽभियच्छस्व स्थापयस्व समर्पय । आयच्छतिः स्थापनार्थः ॥ १८ ॥

**अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ।**
**अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व ॥ १९ ॥**

**भाष्यम्**—योऽयमग्निर्गृहपतिर्गार्हपत्याख्यः प्रजायाश्चातिशयेन धनस्य वेदिता तमेतं याचे । हेऽग्ने गृहपतिर्गृहस्य पतिः पालकः । शेषं पूर्ववत् ॥ १९ ॥

**अयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः ।**
**अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व ॥ २० ॥**

**भाष्यम्**—योऽयमग्निः पुरीष्यः पशव्यः " पशवो वै पुरीषम् " इति श्रुतिः । रयिमान्धनवान्पुष्टेर्वर्धयिता । तमेतं प्रत्यक्षीकृत्य याचे । हेऽग्ने पुरीष्य द्युम्नं बलं च प्रत्यस्मान्निधेहि ॥ २० ॥

**इमान्मे मित्रावरुणौ गृहानजूगुपतं युवम् ।**
**अविनष्टानविहृतान्पूषनानभ्यराक्षीदाऽस्माकं पुनरायनात् ॥ २१ ॥**

**भाष्यम्**—हे मित्रावरुणावादित्यवरुणौ युवं युवामजूगुपतं रक्षणं कृतवन्तः । तथा पूषा देवताऽविनष्टानविहृतानिमान्मे गृहानेनानेतानस्माकं पुनरायनात्पुनः, आ, आयनात्पुनरागमनपर्यन्तमभ्यराक्षीद्रक्षणमकरोत् । तस्मात्त्रयाणां युष्माकमुपकृतीः स्मरामि ॥ २१ ॥

**भूर्भुवः स्वः ॥ २२ ॥**

**भाष्यम्**—एतावत्काले कृतं वाग्यमनं लोकत्रयप्रापकं भवत्वित्यर्थः ॥ २२ ॥

**मनो ज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं सामिमं दधातु ।**
**या इष्टा उषसो या अनिष्टास्ताः संतनोमि हविषा घृतेन स्वाहा ॥ २३ ॥**

**भाष्यम्**—उद्वासनापराधपरिहाराय मनो माननीयमग्निर्ज्योतिर्हव्यमाज्यं सेवताम् । विच्छिन्नमिमं यज्ञं संदधातु । या उषसः प्रातःकालोपलक्षिता आहुतयः । उष इति होमकालोपलक्षणम् । तेन सायंतना अपि गृह्यन्ते । इष्टा इतरैर्यजमानैरनुष्ठिता मया त्वन्तरितास्ताः सर्वा आहुतीरनेन घृतेन हविषा संदधाम्यविच्छिन्नाः करोमि ॥ २३ ॥

**गृहा मा बिभीतोप वः स्वस्त्येवोऽस्मासु च प्रजायध्वम् ।**
**मा च वो गोपती रिषत् ॥ २४ ॥**

**भाष्यम्**—हे गृहा गृहस्थाः प्राणिनो मा बिभीत भीतिं मा कुरुत । वो युष्मानस्मासु च स्वस्त्येवोपप्रजायध्वम् । यथाकल्याणं वर्तन्ताम् । वो युष्मान् गोपतिर्यजमानो मा रिषत्मा हिंसीत ॥ २४ ॥

**गृहानहं सुमनसः प्रपद्येऽवीरघ्नो वीरवतः सुवीरान् ।**
**इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानि ॥ २५ ॥**

**भाष्यम्**—गृहानहं प्रपद्ये । कीदृशान्सुमनसो गृहेष्वत्रस्थिता मां दृष्ट्वा सुमनसो भवन्तीति गृहाः सुमनस इत्याह । अवीरघ्नो वीराः पुत्रा अतद्धननस्वभावोऽहं वीरवतः सुवीरान्शोभनरक्षकपुरुषयुक्तानिरामन्नं वहन्तो घृतमुक्षमाणा ब्राह्मणेषु भुञ्जानेषु यत्र घृतमुक्ष्यते तत इतः सिच्यते ते गृहा उच्यन्ते । घृतमुक्षमाणा इति द्वितीयार्थे प्रथमा । प्रपद्य च तेष्वेवंभूतेषु गृहेष्वहं सुमना भूत्वा संविशानि प्रविशामि ॥ २५ ॥

**शिवं शग्मं शंयोः शंयोः ॥ २६ ॥**

**भाष्यम्**—शिवं शग्मं द्वे अप्येते सुखस्य नाम्नी । अनेकप्रकारं सुखं भवत्विति शेषः । कस्य शंयोः । शमिति सुखनाम । " इदंयुरिदं कामयमानः " सुखकामस्य । शं कामयत इति शंयुः । शिवमैहिकं सुखम् । शग्ममामुष्मिकं सुखम् । शंयोरित्यभ्यासोऽत्यादरार्थः ॥ २६ ॥

**अभयं वोऽभयं मेऽस्तु ॥ २७ ॥**

**भाष्यम्**—हेऽग्नयो मत्तः सकाशाद्वो युष्माकमभयमस्तु । युष्मत्सकाशान्ममाप्यभयमस्त्विति ॥ २७ ॥

इति प्रवासोपस्थानमन्त्रभाष्यम् ।

## अथ पिण्डपितृयज्ञविधानम् ।

अथ दशमे पिण्डपितृयज्ञ उच्यते । तत्राऽऽदौ कालविशेषं विधत्ते—

**इन्द्रो वृत्रꣳ हत्वा । असुरान्पराभाव्य । सोऽमावास्यां प्रत्यागच्छत् । ते पितरः पूर्वेद्युरागच्छन् । पितॄन्यज्ञोऽगच्छत् । तं देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुः । तेऽब्रुवन्वरं वृणामहै । अथ वः पुनर्दास्यामः । अस्मभ्यमेव पूर्वेद्युः क्रियाता इति ( १ ) तमेभ्यः पुनरददुः । तस्मात्पितृभ्यः पूर्वेद्युः क्रियते । यत्पितृभ्यः पूर्वेद्युः करोति । पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते । इति ॥**

**सायणभाष्यम्**—इन्द्रः पुरा युद्धे वृत्रं हत्वा तदीयानसुरांश्च पराभूतान्कृत्वा पश्चादमावास्यायागदिनं प्रति स्वगृहे समागच्छत् । शुक्लप्रतिपदि ह्यमावास्यायागः क्रियते । ततः पूर्वेद्युः पितर आगतास्तैः पितृभिः सह यज्ञोऽपि गतः । तं पितृभिः सहावस्थितं यज्ञं देवाः स्वार्थमयाचन्त । पूर्वमस्मदीयो यज्ञ इदानीं भवत्समीपमागतः । पुनरस्मभ्यमेव यज्ञो दातव्य इति । ततः पितरस्तमदत्त्वा तद्दानार्थमुत्कोचमपेक्षितवन्तः । पूर्वेद्युर्दर्शदिनेऽस्मदर्थं कर्म कर्तव्यम् । ततः प्रतिपद्यनुष्ठेयं दर्शपूर्णमासाख्यं यज्ञं दास्याम इति प्रत्यजानन् । ततो देवैस्तथेत्यङ्गीकृते तं यज्ञं दत्तवन्तः । तस्मात्पित्रर्थं कर्म पूर्वेद्युः पूर्वदिने कुर्यात् । तथा कृते तेन मूल्येन यज्ञं पितृभ्यो निष्क्रीय यजमानस्तमनुष्ठातुं प्रवर्तते ॥

कालं विधाय होममन्त्रं विधत्ते—

**सोमाय पितृपीताय स्वधा नम इत्याह । पितुरेवाधि सोमपीथमवरुन्धे । न हि पिता प्रमीयमाण आहैष सोमपीथ इति । इन्द्रियं वै सोमपीथः । इन्द्रियमेव सोमपीथमवरुन्धे । तेनेन्द्रियेण द्वितीयां जायामभ्यश्नुते ( २ ) । इति ॥**

**सायणभाष्यम्**—पितृभ्यः पीतोऽमृतत्वेन परिणतो यः सोमस्तस्मै सोमायेदं स्वधा दत्तम् । नमस्कारोऽपि कृत इत्यमुं मन्त्रं होमकाले ब्रूयात् । अनेन होमेन स्वकीयस्य पितुरध्युपारि यत्सोमपानं पूर्वं वृत्तं तत्स्वयं प्राप्नोति । पितुः संबन्धि गृहक्षेत्रादिकं यथा होममन्तरेण प्राप्नोति तद्वत्तदीयं सोमपानमपि प्राप्नोतीति चेन्मैवम् । गृहादिवदसमर्पितत्वात् । प्रमीयमाणः पिता पुत्रमाहूयेदं गृहमिदं क्षेत्रं तवेति यथा ब्रूते तथा सोमपानमिदं तवेति न हस्ते समर्पयति । तस्माद्धोमेनैव सोमपानफलं संपादनीयम् । नचैतत्प्रयाससाध्यं सोमपानं मा भूदेवेति शङ्कनीयम् । सोमपानस्येन्द्रियवृद्धिरूपत्वेनावश्यं प्रापणीयत्वात् । पूर्वं स्वस्मिन्विद्यमानेनेन्द्रियेणैकां जायां भोक्तुं समर्थः । पितृप्रसादलब्धेन त्विन्द्रियेण द्वितीयामपि भोक्तुं समर्थो भवति ॥

एतद्वेदनं प्रशंसति—

**एतद्वै ब्राह्मणं पुरा वाजश्रवसा विदामक्रन् । तस्मात्ते द्वे द्वे जाये अभ्याक्षत । य एवं वेद । अभि द्वितीयां जायामश्नुते । इति ॥**

**सा० भाष्यम्**—वाजोऽन्नं तद्दाननिमित्तं श्रवः कीर्तिर्यस्य महर्षेरसौ वाजश्रवास्तस्य पुत्रा वाजश्रवसाः । ते च पुरा "सोमाय पितृपीताय" इति मन्त्रस्य व्याख्यानरूपमेतद्ब्राह्मणं विदितवन्तः । तस्माद्वेदनात्ते महर्षयः प्रत्येकं जायाद्वयमभिप्राप्तवन्तः । तस्मादन्योऽपि विदित्वा द्वितीयां जायां प्राप्नोति ॥

अथ द्वितीयहोममन्त्रं विधत्ते—

**अग्नये कव्यवाहनाय स्वधा नम इत्याह । य एव पितृणामग्निः । तं प्रीणाति । इति ॥**

**सा० भाष्यम्**—कव्यं पित्र्यं हविर्वहतीति कव्यवाहनः । तस्य च पितृसंबन्धोऽन्यत्राप्याम्नातः—

"त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाँ सह रक्षा असुराणाम्"

इति । तस्मादेतन्मन्त्रहोमेन तं पित्र्यमग्निं परितोषयति ॥

शाखान्तरगतेन—"यमायाङ्गिरस्वते पितृमते स्वधा नमः" इति मन्त्रेणैकामाहुतिमभिप्रेत्य त्रित्वं विदधाति—

**त्रिस्र आहुतीर्जुहोति । इति ॥**

**सा० भाष्यम्**-तथा च सूत्रकारेण स्पष्टमुक्तम्—'सोमाय पितृपीताय स्वधा नमः' इति प्रथमां दक्षिणाग्नौ जुहोति 'यमायाङ्गिरस्वते पितृमते स्वधा नमः' इति द्वितीयामग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् । इति ॥

यदुक्तं सूत्रकारेण—

सव्यं जान्वाच्याप्राचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान्पिण्डान्ददाति । इति ॥

तदिदं विधत्ते—

**त्रीन्निदधाति । इति ॥**

तदेतदाहुतित्रयं पिण्डत्रयं च मिलित्वा प्रशंसति—

**षट्संपद्यन्ते ( ३ ) । षड्वा ऋतवः । ऋतूनेव प्रीणाति । इति ॥**

यदुक्तं सूत्रकारेण—

" मेक्षणमुपस्तीर्य तेनावदायाभिघार्य " इति । तस्य मेक्षणस्याग्नौ प्रहरणं विधत्ते—

**तूष्णीं मेक्षणमादधाति । अस्ति वा हि षष्ठ ऋतुर्न वा । इति ॥**

**सा० भाष्यम्**—मेक्षणशब्देन प्रादेशमात्रा समिदुच्यते । हविरवदानसाधनं मेक्षणं मन्त्रमन्तरेणाग्नौ प्रक्षिपेत् । शास्त्रेषु षष्ठ ऋतुरस्तीत्येकः पक्षः । " षड्वा ऋतवः " इति श्रुतेः । नास्तीत्यपरः पक्षः । " पञ्चर्तवो हेमन्तशिशिरयोः समासेन " इति श्रुत्यन्तरात् । अतस्तूष्णीं समिदाधाने पक्षद्वयमप्यनुसृतं भवति । तत्र समिधः प्रक्षिप्तत्वादस्तित्वपक्षोऽङ्गीकृतः । मन्त्रराहित्यादभावपक्षोऽङ्गीकृतः ॥

आहुतित्रयं पिण्डत्रयं च प्रकारान्तरेण प्रशंसति—

**देवान्वै पितॄन्प्रीतान् । मनुष्याः पितरोऽनु प्रपिपते ।**
**तिस्र आहुतीर्जुहोति । त्रिर्निदधाति । षट्संपद्यन्ते ।**
**षड्वा ऋतवः । ( ४ ) ऋतवः खलु वै देवाः पितरः ।**
**ऋतूनेव देवान्पितॄन्प्रीणाति । तान्प्रीतान् । मनुष्याः**
**पितरोऽनु प्रपिपते । इति ॥**

**सा० भाष्यम्**—द्विविधा हि पितरो देवात्मका मनुष्यात्मकाश्च । पितृलोकस्वामिनो देवात्मकाः । मृताः सन्तो भोगात्तल्लोकं प्राप्ता मनुष्यात्मकाः । तत्र देवात्मकेषु पितृषु प्रीतेषु ताननु मनुष्यात्मकाः पितरः प्रपिपते प्रीता भवन्तीति युक्तम् । तदर्थमादौ तिस्र आहुतयः पश्चात्पिण्डत्रयम् । किं चोभयमेलनेन षट्संख्यया तत्संख्याका ऋतवः संपद्यन्ते । ऋत्वभिमानिनश्च देवाः पितरः । ततश्च संख्यामात्रेण देवपितृषु प्रीतेषु पश्चान्मनुष्यपितरः प्रीता भवन्ति ॥

विधत्ते—

**सकृदाच्छिन्नं बर्हिर्भवति । सकृदिव हि पितरः । इति ॥**

**सा० भाष्यम्**—पिण्डानामधस्तात्यद्बर्हिरास्तीर्यते तदेकप्रयत्नेनैव च्छेदनीयम् । न तु लवनकाले दात्रस्य पुनःपुनर्व्यापारः । एकेनैव दृढेन व्यापारेण यावदवाच्छिन्नं तावदेवाऽऽनेतव्यम् । यस्मात्पितरः सकृन्मरणेनैव पितृत्वं प्राप्नुवन्ति । न तु तत्प्राप्तये पुनःपुनर्म्रियन्ते ॥

पिण्डदानस्य त्रित्वं प्रशंसति—

**त्रिर्निदधाति । तृतीये वा इतो लोके पितरः । तानेव**
**प्रीणाति । इति ॥**

**सा० भाष्यम्**—इतो भूलोकादारभ्यान्तरिक्षलोकमतिक्रम्य यस्तृतीयो लोकस्तत्र पितरो वर्तन्ते । अतस्त्रित्वेन तान्परितोषयति ॥

विधत्ते—

**पराङ्ग वर्तते ( ५ ) ह्रीका हि पितरः । इति ॥**

**सा० भाष्यम्**—दक्षिणाभिमुखः पिण्डं दत्त्वा पिण्डनिरीक्षणं परित्यज्य पराङ्मुखो भवेत् । पितॄणां लज्जाशीलत्वात् । लोकेऽपि हि भुञ्जानाः प्रभवो नान्यैर्वीक्ष्यन्ते ॥

विधत्ते—

**ओष्मणो व्यावृत उपास्ते । उष्मभागा हि पितरः । इति ॥**

**सा० भाष्यम्**—औष्ण्यवशात्पिण्डेषु योऽयमूष्मा निर्गच्छति तस्याऽऽ व्यावृतो यावदुपरमस्तदुपरमपर्यन्तं तथैव स्थित्वा सेवेत । पितॄणामूष्मभागित्वेन तच्छान्तिपर्यन्तं तद्भोजनकालत्वात् ॥

अथ विचारपूर्वकं पिण्डशेषस्य पात्रगतस्याऽऽघ्राणं विधत्ते —

**ब्रह्मवादिनो वदन्ति । प्राश्यां ३ न प्राश्या ३ मिति ।**
**यत्प्राश्नीयात् । जन्यमन्नमद्यात् । प्रमायुकः स्यात् ।**
**यन्न प्राश्नीयात् । अहविः स्यात् ( ६ ) पितृभ्य**
**आवृश्च्येत । अवघ्रेयमेव । तन्नेव प्राशितं नेवाप्राशितम् । इति ॥**

**सा० भाष्यम्**—विचारार्था प्लुतिः । प्राशनपक्षे बीजभक्षणवददनीयस्याभावात्क्षुधितो यजमानो म्रियेत । अप्राशनपक्षे तु सर्वत्र हविःशेषस्य भक्षणदर्शनादिदं हविरेव न स्यात् । अतोऽयं पितृभ्योऽवच्छिद्येत । अतो दोषद्वयपरिहाराय पात्रगतमन्नमवजिघ्रेदेव । तदवघ्रातं प्राशितमिव न भवति निगरणाभावात् । अप्राशितमिव न भवति तदीयगन्धस्यान्तः प्रवेशात् ॥

यदुक्तं सूत्रकारेण—"वाससो दशां छित्वा निदधाति" इति । तदेतद्विधत्ते—

**वीरं वा वै पितरः प्रयन्तो हरन्ति । वीरं वा ददति । दशां**
**छिनत्ति । हरणभागा हि पितरः । पितॄनेव निरवदयते । इति ॥**

**सा० भाष्यम्**—पिण्डरूपमन्नं भुक्त्वा यदा पितरः स्वस्थाने प्रयान्ति तदानीमस्य वीरं पुत्रं विद्यमानमपहरन्ति वाऽविद्यमानं ददति वा । पक्षद्वयमपि संभाव्यते । वैकल्ये पुत्रं मारयन्ति । साकल्ये पुत्रं प्रयच्छन्ति । अत्र वैकल्यस्य दुष्परिहरत्वात्पुत्रप्रत्याम्ना-

यत्वेन वस्त्राग्रमीपत्सूत्रं छित्त्वा पिण्डेषु निदध्यात् । यस्मादपहरणमेव पितरो भजन्ते तस्मात्पितृन्निःशेषभागदानेन विसर्जयति ॥

तत्रैव कंचिद्विशेषं विधत्ते—

**उत्तर आयुषि लोम च्छिन्दीत । पितॄणाꣳ ह्येतर्हि नेदीयः । (७) इति ॥**

**सा० भाष्यम्**—पञ्चाशत्संवत्सरपरिमितं पूर्वमायुरवशिष्टं तूत्तरम् । तस्मिन्वयसि वस्त्रदशा न च्छेत्तव्या । किंतु स्वकीयं लोम च्छित्त्वा तत्र निदध्यात् । यस्मादयमासन्नमरणत्वात्पितॄणामपि समीपवर्ती तस्मात्तस्मिन्वयस्येतदुचितम् ॥

विधत्ते—

**नमस्करोति । नमस्कारो हि पितॄणाम् । इति ॥**

**सा० भाष्यम्**—अत्यन्तं प्रिय इति शेषः ॥

तत्र मन्त्रं विनियुङ्क्ते—

**नमो वः पितरो रसाय । नमो वः पितरः शुष्माय । नमो वः पितरो जीवाय । नमो वः पितरः स्वधायै । नमो वः पितरो मन्यवे । नमो वः पितरो घोराय । पितरो नमो वः । य एतस्मिँल्लोके स्थ ( ८ ) । युष्माꣳस्तेऽनु । येऽस्मिँल्लोके । मां तेऽनु । एतस्मिँल्लोके स्थ । यूयं तेषां वसिष्ठा भूयास्त । येऽस्मिँल्लोके । अहं तेषां वसिष्ठो भूयासमित्याह । वसिष्ठः समानानां भवति । य एवं विद्वान्पितृभ्यः करोति । इति ॥**

**सा० भाष्यम्**—हे पितरो वो युष्माकं यो रसो युष्माभिर्भुज्यमानः क्षीरादिस्तस्मै नमोऽस्तु । एवं सर्वत्र योज्यम् । शुष्मशब्दो बलवाची । जीवो देहाध्यक्षः । स्वधा तदीया स्त्री । पितरो हि स्वधायां प्रीतिं कुर्वन्ति । मन्युः कोपः । घोरो मारणादिव्यापारः । हे पितरो यूयमेतस्मिँल्लोके स्थितास्तेभ्यो युष्मभ्यं नमः । ये तु युष्मत्तोऽन्ये परकीयपितरोऽस्मिँल्लोके वर्तन्ते ते सर्वे मामनुवर्तन्ताम् । ये यूयं परकीयैः पितृभिः सहास्मिँल्लोके स्थितास्ते यूयं तेषां परकीयपितॄणां वसिष्ठा अतिशयेन निवासहेतवो भूयास्त । ये तु मनुष्या अस्मिँल्लोके वर्तन्ते तेषां सर्वेषामहं युष्मत्प्रसादादतिशयेन निवासहेतुर्भूयासम् । इत्येतं मन्त्रं नमस्कुर्वन्पठेत् । यः पुमानेवं नमस्कारमन्त्रं विद्वान्पित्रर्थं पिण्डदानं करोति स एव समानानां मनुष्याणामतिशयेन निवासहेतुर्भवति ॥

पिण्डपितृयज्ञं प्रशंसति—

**एष वै मनुष्याणां यज्ञः ( ८ ) । देवानां वा इतरे यज्ञाः । तेन वा एतत्पितृलोके चरति । इति ॥**

**सा० भाष्यम्**—द्विविधानां पितॄणां मध्ये ये मनुष्याः पितरस्तेषामेव पिण्डपितृयज्ञः । ये तु देवास्तेषां दर्शपूर्णमासादिका इतरे यज्ञाः । तस्मादेतेन पिण्डपितृयज्ञेनैव पुरुषः पितृलोके चरति ॥

अथ " प्रजापते न त्वदेतानि " इति मन्त्रेण गार्हपत्यदेशं प्रत्यागमनं विधत्ते—

**यः पितृभ्यः करोति । स ईश्वरः प्रमेतोः । प्राजापत्ययर्चा पुनरैति । यज्ञो वै प्रजापतिः । यज्ञेनैव सह पुनरैति । न प्रमायुको भवति । इति ॥**

**सा० भाष्यम्**—यः पुमान्पित्रर्थमुक्तं कर्म करोति स पितृप्रियत्वात्सहसा मर्तुं समर्थो भवति । तत्परिहाराय प्राजापत्यमन्त्रेण गार्हपत्यदेशं पुनरागच्छेत् । प्रजापतेर्यज्ञस्रष्टृत्वेन यज्ञरूपत्वाद्यज्ञेनैव सह पुनरागतो भवति । अतो न म्रियते ॥

एतदेव समन्त्रकं पुनरागमनं प्रशंसति—

**पितृलोके वा एतद्यजमानश्चरति । यत्पितृभ्यः करोति । स ईश्वर आर्तिमार्तोः । प्रजापतिस्त्वा वैनं तत उन्नेतुमर्हतीत्याहुः । यत्प्राजापत्ययर्चा पुनरैति । प्रजापतिरेवैनं तत उन्नयति । नाऽऽर्तिमार्च्छति यजमानः । ( १० ) । इति ॥**

**सा० भाष्यम्**—पितृभ्यः करोतीति यदस्त्येतेन यजमानः पितृलोक एव संचरति । अतः स यजमानो मनुष्यलोके निस्पृहत्वादत्र पीडां प्राप्तुं प्रभवति । तमेनं प्रजापतिरेव तत आर्तेरुद्धर्तुमर्हतीत्येवमभिज्ञा आहुः । अतः प्राजापत्यमन्त्रेणाऽऽगच्छन्तं प्रजापतिरुद्धरति । सोऽप्यार्तिं न प्राप्नोति ॥ ( तै० ब्रा० १ । ३ । १० ) । इति ॥

इति पिण्डपितृयज्ञविधानम् ।

---

## अथ पिण्डपितृयज्ञसूत्रम् ।

अमावास्यायामपराह्णे पिण्डपितृयज्ञो दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेद्ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्वस्मादिति सर्वकर्माणि तां दिशमुपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक्प्रत्यगुदग्वैकैकशः पात्राणि सादयेच्चरुस्थालीशूर्पस्फयोलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्ममेक्षणकमण्डलून्दक्षिणतोऽग्निष्टमारुह्य चरुस्थालीं व्रीहीणां पूर्णां निमृजेत्परिमन्त्रानिदध्यात्कृष्णाजिन उलूखलं कृत्वेतरान्पत्न्यवहन्यादविवेचमवहतान्सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयेदर्वाग्गतिप्रणीतात्स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्याऽऽसादयेदभिघार्य स्थालीपाकमाज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणत आञ्जनाभ्यञ्जनकशिपूपबर्हणानि प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनाऽऽदाया-

वदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाऽग्निं पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेऽसौ ये च त्वामत्रान्विति तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत्तदर्थत्वात्सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वादपि जीवान्त आ त्रिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारितोपायविशेषो जीवमृतानां न परेभ्योऽनधिकारान्न प्रत्यक्षं न जीवेभ्यो निपृणीयान्न जीवान्तर्हितेभ्यो जुहुयाज्जीवेभ्यः सर्वहुतं सर्वजीविनो नामान्याविद्वांस्ततपितामहप्रपितामहेति ॥ ६ ॥

निपृतानुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्यामीमदन्त पितरो यथाभागमावृषायिषतेति चरोः प्राणभक्षं भक्षयेन्नित्यं निनयनमसावभ्यङ्क्ष्वासावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वं लोमैतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वमित्यथैनानुपतिष्ठेत नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवावो जीवन्त इह सन्तः स्याम । मनोऽन्वाहुवामह इति च तिसृभिरथैनान्प्रवाहयेत्परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छतेत्यग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसं वीरं मे दत्त पितर इति पिण्डानां मध्यमं पत्नीं प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथाऽयमरपा असदित्यप्स्वितरावतिप्रणीते वा यस्य वा गन्तुरन्नकाम्याभावः स प्राश्नीयान्महारोगेण वाऽभितप्तः प्राश्नीयादन्यतरां गतिं गच्छत्येवमनाहिताग्निर्निल्ये श्रपयित्वाऽतिप्रणीय जुहुयाद्द्वित्पात्राणामुत्सर्गस्तूर्णं द्वितीयमुद्रिक्ते ॥ ७ ॥

## इति पिण्डपितृयज्ञसूत्रम् ।

## अथ भाष्यवृत्तिसमेतं पिण्डपितृयज्ञसूत्रम् ।

**अमावास्यायामपराह्णे पिण्डपितृयज्ञः ॥ १ ॥**

**दे० भाष्यम्**—अमावास्यायां वा यजमानाधिकारादिहयज्ञशब्देऽपि प्रयोगसंज्ञा विधीयते । याजमानत्वात् । अथवाऽग्निहोत्रादनन्तरं दर्शपूर्णमासयोरिज्याकालो भवति तौ व्याख्यातौ तयोरिज्याकाले पितृयज्ञो विधीयते तदङ्गत्वादमावास्यायां तिथावह्नश्चतुर्थभागं दर्शयति । तस्माद्दर्शाङ्गं भवति । अङ्गत्वाद्दृष्टचन्द्रायामपि क्रियते पितृयज्ञो द्यावापृथिव्यावयने कुण्डपायिनामयने च क्रियते । एवं बौधायनोऽपि प्रवसतोऽन्येषां तुल्याङ्गं स्वकालविधानाच्चन्द्रादर्शने दृश्यमाने तु नान्येषां क्रियते । अक्रियमाणेऽपि दर्शः क्रियते कुण्डपायिनामयनादिषु च न क्रियते ॥ १ ॥

**वृत्तिः**—अमावास्याशब्दः प्रतिपत्पञ्चदश्योः संधिवचनोऽप्यत्रापराह्णशब्दसमन्वयात्तद्व्यहोरात्रे वर्तते । तस्यापराह्णेऽह्नश्चतुर्थे भागे पिण्डपितृयज्ञः कर्तव्य औपवसथ्येऽहनि यजनीये चेत्स्वार्थ एव दक्षिणाग्निः प्रणीयते । यदा पुनरहोरात्रसंधौ तिथिसंधिः स्यात्तदौपवसथ्य एवाहनि क्रियते ॥ १ ॥

**दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेद्ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परा पुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्वस्मादिति ॥ २ ॥**

**दे० भाष्यम्**–दक्षिणाग्नेर्दर्शार्थे विहारः क्रियते । एवं विहार एवं चोदना दक्षिणाग्नेस्तस्माद्दक्षिणाग्नेरेकोल्मुकग्रहणाद्विशाखं न भवति प्राग्दक्षिणस्यां दिशि प्रणयेद्ये रूपाणीत्यनेन मन्त्रेण । कर्मादावेवातिप्रणयनोपदेशाददतिप्रणीत इह प्रधानः प्रधानत्वादविशेषवचनाच्चातिप्रणीते होममन्येषां हुत्वाऽतिप्रणयनम् । नचोपसंधानं न च परिस्तरणं पश्चाद्दक्षिणाग्नेः स्थालीपाकस्य सदनाद्येषां दक्षिणाग्नौ होमस्तेषां हुत्वाऽतिप्रणयनं चोपसंधानं न च परिस्तरणम् ॥ २ ॥

**वृत्तिः**—एकोल्मुकमेकतः प्रदीप्तमुल्मुकं प्राग्दक्षिणा प्राग्दक्षिणस्यां दिशीत्यर्थः । दक्षिणाग्नेः सकाशादेकोल्मुकं गृहीत्वा तस्मादेव प्राग्दक्षिणस्यां दिशि प्रणयेत् 'ये रूपाणि' इत्यनेन मन्त्रेण ।. २ ॥

**सर्वकर्माणि तां दिशम् ॥ ३ ॥**

**दे० भाष्यम्**—आसादनहोमनिपरणोपस्थानादीनि तां दिशं प्राग्दक्षिणां दिशमभि कर्तव्यानि नित्या इत्येतस्यापवादः । सर्वग्रहणाद्गार्हपत्योपस्थानस्यापि प्राप्तिः ॥ ३ ॥

**वृत्तिः**—अविशिष्टदिक्कानि सर्वाणि कर्माणि तामेव प्राग्दक्षिणां दिशमभिमुखानि कर्तव्यानि ॥ ३ ॥

**उपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक्प्रत्यगुदग्वैकैकशः पात्राणि सादयेच्चरुस्थालिशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्मम्रेक्षण-कमण्डलून् ॥ ४ ॥**

**दे० भाष्यम्**—उपसमाधाय सुसमिद्धं कृत्वोभौ परिस्तीर्योभावग्नी दक्षिणाग्न्यतिप्रणीतौ परिस्तरणं कृत्वा परि समन्ततः स्तरणं तद्गृह्ये वक्ष्यति । अतिप्रणीताधिकारादुभावित्युच्यते तत्र दक्षिणाग्न्यतिप्रणीतयोः परिस्तरणम् । विहाराङ्गानुक्रमादतिप्रणीतस्य वा प्रथमं प्रधानत्वात्प्रधाने होमो भवति दक्षिणाग्नौ वा स्माद्दाक्षिणाग्नेः प्रागुदीच्यां दिश्येकैकमेकैकशः पात्राणि यानि वक्ष्यामस्तानि सादयेत्स्थापयेत्कानि चरुस्थालीत्येवमादीनि । उभयोरधिकाराद्दक्षिणाग्नेरित्याह । द्वन्द्वं पात्राणि प्रयुनक्तीति प्रकृतौ तस्मादेकैकमित्याह । एकैकशोवचनात्प्रोक्षणादिपात्रसंस्कारः प्राप्तः पात्राणि वक्ष्यन्ते चरोः स्थाली चरुग्रहणादाज्यस्थाल्याः प्रतिग्रहः शूर्पं स्फ्योवहननार्थमुलूखलं मुसलं च स्रुवश्च ध्रुवा च कृष्णाजिनं च समूलं बर्हिः सकृदाच्छिन्नं भवति सकृच्छिन्न इध्मः पञ्चदशो भवति आघारसमिधावनूयाजकौ चार्थाल्लुप्यन्ते । मेक्षणं होमार्थं कमण्डलुरुदकार्थम् ॥ ४ ॥

**वृत्तिः**—उभयोरुपसमाधानं परिस्तरणं च कर्तव्यं मध्यगतस्योभाविति शब्दस्य विशेषसंबन्धे कारणाभावात् । पात्राणीति चरुस्थाल्यादीन्युच्यन्ते । तेन शब्देन संव्यवहारार्थं चरुश्रपणार्था स्थाली चरुस्थाली । चरुस्थालीध्रुवाशब्दयोश्छान्दसं ह्रस्वत्वम् । एकेन प्रयत्नेन छिन्नाः कुशाः सकृदाच्छिन्नाः ॥ ४ ॥

**दक्षिणतोऽग्निष्ठमारुह्य चरुस्थालीं व्रीहीणां पूर्णां निमृजेत् ॥ ५ ॥**

**दे० भाष्यम्**—दक्षिणतो दक्षिणाग्न्यधिकारस्तस्माद्दक्षिणाग्नेर्दक्षिणतो दक्षिणस्यां दिश्यग्निष्ठं शकटं प्रागेव स्थापितं भवति तमारुह्य चरुस्थालीं व्रीहीणामेव न यवानां पूर्णां सतीं निमृजेत्पाणिना निमार्ष्टि शिष्टानपनयति ॥ ५ ॥

**वृत्तिः**—निमृज्यादिति प्राप्ते निमृजेदिति छान्दसः । अग्निसमीपे तिष्ठतीत्यग्निष्ठं शकटम् । प्रयाणकाले वाऽग्नयो यत्र तिष्ठन्ति तदग्निष्ठम् । दक्षिणत आरुह्य तत्रैव शूर्पे स्थालीं निधाय व्रीहिभिरापूरयेत्[1] । तां पूर्णां निमृज्याद्यथोपरितनाद्बिलदेशाच्छूर्पोपरि पतन्ति ॥ ५ ॥

---

[1] अभावः ।

परिसन्नान्निदध्यात् ॥ ६ ॥

दे० भाष्यम्—परिसन्नान्निदध्याद्ये परिशीर्णास्ताञ्शकटे निदध्यात् । एवमनुच्यमाने परिसन्नानामेवावहननादिसंस्कारः प्राप्नोति तूष्णीं निमृजेत् ॥ ६ ॥

वृत्तिः—स्थाल्यास्यदेशाच्छूर्पोपरि ये पतन्ति तान्व्रीहीन्परिसन्नाञ्शकटे निदध्यात् ॥ ६ ॥

कृष्णाजिन उलूखलं कृत्वेतरान्पत्न्यवहन्यादविवेचम् ॥ ७ ॥

दे० भाष्यम्—दक्षिणत इत्यधिकारेऽग्नेर्दक्षिणतः प्रत्यगुदग्ग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्य तस्मिन्नुलूखलं कृत्वा स्थापयित्वेतरान्स्थाल्यन्तर्गतान्व्रीहीन्पत्न्यवहन्यान्निस्तुषान्कुर्यात्परिसन्नाधिकारादितरानिति । इतरग्रहणं कर्तुरधिकारात्पत्नीग्रहणमविवेचमविविच्याविविच्येमे व्रीहय इमे तण्डुला इति विवेकमकृत्वाऽवहननम् ॥ ७ ॥

वृत्तिः—कृत्वा निधायेत्यर्थः । इतरान्स्थाल्यन्तरगतानित्यर्थः । अविवेचम् । अविविच्याविविच्येत्यर्थः ॥ ७ ॥

अवहतान्सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयेत् ॥ ८ ॥

दे० भाष्यम्—पुनरवहननग्रहणात्फलीकरणप्रतिषेधस्तस्मात्तथाऽवहन्यते यथाऽमी कृता एव भवन्ति सकृत्प्रक्षालनमित्युक्तमन्येषां व्रीहिमिश्रानेव सकृत्प्रक्षाल्य ततः प्रक्षालनमन्यत्र दक्षिणाग्नौ स्थालीपाकं श्रपयेद्दक्षिणाग्न्यधिकारे पुनर्दक्षिणाग्निग्रहणं नियमार्थं तेन दक्षिणाग्नौ होमो नातिप्रणीते ॥ ८ ॥

वृत्तिः—अवहतेष्ववहतवचनं फलीकरणनिवृत्त्यर्थम् । दक्षिणाग्न्यधिकारेऽपि दक्षिणाग्नौ श्रपयेदिति श्रपणवचनं वचनादेव गार्हपत्य एव श्रपणमितिज्ञापनार्थम् ॥ ८ ॥

अर्वागतिप्रणीतात्स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति॥९॥

दे० भाष्यम्—अर्वागतिप्रणीतादतिप्रणीतादग्नेरर्वाग्देशे स्फ्येन वज्रेण लेखामुल्लिखेदपहता इत्येतेन मन्त्रेण दक्षिणाग्न्यधिकारादतिप्रणीतग्रहणम् ॥ ९ ॥

वृत्तिः—दक्षिणाग्न्यतिप्रणीतयोरन्तराल उल्लिखेदित्यर्थः ॥ ९ ॥

तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्याऽऽसादयेदभिघार्य स्थालीपाकमाज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा ॥ १० ॥

दे० भाष्यम्—तामभ्युक्ष्य तां लेखामुदकेनाभ्युक्ष्यानन्तरं सकृदाच्छिन्नैस्तृणैरवस्तीर्याऽऽसनं कृत्वाऽनन्तरं वेद्यामासादयेत्तमभिघार्य स्थालीपाकमासादयेल्लेखाधिकारे पुनस्तामित्याह तां नाम्नीति वीप्सार्थं यत्र लेखाद्वयं भवति पितृभ्यो दद्यान्[illegible]ऽऽज्यं

सर्पिर्घृतं तदाज्यसंज्ञं भवति तच्चोत्पूतं भवति नवनीतस्योत्पवनं कर्तव्यमेकपवित्रेण सकृदुत्पवनं तूष्णीकं मन्त्रोपदेशाभावात् । गृह्योपदिष्टो विधिरिह न प्राप्नोति यदि प्राप्नुयादवदानसंपदा जुहुयादिति न वक्तव्यं ध्रुवायामाज्यं कृत्वा तदाज्यमन्यस्मिन्पात्रे संस्कृत्योत्पूयानुत्पूय वा ततो ध्रुवायामाज्यं कृत्वा ध्रुवामासादयेत्पुनराज्यग्रहणाद्ध्रौवमपि वाऽऽज्याभिघारणप्रत्यभिघारणार्थं च भवति कृत्वेति साकाङ्क्षत्वाद्वाक्यस्याऽऽसादयेदित्यध्याहारो भवति ॥ १० ॥

**वृत्तिः**—आज्यं सर्पिरित्यादिर्ध्रुवायामाज्यं कृत्वा दक्षिणत इत्येवमन्तः पदसमूह आसादयेदभिघार्येत्यस्मात्पुरस्तादर्थतो द्रष्टव्यः । तेनायमर्थः—तां लेखामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्याऽऽज्यं सर्पिर्गृहीत्वा ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाऽऽज्येन स्थालीपाकमभिघार्य दक्षिणाग्नेः पश्चादासादयेत् । यदि नवनीतमाज्यकार्यार्थं स्यात्तदाऽस्य विलापनमात्रं कृत्वाऽन्यस्मिन्पात्र आनीय पवित्राभ्यां तूष्णीमुत्पूय ततो ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाभिघार्येत्यादि समानम् । द्वितीयाज्यग्रहणस्येदं प्रयोजनं पात्रान्तरस्थमुत्पूय पश्चाद्ध्रुवायां ग्रहणमित्येवमर्थम् । पूर्वमाज्यग्रहणं कार्यलक्षणार्थम् । सर्पिः पक्वं नवनीतमपक्वम् ॥ १० ॥

**दक्षिणत आञ्जनाभ्यञ्जनकशिपूपबर्हणानि ॥ ११ ॥**

**दे० भाष्यम्**—दक्षिणतो लेखाया दक्षिणतो दक्षिणस्यां दिश्यञ्जनादीनि स्थापयेदञ्जनं त्रैककुदं श्रौताञ्जनं वाऽन्यत्र दक्षिणादिषु प्रयुक्तत्वाल्लौकिकं वा भवति । अविशेषवचनादभ्यञ्जनं जीर्णं घृतं भवति । ' आयुतं पितॄणाम् ' इति श्रुतिः । उपबर्हणं शिरोपधानं भवति । एतानि दक्षिणत उपकल्पयेत् ॥ ११ ॥

**वृत्तिः**—दक्षिणत इत्यत्रापि संबध्यते विशेषाग्रहणादपेक्षितत्वाच्च । अञ्जनादीनि च दक्षिणतो दक्षिणाग्नेर्निदध्यात् । पूर्वसूत्रे यथाक्रमेण सूत्रप्रणयनं दक्षिणत इत्यस्योभयार्थत्वायैव ॥ ११ ॥

**प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनाऽऽदायावदानसंपदा जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति ॥ १२ ॥**

**दे० भाष्यम्**—प्राचीनावीती प्राचीनावीतमाचारशास्त्रसिद्धं प्राचीनावीती भूत्वा । इध्म इन्धनसिद्ध्यर्थमुपसन्नः सव्यं जान्वाच्य समस्तं तूष्णीमाधाय प्रक्षिप्य मेक्षणेन चरोरादायावदानं गृहीत्वाऽवदानसंपदा मध्यात्पूर्वार्धाच्च हविषोऽवद्यति प्रत्यभिघार्य हविरवत्तं चैषोऽवदानधर्म इति तयाऽवदानसंपदाऽऽदाय जुहुयादेवंभूत इति स्रुवेणाऽऽदाने प्राप्ते मेक्षणेनाऽऽदायेत्युच्यते तत्राभिघारणप्रत्यभिघारणे स्रुवेण कर्तव्ये प्रतिषेधाद्गृह्यविहितो विधिरिह न प्राप्नोति तस्मादवदानसंपद्विधीयते सोमाय पितृमत इत्येताभ्यां द्वे

आहुती भवतः स्वाहाकारान्त इति प्राप्ते स्वधा नम इति विधीयते पित्र्यायामप्येक एव वषट्कारः स्वाहाकारः स्वयमपवाद उत्तरत्र स्वाहाकारेण वा जुहुयात् ॥ १२ ॥

**वृत्तिः**—इध्मः पञ्चदशसंख्याकः । मेक्षणेनाऽऽदाय तेनैव जुहुयादवदानसंपदा । अवदानसंपन्नामोपस्तरणं द्विरवदानं प्रत्यभिघारणं च । तयेत्थंभूतं जुहुयात् । नात्र स्वाहाकारः स्वधा नमःशब्दस्य प्रदानार्थत्वात् ॥ १२ ॥

**स्वाहाकारेण वाऽग्निं पूर्वं यज्ञोपवीती ॥ १३ ॥**

**दे० भाष्यम्**—यदा स्वाहाकारेण तदाऽग्निं पूर्वं जुहुयात् । अनन्तरं सोममिध्नोपसमाधानादि यज्ञोपवीती वा भवति । अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति विकल्पोऽयं व्यवस्थितोऽथाग्नौ जुहोति यथोक्तं पुरस्तादिति प्राप्त आभ्युदयिके यज्ञोपवीती भवति। जुहुयाज्जीवेभ्य इत्येतस्मिन्पक्षे स्वाहाकारेण होमो भवति यज्ञोपवीती वा ॥ १३ ॥

**वृत्तिः**—स्वधा नमःशब्दस्य स्थाने स्वाहाशब्दं वा कृत्वा जुहुयात् । अस्मिन्पक्षे मन्त्रविपर्ययो व्यत्यासो यज्ञोपवीतत्वं च भवति । अग्निं पूर्वमिति । 'अग्नये कव्यवाहनाय' इत्येतं मन्त्रं पूर्वं कुर्यादित्यर्थः ॥ १३ ॥

**मेक्षणमनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति ॥ १४ ॥**

**दे० भाष्यम्**—मेक्षणानुप्रहरणं तदनु मेक्षणमग्नौ होमान्त एव प्रहृत्य प्रक्षिप्यानन्तरं यज्ञोपवीतपक्षेऽपि प्राचीनावीती भूत्वा लेखां त्रिषु स्थानेषूदकेनोप समीपे निनयेत्सिञ्चेच्छुन्धन्तामित्येतैस्त्रिभिर्मन्त्रैर्मेक्षणमनुप्रहृत्यैतस्मात्संबन्धवचनाद्धोमस्य पिण्डदानस्य यजमान एव कर्ता भवति । अन्येषां तु होमान्तमध्वर्युः कुर्यादित्युक्तं नामान्यविद्वांस्ततपितामहप्रपितामहेति वचनाद्यजमानः कर्ता भवति ॥ १४ ॥

**वृत्तिः**—प्राचीनावीतीग्रहणं स्वाहाकारपक्षेऽपि मेक्षणानुप्रहरणोत्तरकालं प्राचीनावीतित्वप्रापणार्थम् । उभयस्मिन्पक्षेऽपि मेक्षणमग्नावनुप्रहर्तव्यमेव । त्रिभिर्मन्त्रैस्त्रिर्निनयेत्पिण्डस्थानेषु ॥ १४ ॥

**तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेऽसौ ये च त्वामत्रान्विति ॥ १५ ॥**

**दे० भाष्यम्**—पिण्डदानमेतस्यां लेखायां चरोरूष्माणं गृहीत्वा त्रिः पिण्डान्निपृणीयान्निक्षिपेत्पराचीनपाणिर्यस्य सोऽयं पराचीनपाणिः । पराचीनपाणिर्भूत्वाऽन्तरेणाङ्गुष्ठमङ्गुलीश्च पितृतीर्थं तेन निपृणीयात्पित्रे प्रथमं पिण्डं निपृणीयात्पितामहाय द्वितीयं प्रपितामहाय तृतीयमेतत्त इत्यनेन मन्त्रेणासावित्यष्टम्या विभक्त्या नाम गृह्णीयादेतत्ते भवत्रात ये

च त्वामत्रान्विति । एतत्ते भवन्नात इत्येव गृह्णाति । यदि द्विपिता स्यात्तदैकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेदित्युक्तमन्येषामस्माकमपि श्राद्धे वक्ष्यति ॥ १५ ॥

**वृत्तिः**—अधिकृतायां लेखायां लेखासंप्रत्ययार्थं तस्यांग्रहणं क्रियते नाधिकाराल्लेखा-संबन्धोऽस्तीतिज्ञापनार्थम् । तेन हविरासादनमग्नेः पश्चादिति साधितं भवति तथैवोक्तं च । निपृणीयाद्दद्यादित्यर्थः । निपरणं पित्र्येणैव तीर्थेन । पाणेरुत्तानत्वमजहदेव पित्र्येण तीर्थेन यदा कुर्यात्तदा पराचीनपाणिर्भवति । असावित्यस्य स्थाने संबुद्ध्यन्तानि पित्रादीनां नामानि गृह्णीयात् ॥ १५ ॥

एवमविशेषेण पिण्डदानमुक्तम् । तत्राऽऽचार्या विप्रतिपद्यन्ते—

**तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत्तदर्थत्वात् ॥ १६ ॥**

**दे० भाष्यम्**—तस्मै तस्मा इत्याचार्यपक्ष इयं विचारणा । तस्मै तस्मै निपृणीयादेषां त्रयाणां प्रेताः स्युर्भवेयुरिति गाणगारिराचार्यो मन्यते प्रत्यक्षमितरानर्चयेत् । प्रेतेभ्यो निपृते जीवेभ्यः प्रत्यक्षमर्चयेत्पूजयेद्गन्धमाल्यधूपदीपाच्छादनभोजनैः । कस्मादेतत्तदर्थत्वा-त्क्रियायाः । पित्रर्थे हि सा पितृप्रीणनार्थत्वात् । न च जीवा निपरणेन प्रत्यक्षार्चनेन तु प्रीयन्ते तस्मात्तत्प्रीणनार्थत्वात् ॥ १६ ॥

जीवानां च प्रेतानां च निपरणमुक्तं तत्प्रतिषेधति तौल्वलिराचार्यः—

**प्रेतेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात् ।**
**अपि जीवान्त आ त्रिभ्यः पितृभ्य एव निपृणीयात् ॥ १७ ॥**

**दे० भाष्यम्**—प्रेतेभ्य एव निपृणीयान्न जीवेभ्य इत्येव तौल्वलिराचार्यो मन्यते । कस्माद्धेतोः क्रियागुणत्वात्क्रियायाः कर्मणि गुणभूताः प्रेता न जीवा गुणभूता निप-रणेन गुणभूताः प्रीयन्ते । तस्मात्क्रियागुणत्वात्प्रेतेभ्य एव निपरणम् । अपिशब्दः समुच्चयार्थः । त्रयोऽधिकृता अपि जीवो न म्रियते तस्माज्जीवान्तात्प्रभृति त्रिभ्य एतेभ्यः पितृभ्य एव निपृणीयादिति तौल्वलिरिति वर्तते । त्रिग्रहणमधिकृतेभ्योऽपि भवति त्रिभ्यो दद्यादिति श्रुतिः सप्तपुरुषाणामितो विज्ञायते ॥ १७ ॥

**सर्वेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारिता ॥ १८ ॥**

**दे० भाष्यम्**—जीवानां प्रेतानां च निपृणीयादिति गौतमो मन्यते सर्वेभ्य एव प्रेतेभ्यो जीवेभ्यो निपृणीयादिति गौतम आचार्यो मन्यते कस्माद्धेतोः क्रिया ह्यर्थकारिता हीति हेत्वर्थे । क्रिया हि यस्मादर्थकारिता ॥ १८ ॥

तस्मै तस्मा इत्यारभ्यार्थकारितेत्यन्तानि त्रीणि सूत्राणि भाष्यकारोऽबीभषत् । तानि प्रादर्शयम् । वृत्तिकारस्त्विमानि सूत्राण्यन्यथैवावीवृतत्। यथा तथा व्याख्यानेऽपि न कांचिदपि शास्त्रार्थहानिं पश्यामः । यद्यपि न शास्त्रार्थहानिस्तथाऽपि भाष्यवृत्तिकारयोर्ग्रन्थं न वयमन्यथयितुं प्रभवाम इति तथैव तद्ग्रन्थं निर्दिशामः । परं यथावद्वेदं सौलभ्येनावगमयितुं पार्थक्येन वृत्तिकारग्रन्थमुपनिबध्नीमः ।

**तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत्तदर्थत्वात् ।**

**वृत्तिः**—त्रयाणां मध्ये प्रेतानां पिण्डदानं जीवनां प्रत्यक्षार्चनमिति गाणगारेर्मतं पितृप्रीत्यर्थत्वात्कर्मण इति ।

**सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात् ।**

**वृत्तिः**—पित्रादिभ्यस्त्रिभ्यः प्रेतेभ्यो जीवद्भ्यश्च सर्वेभ्यो निपरणं तौल्वलिर्मन्यते । क्रियायामुद्देशकारकत्वेन च गुणभूताः पितरो न तेषां प्रीतिः शास्त्रतो लोकतोऽवगम्यत इति ।

**अपि जीवान्त आ त्रिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारिता ।**

**वृत्तिः**—आदिमध्यान्तशब्दैः पितृपितामहप्रपितामहा उच्यन्ते । जीवोऽन्तो यस्य स जीवान्तः । अपिशब्देन जीवादिर्जीवमध्य इत्यपि लभ्यते जीवसर्व इति च । अत्र त्रयाणामेकस्मिन्द्वयोः सर्वेषु वा जीवत्सु वा यावदर्थं परान्पितॄन्गृहीत्वा प्रेतेभ्यस्त्रिभ्यो दद्यादिति गौतमो मन्यते । क्रिया ह्यर्थकारिता । मरणपदार्थप्रवृत्ता यस्मात्क्रियेत्यर्थः ।

**उपायविशेषो जीवमृतानाम् ॥ १९ ॥**

**दे० भाष्यम्**—एत उक्तपक्षाः सदोषा इदानीमन्य उपायविशेषो जीवानां च मृतानां च वक्ष्यते । प्रतिज्ञानमेतत् ॥ १९ ॥

**वृत्तिः**—पित्रादीनां जीवानां मृतानां च पिण्डदान उपायविशेषो वक्ष्यत इत्यर्थः ॥१९॥

उपन्यस्तान्पक्षान्दूषयितुमाह—

**न परेभ्योऽनधिकारान्न प्रत्यक्षम् । न जीवेभ्यो निपृणीयात् ॥ २० ॥**

**दे० भाष्यम्**—न परेभ्योऽनधिकारात्पित्रे पितामहाय प्रपितामहायेत्येत एवाधिकृता न परे । न प्रत्यक्षं गाणगारिणा प्रत्यक्षमितरानर्चयेदिति तदपि न कस्मादनाधिकारादेव । अनधिकृतं हि प्रत्यक्षमर्चनं होमोऽधिकृतो निपरणं च न जीवेभ्यो निपृणीयात् । यदुक्तं सर्वेभ्य एव निपृणीयादिति तत्पक्षे जीवान्तार्हितेभ्यस्तदपि न कस्मादनधिकारादेव सर्वजीविन

इति वचनान्न पित्रे दानं जीवते: । तदपि न कस्मादनधिकारादेव । अनधिकृतं हि प्रत्यक्षमर्चनं होमोऽधिकृतो न निपरणं न च जीवेभ्यो निपृणीयात् । यदुक्तं गौतमेन तत्सर्वेभ्य एव निपृणीयादिति । तत्पक्षे जीवान्तर्हितेभ्यः । तदपि न कस्मादनधिकारादेव सर्वहुतं सर्वजीविन इति वचनान्न पित्रे दानं जीवते । न जीवान्तर्हितेभ्यः । तौल्वलिपक्ष एव विशिष्टः । अप्रतिषेध एव निपृणीयादिति तस्मिन्पक्षे जीवितान्तर्हितेभ्यश्चैतेभ्यो निपरणे प्राप्ते प्रतिषेधः ॥ २० ॥

**वृत्तिः**—गौतमगाणगारितौल्वलीनां क्रमेण दूषणानि ॥ २० ॥

## न जीवान्तर्हितेभ्यः ॥ २१ ॥

**दे० भाष्यम्**—जीवेनान्तर्हिता जीवान्तर्हिताः प्रेतास्तेभ्यो न दद्यात्कस्मादनधिकारादेव पितरि जीवति पुत्रोऽनधिकृतो भवति । पितैवोत्तरेषां ददाति न पुत्रः । होमान्तं कृत्वा विरमति । अन्येषां पुनरुक्तं येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति । तदप्युक्तं तौल्वलिना । एवं सर्वे इमे पक्षा आरभ्य प्रतिषेधाद्विकल्पिता भवन्ति ॥ २१ ॥

**वृत्तिः**—जीवव्यवहितेभ्यो न निपृणीयादित्यर्थः । सर्वपक्षव्यापीदं दूषणम् । सर्वत्रानधिकारादित्ययमेव हेतुः । अनधिकारादयोग्यत्वादित्यर्थः । क्वचिद्विध्यभावात्क्वचिन्निषेधादयोग्यत्वमवगम्यते ॥ २१ ॥

## जुहुयाज्जीवेभ्यः ॥ २२ ॥

**दे० भाष्यम्**—इदानीमुपायविशेषो जीवमृतानां वक्ष्यते तौल्वलिपक्षे जीवान्तर्हितेभ्यः प्रतिषेध उक्तो जीवान्तर्हितेषु जीवपितृकस्य ‘ आ त्रिभ्यो दद्यात् ’ इति श्रुतिः । तस्मादिदमुच्यते प्रेतेभ्यो दद्याज्जुहुयाज्जीवेभ्यः प्रेतेभ्यो येऽन्तरास्तत्र जीवा इत्येतेभ्यो दद्यात्प्रेतेभ्यो दद्याज्जीवेभ्यो होमदर्शनाज्जीवेभ्यः सर्वत इति न्यायेन जीवेभ्यः पाणिना तूष्णीमेवाग्नौ जुहुयादेवं विधिना जीवानां च प्रेतानां च विधिः कृतो भवति । एव विधिविशिष्ट उपाय उक्तः ॥ २२ ॥

**वृत्तिः**—अयमुपायविशेष उच्यते—जीवेभ्यो जुहुयात्प्रेतेभ्यो निपृणीयादित्यर्थः । ‘ न जीवन्तमतीत्य दद्यात् ’ इत्यत्रापि निषेधोऽस्ति । तेन जीवपितुर्जीवपितामहस्य जीवोभयस्य वाऽयमपि पक्षो नास्ति । तत्र होमान्तमनारम्भो वा ॥ २२ ॥

अथ सर्वेषु जीवत्सु कथमित्याह—

## सर्वहुतं सर्वजीविनः ॥ २३ ॥

**दे० भाष्यम्**—सर्वेषु जीवत्सु जुहुयादेवाऽऽहुतीर्हुत्वा सर्वमग्नावनुप्रहरेद्धोमान्तं सर्वे-

जीविन इति सिद्धम् । सर्वहुतमिति वचनाज्जीवानां होम उपदिष्टो भवति सर्वजीविनामे तद्भवत्यन्येषामप्युक्तं जीवत्पितृकस्य होमान्तमनारम्भो वा ॥ २३ ॥

**वृत्तिः**—सर्वहुतमिति । सर्वे पिण्डा होतव्या इत्यर्थः । पिण्डहोमो निपरणमन्त्रेण स्वाहाकारान्तेन कर्तव्यः । अत्र दूषणीयपक्षाणामुपन्यासे प्रयोजनं सपिण्डीकरणे पितामहे जीवति पितरि मृते संवत्सरादिषु कालेषु तस्यावश्यकर्तव्यत्वात्तत्रैषां पक्षाणामुपयोग इत्येवमर्थम् । एवमादीन्यन्यान्यपि प्रयोजनानि चिन्त्यानि ॥ २३ ॥

**नामान्यविद्वांस्ततपितामहप्रपितामहेति ॥ २४ ॥**

**दे० भाष्यम्**—नामान्यविद्वांस्तत पितॄणामप्यविद्वान्भवतीति ततपितामहप्रपितामहेती-त्येतैर्नामभिः पिण्डाञ्जुहुयाद्वैतत्ते तत ये च त्वामत्रान्विति, एतत्ते पितामह इति , एतत्ते प्रपितामहेति ॥ २४ ॥

**वृत्तिः**—पित्रादीनां नामाज्ञाने ततादयः शब्दा नामस्थाने प्रयोक्तव्याः ॥ २४ ॥

**निपृताननुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ॥ २५ ॥**

**दे० भाष्यम्**—निपृताननुमन्त्रयेत निपरणं कृतं येषां ते निपृताः । तान्निपृताननु-मन्त्रयेत् । अत्र पितर इत्येतेन मन्त्रेण ॥ २५ ॥

**वृत्तिः**—निपूर्तानिति प्राप्ते निपृतानिति च्छान्दसो निर्देशः । निपूर्तानेव पिण्डाननुमन्त्रयते न हुतानित्येवमर्थं निपृतानित्युच्यते । तेन सर्वहोम इदमनुमन्त्रणं न भवति । अस्मिन्प्रक-रणे यद्यपि पिण्डानामेवानुमन्त्रणमुपस्थानं प्रवाहणं च विधीयते तथाऽपि मन्त्राणां पितृलि-ङ्गत्वात्पिण्डा एव पितर इति कृत्वा पितर एवैतैर्मन्त्रैरभिधातव्याः ॥ २५ ॥

**सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्यामीमदन्त पितरो यथाभागमावृषायीषतेति ॥ २६ ॥**

**दे० भाष्यम्**—सव्यावृत्सव्यं बाहुमन्वावर्तते सव्यावृदुदगुदीचीं दिशमावृत्य यथा शक्ति-स्तावत्प्राणमनुगच्छन्सन्नासित्वोच्छ्वस्य ततः पिण्डानभिपर्यावृत्य ' अमीमदन्त ' इत्येतेन मन्त्रेणानुमन्त्रयेत्पिण्डान्सव्यावृदित्येतेनैव सिद्ध उदङ्ङिति वचनाद्या दिगुदीची तां दिश-मावृत्यानुच्छ्वसन्नासीत् ॥ २६ ॥

**वृत्तिः**—अनुमन्त्रयेतेति शेषः । सव्यावृदुदङ्ङित्येतावतैव सव्यावृत्त्वोदङ्मुखत्वयोः सिद्धयोरावृत्येति वचनमावृत्यैवोच्छ्वासो न पूर्वमित्येतदर्थम् । यथाशक्त्यनुच्छ्वसन्नासित्वा पुनरभिपर्यावृत्यामीमदन्तेत्यनुमन्त्रयते । आवृषायीषतेति यकारः पठितव्यः । व्यक्तिस्तु प्रमादजा ॥ २६ ॥

## चरोः प्राणभक्षं भक्षयेत् ॥ २७ ॥

दे० भाष्यम्—तस्यैकदेशं गृहीत्वैकं प्राणभक्षं भक्षयेन्नासिकस्थेन न चक्षुः प्राणस्तेन नासिकस्थेन भक्ष्यते गन्धः स प्राणभक्षो गन्धोपादनं प्राणभक्षो न प्राणभक्षः प्राणभक्षं भक्षयेत्तेन विधिना भक्षं कुर्यादित्यर्थः ॥ २७ ॥

वृत्तिः—तूष्णीमेवात्र प्राणभक्षणं कार्यम् ॥ २७ ॥

## नित्यं निनयनम् ॥ २८ ॥

दे० भाष्यम्—नित्यं निनयनं नित्यमुक्तं निनयनलेखां त्रिरुदकेनोपनयेदिति सदैवेह पुनः कर्तव्यमित्यर्थः। निनयनमन्यत्र विद्यते तस्मादुपनयनमेव निनयनमग्निहोत्रहोमे निनयनमस्ति तत्प्रकरणान्तरत्वान्न गृह्यते ॥ २८ ॥

वृत्तिः—यदुदकोपनयनमुक्तं शुन्धन्तां पितर इत्यादिमन्त्रकं तदत्र निनयनमित्युच्यते। तदत्र कर्तव्यमित्यर्थः ॥ २८ ॥

## असावभ्यङ्क्ष्वासावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने ॥ २९ ॥

दे० भाष्यम्—असावभ्यङ्क्ष्वासावङ्क्ष्वेत्येतौ मन्त्रावेताभ्यां नाम गृहीत्वा दद्यादिति वक्ष्यति। अभ्यञ्जनं दद्यादसावित्यष्टम्या विभक्त्या नाम गृह्णीयाद्भवदत्ताभ्यङ्क्ष्व भवत्राताङ्क्ष्वेति ॥ २९ ॥

वृत्तिः—दद्यादिति शेषः ॥ २९ ॥

## वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वँल्लोमैतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वमिति ॥ ३० ॥

दे० भाष्यम्—वासो दद्यात्पिण्डेषु वासो दद्याद्वास इत्युक्ते वस्त्रप्रान्तो दशा भवति वस्त्रान्तं दद्यादूर्णास्तुकां वा दद्यात्। ऊर्णास्तुकार्णातन्तुः। एकामेव त्रिषु दद्यात्पञ्चाशद्वर्षाणि यजमानस्य भवन्ति तस्य पञ्चाशद्वर्षताया ऊर्ध्वमुपर्युत्तर आयुषि स्वलोम यजमानो दद्यादूर्ध्वं नाभेरित्युक्तमन्येषामूर्ध्वं नाभेः श्मश्रुकेशेभ्योऽन्यत्र दद्यात्पूर्व आयुषि उक्तो विकल्प उत्तर आयुष्यविकल्पस्तल्लोम भवति स्वग्रहणं ऊर्णाधिकारादूर्णलोम प्राप्नोति 'एतद्वः' इति मन्त्रेणा एतेनैव सर्वाणि दशादीनि दद्यादिह स्वग्रहणाद्यजमानः कर्ता भवति नाध्वर्युः ॥ ३० ॥

वृत्तिः—एतेषामन्यतमद्रव्यं वासोर्थं पिण्डेषु दद्यादित्यर्थः। दशा वस्त्रप्रान्तप्रदेशः। ऊर्णास्तुका वाऽविलोमानि । पञ्चाशद्वर्षाणि यस्य स तथोक्तस्तस्य भावः पञ्चाशद्वर्षता। पञ्चाशद्वर्षतायाः पञ्चाशद्वर्षेष्वतीतेषूर्ध्वं जीवन्स्वीयमेव लोम वासोर्थं दद्यात्। मन्त्रस्त्वयमेव सर्वेषु द्रव्येषु सकृदेव भवति ॥ ३० ॥

**अथैनानुपतिष्ठेत नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम ॥ ३१ ॥**

**दे० भाष्यम्**—अथैनाननन्तरमेतान्पिण्डानुपतिष्ठेतोपस्थानं कुर्यान्नमो वः पितर इत्येतैर्मन्त्रैः पिण्डा उपलक्षणं पितॄणामेवोपस्थानं येषां च निपरणं येषां च निनयनं येषां च दानं मन्त्रलिङ्गादन्यथाऽत्रैतान्प्रवाहयेदिति प्रवाहणं नोपपद्यते ॥ ३१ ॥

**वृत्तिः**—इतिकाराध्याहारेण सूत्रच्छेदः । सन्तः स्यामेति मन्त्रः पठितव्यो विकारं वर्जयित्वा ॥ ३१ ॥

**मनोन्वाहुवामह इति च तिसृभिः ॥ ३२ ॥**

**दे० भाष्यम्**—मनोन्वाहुवामह इत्येताभिश्च तिसृभिरुपस्थानम् ॥ ३२ ॥

**वृत्तिः**—उपतिष्ठेतेति शेषः ॥ ३२ ॥

**अथैनान्प्रवाहयेत्परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छतेति ॥ ३३ ॥**

**दे० भाष्यम्**—अथैनानुपस्थानादनन्तरमेनान्पिण्डानुपलभ्य पितॄन्प्रवाहयेद्विसर्जयेत्परेतनेत्येतेन मन्त्रेण । उपस्थानस्य प्रवाहणमिति विशेषसंज्ञा यथास्थितस्य प्राप्नोति । अग्न्युपस्थान उपस्थानसंज्ञा मन्त्रस्य न प्राप्नोत्यधिकारव्यवायात् ॥ ३३ ॥

**वृत्तिः**—अत्रापि पिण्डस्थान्पितॄनेव प्रवाहयेत् ॥ ३३ ॥

**अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसमिति ॥ ३४ ॥**

**दे० भाष्यम्**—अग्निं प्रत्येयादग्निं दक्षिणाग्निं प्रत्येयात्प्रतिनिवृत्य गच्छेद्गत्वोपतिष्ठेताग्ने तमद्येति प्रत्येयादिति वचनादाग्नेयत्वाच्च मन्त्रस्योपस्थानमेव गमनार्थे सति गमनलिङ्गेन भवितव्यं यथा मा प्रगामेति सूक्तस्य यथेतिवचनात्पञ्चाक्षरः पादो दशाक्षरो वा भवति वक्ष्यति पञ्चाक्षरेण विग्रहो दशाक्षरेणेति विकल्पः प्रत्येयादित्यनुच्यमाने गत्वोपस्थानं न प्राप्नोति तत्रैव कुर्यादारादुपकारित्वाद्गार्हपत्यं प्रत्येयादिति वर्तमानेऽन्योन्यं गत्वा गार्हपत्यमुपतिष्ठते यदन्तरिक्षमित्येतयर्चा प्राचीनावीत्येव भवत्यधिकाराद्द्वा मन्त्रान्तो न भक्षजप उत्तरो मन्त्रः ॥ ३४ ॥

**वृत्तिः**—प्रत्येयादेति वचनसामर्थ्याद्दक्षिणामुखेनात्र किंचिदनुव्रजनं कर्तव्यम् । अग्निं प्रत्येयादग्ने तमद्यार्थ्वं न स्तोभैरित्यविशेषवचनेन दक्षिणाग्निमेवेतरयोर्विशेषाभिधानात् । प्रत्येयादिति शेषः ॥ ३४ ॥

**वीरं मे दत्त पितर इति पिण्डानां मध्यमम् ॥ ३५ ॥**

**दे० भाष्यम्**—वीरं मे दत्त इत्येतेन मन्त्रेण गृहीत्वा पिण्डानुपतिष्ठते । षष्ठीवचनमुत्तरसूत्रार्थम् ॥ ३५ ॥

**वृत्तिः**—आददीतेति शेषः ॥ ३५ ॥

**पत्नीं प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथाऽयमरपा असदिति ॥ ३६ ॥**

**दे० भाष्यम्**—मध्यमं पिण्डानां मध्यमं पिण्डं पत्नी प्राश्नीयादाधत्तेत्येतेन मन्त्रेण प्राशयेत्कर्ता वा जपति मन्त्रं मध्यमभावेऽर्थात्प्राशनं भवति ॥ ३६ ॥

**वृत्तिः**—तमेव मध्यमामिति शेषः । पत्न्येव मन्त्रं ब्रूयादाधत्तेति ॥ ३६ ॥

**अप्स्वितरौ ॥ ३७ ॥**

**वृत्तिः**—प्रक्षिपेदित्यर्थः ॥ ३७ ॥

**अतिप्रणीते वा ॥ ३८ ॥**

**वृत्तिः**—प्रक्षिप्य दाहयेत् ॥ ३८ ॥

**यस्य वाऽऽगन्तुरन्नकाम्याभावः स प्राश्नीयात् ॥ ३९ ॥**

**दे० भाष्यम्**—अथवाऽऽगन्तुरन्नकाम्याया अन्नेच्छाया भाव आगन्तुर्भवति स इतरौ प्राश्नीयाद्यस्य चेति वचनाद्यस्य कस्यचिद्भवति न यजमानस्यैव ॥ ३९ ॥

**वृत्तिः**—आगन्तुरभिनवो निर्निमित्त एवान्नेच्छाभावो यस्य स वेतरौ प्राश्नीयात् ॥ ३९ ॥

**महारोगेण वाऽभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति ॥ ४० ॥**

**दे० भाष्यम्**—महारोगेण वाऽभितप्तो रोगो महारोगो दुश्चिकित्सो भवति तेन वाऽभितप्तोऽभिपीडितः प्राश्नीयादितरौ पिण्डौ । महारोगः क्षयव्याधिः कुष्ठव्याधिरन्ये चैवंविधाः । अत एवमन्यतरा गतिरधिकृतायाः अन्या गतिर्याऽन्यतरा नामान्यतरां गतिं गच्छत्यजो भवतीत्यर्थः ॥ ४० ॥

**वृत्तिः**—क्षयकुष्ठादिनाऽशक्यपरिहारेणातिपीडितः । प्राश्नीयादिति पुनर्वचनं पूर्व-

णास्य संबन्धनिवृत्त्यर्थम् । तेनान्यतरामित्यत्रैव भवति । अन्यतरां गतिं गच्छतीत्ययमर्थः सद्य एवारोगो भवेन्म्रियेत वेति ॥ ४० ॥

एवमनाहिताग्निर्नित्ये ॥ ४१ ॥

दे० भाष्यम्—एवमनाहिताग्निर्य उक्तः पिण्डपितृयज्ञ आहिताग्नेरेवमेतेनैव विधिनाऽनाहिताग्नेरप्यौपसनेोऽमावास्यायां पिण्डपितृयज्ञो भवति नित्ये ॥ ४१ ॥

वृत्तिः—अनाहिताग्निरप्येवं पिण्डपितृयज्ञं कुर्यान्नित्य औपासन इत्यर्थः ॥ ४१ ॥

श्रपयित्वाऽतिप्रणीय जुहुयात् ॥ ४२ ॥

दे० भाष्यम्—श्रपयित्वा गृह्ये श्रपयित्वेति वा पाठः । औपासनो गृह्यसंज्ञो भवति पाणिग्रहणादिगृह्यमिति वचनान्नित्यो वा भवति नित्यानुगृहीतः स्यादिति वचनान्नित्ये श्रपयित्वा नित्यो गृह्य औपासनो नित्यादतिप्रणयनं कृत्वा नित्य एवाग्नौ श्रपयित्वाऽतिप्रणीतेऽग्नौ जुहुयादिति सूत्रार्थः । तत्र दक्षिणाग्नौ श्रपयेदित्युक्तम् । अनाहिताग्नेस्तु दक्षिणाग्निर्न विद्यते तस्मान्नित्ये श्रपणं विधीयते दक्षिणाग्नेरेकोल्मुकमित्युक्तम् । दक्षिणाग्नेरभावान्नित्यादतिप्रणयनं लाघवार्थं विधीयतेऽन्यथा गुरु स्यान्नित्यादतिप्रणीय नित्ये श्रपयित्वाऽतिप्रणीते जुहुयादिति वक्तव्यं भवति तद्गुरु भवति जुहुयादित्युक्तेऽतिप्रणीते होमो विधीयते प्राक्सिद्धत्वादिह विद्यत इह विहितोऽपि विधिस्तत्रापि भवति ॥ ४२ ॥

वृत्तिः—तस्यायं विशेषो हविःश्रपणं कृत्वाऽतिप्रणयनं कर्तव्यम् । तस्यैवातिप्रणीतस्योपसमाधानं परिस्तरणं च कृत्वा ततोऽर्वागतिप्रणीतादित्यादि समानम् । जुहुयादित्ययमनुवादः । अयं चात्र विशेषः । यदन्तरिक्षमित्येतस्मिन्मन्त्रे गार्हपत्यशब्द उद्धर्तव्यस्तच्छब्दप्रवृत्तिनिमित्तस्य संस्कारस्यात्राभावादिति ॥ ४२ ॥

द्विवत्पात्राणामुत्सर्गः ॥ ४३ ॥

दे० भाष्यम्—द्विवत्पात्राणां पात्राणां स्थाल्यादीनां च द्वे द्वे पात्रे गृहीत्वोत्सर्गो नाम नयनं देशान्तरे स्थापनं यथाशेषं होतृचमस आनीयोत्सृजेदिति ॥ ४३ ॥

वृत्तिः—द्विश इत्यर्थः ॥ ४३ ॥

तृणं द्वितीयमुद्रिक्ते ॥ ४४ ॥

दे० भाष्यम्—उद्रिक्तमतिरिक्तं स्याद्द्वितीयं पात्रं न विद्यते तस्यातिरिक्तस्य तृणं द्वितीयं भवति तृणेन सह तत्पात्रमुत्सृजति ॥ ४४ ॥

इति पिण्डपितृयज्ञसूत्रभाष्यम् ।

वृत्तिः—एकस्यातिरिक्तस्य तृणेन द्वित्वं संपाद्योत्सर्गः कर्तव्य इत्यर्थः ॥ ४४ ॥

इति पिण्डपितृयज्ञसूत्रवृत्तिः ।

---

## अथाऽऽश्वलायनपिण्डपितृयज्ञसंभारस्मरणपट्टिका ।

१ दंपती—कर्मानुष्ठानार्थम् ।

२ शरावः—एकोल्मुकप्रणयनार्थम् ।

३ दर्भाः—परिस्तरणाद्यर्थम् ।

४ काष्ठानि—अग्न्युपसमिन्धनाद्यर्थम् ।

५ चरुस्थाली—चरुश्रपणार्थम् ।

६ शूर्पम्—निर्वापार्थम् ।

७ स्फ्यः—लेखाकरणार्थम् ।

८ उलूखलं— } व्रीह्यवहननार्थम् ।
९ मुसलं च— }

१० स्रुवः—आज्यग्रहणार्थम् ।

११ ध्रुवा—आज्यधारणार्थम् ।

१२ कृष्णाजिनम्—व्रीह्यवघातार्थम् ।

१३ सकृदाच्छिन्नकुशाः—पिण्डदानार्थम् ।

१४ व्रीहयः—चर्वर्थम् ।

१५ पञ्चदशेध्मानि—होमार्थम् ।

१६ मेक्षणम्—चर्ववदानार्थम् ।

१७ आज्यम्—उपस्तरणाभिघारणार्थम् ।

१८ कमण्डलुः—उदकग्रहणार्थम् ।

१९ अञ्जनम— }
२० अभ्यञ्जनम्— } पिण्डेषु दानार्थम् ।
२१ कशिपूपबर्हणे— }
२२ वासश्च— }

२३ पितृपितामहप्रपितामहानां नामानि—पिण्डनिपरणार्थम् ।

साङ्गपिण्डपितृयज्ञविधायकवाक्यानि तु निर्दिष्टसूत्रब्राह्मणाभ्यामधिगन्तुं सुलभानीति न तदर्थं पृथग्यत्नः क्रियते ।

इत्याश्वलायनपिण्डपितृयज्ञसंभारस्मरणपट्टिका ।

## अथ पिण्डपितृयज्ञप्रयोगः ।

आहिताग्निः—अपराह्ण आचम्य—

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पिण्डपितृयज्ञं करिष्ये ।**

स्वयोनितो दक्षिणाग्निमानीय प्रज्वल्य दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेत् ।

**ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्वस्मात् ।**

इत्यतिप्रणीय दक्षिणाग्न्यतिप्रणीतावुपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक्प्रत्यगुदग्वैकैकशः पात्राणि सादयेत् ।

**चरुस्थालिशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्ममेक्षणकमण्डलून् ।**

एवमासाद्य दक्षिणाग्नेर्दक्षिणतोऽग्निष्ठं शकटमारुह्य तत्रैव शूर्पे चरुस्थालीं विधाय व्रीहिभिः प्रपूर्य पूर्णां निमृज्य स्थाल्यास्यदेशाच्छूर्पोपरि ये पतन्ति तान्व्रीहीन्परिसन्नाञ्शकटे निधाय कृष्णाजिन उलूखलं कृत्वा स्थाल्यन्तर्गतानविविच्याविविच्य पल्यवहन्यात्तः सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयेत् । ततो दक्षिणाग्न्यतिप्रणीतयोरन्तराले स्फ्येन लेखामुल्लिखेत्—

**अपहता असुरा रक्षांसि वेदिषदः ।**

इति । तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्याऽऽज्यं गृहीत्वा ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाऽऽज्येन स्थालीपाकमभिघार्य दक्षिणाग्नेः पश्चादासादयेत् । यदि नवनीतमाज्यकार्यार्थं स्यात्तदाऽस्य विलापनमात्रं कृत्वाऽन्यस्मिन्पात्र आनीयैकपवित्रेण सकृत्तूष्णीमुत्पूय ततो ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेन स्थालीपाकं स्रुवेणाभिघार्य ( दक्षिणत आञ्जनाभ्यञ्जनकशिपूपबर्हणानि सादयेत् ) । दक्षिणाग्नेः पश्चादासाद्य प्राचीनावीतीध्ममुपसमाधाय मेक्षणं स्रुवेणोपस्तीर्य द्विरवदाय प्रत्यभिघार्य मेक्षणेनाऽऽदाय जुहुयात् ।

**सोमाय पितृमते स्वधा नमः । सोमाय पितृमत इदं न मम ।**

इति दक्षिणाग्नौ प्रथमाहुतिं सव्यं जान्वाच्य जुहुयात् । ततः—

**अग्नये कव्यवाहनाय स्वधा नमः ।**

इति दक्षिणाग्नावेव द्वितीयाहुतिं हुत्वा यज्ञोपवीती मेक्षणं दक्षिणाग्नावनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेत—

शुन्धन्तां पितरः । शुन्धन्तां पितामहाः । शुन्धन्तां प्रपितामहाः ।

इति । तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः—

एतत्ते पितः—शर्मन्ये च त्वामत्रानु ।

एतत्ते पितामह—शर्मन्ये च त्वामत्रानु ।

एतत्ते प्रपितामह—शर्मन्ये च त्वामत्रानु ।

एवं निपृताननुमन्त्रयेत ।

अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ।

इत्यनुमन्त्र्य सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्य

अमीमदन्त पितरो यथाभागमावृषायीषत ।

इत्यनुमन्त्र्य चरोः प्राणभक्षं भक्षयित्वा

शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः ।

इत्यपो निनीय—

पितः—शर्मन्नभ्यङ्क्ष्व ।

पितामह—शर्मन्नभ्यङ्क्ष्व ।

प्रपितामह —शर्मन्नभ्यङ्क्ष्व ।

पितः—शर्मन्नङ्क्ष्व ।

पितामह—शर्मन्नङ्क्ष्व ।

प्रपितामह—शर्मन्नङ्क्ष्व ।

इत्यभ्यञ्जनाञ्जने दत्त्वा

एतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वम् ।

इति वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वं लोम ।

अथैनानुपतिष्ठेत—

नमो वः पितर इषे नमो वः पितर ऊर्जे नमो व पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम । मनो न्वाहुवामहे नाराशंसेन सोमेन । पितॄणां च मन्मभिः । आत एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।। ज्योक्च सूर्यं दृशे । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ।

---

१ शर्मन्नित्यस्य पश्चात् तत्तन्नाम वक्तव्यम् यथा देवदत्तशर्मन् इति ।

अथैनान्प्रवाहयेत्—

परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः ।

दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत । इति ।

अग्निं प्रत्येयात्—

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदि स्पृशम् । ऋद्ध्या मा त ओहैः । इति ।

गार्हपत्यं प्रत्येयात्—

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसम् । इति ।

वीरं मे दत्त पितरः ।

इति पिण्डानां मध्यमं पिण्डमादाय पत्नीं प्राशयेत् ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
यथाऽयमरपा असत् ।

इति पत्न्येव मन्त्रं ब्रूयात् । इतरौ पिण्डावप्सु प्रक्षिपेत् ।

अतिप्रणीते वा प्रक्षिप्य दाहयेदित्यादि सूत्र एव स्पष्टमुक्तं तद्वत्कृत्वा पात्राणां द्विवदुत्सर्गः । यद्येकमेवावशिष्टं स्यात्तर्हि द्वित्वसंपादनार्थं तृणेन सह तदुत्सृजेदिति ।

आचम्यानेन पिण्डपितृयज्ञाख्येन कृतेन कर्मणा परमेश्वरः प्रीयताम् ।

इति पिण्डपितृयज्ञप्रयोगः ।



## अथ पिण्डपितृयज्ञमन्त्रभाष्यम् ।

**ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।**
**परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्वस्मात् ॥ १ ॥**

**भाष्यम्**—ये पितृरूपाण्यात्मनि प्रतिमुञ्चमानाः । प्रतिपूर्वो मुञ्चतिर्बन्धने वर्तते । आत्मनि बध्नन्तोऽसुराः सन्तो भवन्तः स्वधया पित्र्येणान्नेन हेतुभूतेनास्माभिरेतत्खादितव्यमिति चरन्ति संचरन्ति । किं च परापुरः पराक्रान्ताः पुरः परापुरः शरीराणि महान्तीति निपुरो निकृष्टाः पुरो निपुरः सूक्ष्माणि शरीराणि ये भरन्ति बिभ्रति धारयन्ति । अग्निस्तानसुराँल्लोकात्स्थानात्प्रणुदातु प्रणुदतु प्रेरयत्वस्मात्पितृलोकात्प्रकर्षेणापसारयत्वित्यर्थः ॥ १ ॥

**अपहता असुरा रक्षांसि वेदिषदः ॥ २ ॥**

**भाष्यम्**—वेद्यां सीदन्ति वेदिषदस्तादृशा असुरा अपहता वेदिसकाशादपगताः । तथा रक्षांसि वेद्या अपहतानि । असुरत्वं रक्षस्त्वं चेतिजातिविशेषौ देवविरोधिनौ ॥ २ ॥

**सोमाय पितृमते स्वधा नमः ॥ ३ ॥**

**भाष्यम्**—पितृमान्पितृसंयुक्तस्तस्मै सोमनामकाय देवाय स्वधा हविर्दत्तम् ॥ ३ ॥

**अग्नये कव्यवाहनाय स्वधा नमः ॥ ४ ॥**

**भाष्यम्**—कवयः क्रान्तदर्शिनः पितरस्तेषां संबन्धि कव्यं हविस्तद्वोढुमधिकारो यस्यास्ति स कव्यवाहनस्तस्मा अग्नये स्वधा हविर्दत्तमस्तु ॥ ४ ॥

**शुन्धन्तां पितरः । शुन्धन्तां पितामहाः । शुन्धन्तां प्रपितामहाः ॥ ५ ॥**

**भाष्यम्**—पितृपितामहप्रपितामहाः शुद्धा भवन्त्वित्यर्थः ॥ ५ ॥

**एतत्तेऽसौ ये च त्वामत्रानु ॥ ६ ॥**

**भाष्यम्**—असावित्यस्य स्थाने पितृपितामहप्रपितामहानां संबुद्ध्यन्तानि नामानि वक्तव्यानि । हे पितस्ते तुभ्यमेतत्पिण्डीकृतमन्नं दत्तं ये चान्येऽत्र त्वामनुवर्तन्ते तेभ्योऽप्येतद्दत्तम् ॥ ६ ॥

**अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥ ७ ॥**

**भाष्यम्**—हे पितरो यूयमत्रास्मिन्बर्हिषि मादयध्वं हृष्टा भवत । ततो हविषि यथाभागं स्वं स्वं भागमनतिक्रम्याऽऽवृषायध्वं समन्ताद्वृषवदाचरत । यथा वृषः स्वाभीष्टघासं प्राप्य तृप्तिपर्यन्तं स्वी करोति तद्वत्स्वी कुरुत । आङ्पूर्वाद्वृषशब्दात् 'कर्तुः क्यङ्सलोपश्च' ( पा० सू० ३ । १ । ११ ) इति क्यङ् ततो लोट् ॥ ७ ॥

**अमीमदन्त पितरो यथाभागमावृषायीषत ॥ ८ ॥**

**भाष्यम्**—पितरोऽमीमदन्त । यान्पितॄन्प्रति मादयध्वमित्युक्तं ते पितरोऽमीमदन्त हृष्टाः । यथाभागमावृषायीषत । स्वं भागमनतिक्रम्य वृषवत्स्वी चक्रुः । लुङि रूपम् । स्वं भागं जक्षुरित्यर्थः ॥ ८ ॥

**असावभ्यङ्क्ष्वासावङ्क्ष्व ॥ ९ ॥**

**भाष्यम्**—असावित्यस्य स्थाने संबुद्ध्यन्तं नाम निर्दिश्य भाङ्क्ष्वाभ्यञ्जनं कुरु । अभ्यञ्जनकरणं नाम नवनीतेन पिण्डलेपनमित्यर्थः । तद्वदेवाङ्क्ष्वाञ्जनं * कुरु ॥ ९ ॥

**एतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वम् ॥ १० ॥**

**भाष्यम्**—हे पितर एतद्वो युष्माकं वासोऽतोऽन्यद्वे पितरो भवद्दानकर्मणि मां मा युङ्ध्वं मा नियोजयध्वम् ॥ १० ॥

**नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम ॥ ११ ॥**

**भाष्यम्**—हे पितरो वो युष्माकं येऽन्नं भुज्यमानं तस्मै नमोऽस्तु । एवं सर्वत्र योज्यम् । ऊर्जे ऊर्ङ्नाम रसः । शुष्मशब्दो बलवाची । घोरो मारणादिव्यापारः । जीवो देहाध्यक्षः । रसो नामान्तर्गतो मधुरिमोच्यते । स्वधा तदीया स्त्री पितरो हि स्वधायां प्रीतिं कुर्वन्ति । नमो वः पितरः । हे पितरो यूयमेतास्मिँल्लोके स्थितास्तेभ्यो युष्मभ्यं नमः । नम एता युष्माकम् । एतैतानि नमो नमांसि युष्माकं युष्मभ्यं वो युष्माकं जीवा अस्माकं जीवा इहास्मिँल्लोके जीवन्त एव स्याम भवेम ॥ ११ ॥

**मनो न्वाहुवामहे नाराशंसेन सोमेन । पितॄणां च मन्मभिः ॥ १२ ॥**

**सा० भाष्यम्**—नु क्षिप्रं मन आहुवामह आह्वयामः । पितृयज्ञानुष्ठानेन चित्तं पितृलोकं गतमिवाऽऽसीदत आहूयते । यद्वा मनो मनोभिमानिदेवतमाह्वयामः । केन साधनेन सोमेन स्तोत्रेण । कथंभूतेन नाराशंसेन शंसः प्रशंसनं नराणां योग्यः शंसो नराशंसस्तत्संबन्धी नाराशंसस्तेन । स्तोत्रं द्विविधं दैवं मानुषं च । यत्र देवाः स्तूयन्ते तद्दैवं यत्र च मनुष्याः प्रशस्यन्ते तन्मानुषम् । तथाविधेन स्तोत्रेणेत्युक्तं भवति । किं च पितॄणां

---

* अञ्जनं नाम त्रैककुदं त्रिककुद् एवं पर्वते भवं त्रैककुदम् ।
यदि त्रैककुदं नाधिगच्छेद्येन केन चाञ्जनेनाञ्जीतेति वाजसनेयकम् ( आप० श्रौ० सू० १० । ७ । २ । ३ )

च मन्मभिः। पितरो यैः स्तोत्रैर्मन्यन्ते ते मन्मानस्तैस्त्वादृशैः स्तोत्रैर्हवामहे॥ १२॥

आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यं दृशे॥ १३॥

सा० भाष्यम्—आ न एतु आगच्छतु मनः क्रिमर्थं क्रत्वे क्रत्वे क्रतुः संकल्पो यज्ञो वा। दक्षाय दक्षः संकल्पः समृद्धिरुत्साहो वा 'स यदेव मनसा कामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदाऽस्मै तत्समृध्यते स दक्षः' इति श्रुतिः। जीवसे जीवनाय। ज्योगिति निपातश्चिरवचनः। चिरं सूर्यं दृशे द्रष्टुम्॥ १३॥

पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातं सचेमहि॥ १४॥

सा० भाष्यम्—हे पितरो भवदनुज्ञया दैव्यो जनो देवसंबन्धी पुरुषो नोऽस्मभ्यं मनः पूर्वोक्तं चित्तं पुनर्भूयो ददातु प्रयच्छतु प्रेरयत्वित्यर्थः। तथा सत्यनुष्ठानं कृत्वा भवत्प्रसादाज्जीवं जीवनवन्तं व्रातं पुत्रपश्वादिकं गणं वयं सचेमहि सेवेमहि। सचतिः सेवनार्थः॥ १४॥

परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः।
दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत॥ १५॥

भाष्यम्—हे सोम्याः पितरः पथिभिः परेतन परावृत्य गृहान्गच्छत। कीदृशैः पथिभिर्गम्भीरेभिः सुदुर्गमानस्तैः। पूर्विणेभिः पूर्वकृतैः प्रहतैः। किंचास्मभ्यमिह भद्रं रयिं द्रव्यं सर्ववीरं सर्वं वीर्यवन्नियच्छत ददतेत्यर्थः॥ १५॥

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम्।
ऋध्यामा त ओहैः (ऋ० सं० ३। ५। १०)॥ १६॥

सा० भाष्यम्—हेऽग्ने अस्मिन्नहनि वयमृत्विगादयो—त्वदीयैः। ओहैरिन्द्रादिप्रापकैः स्तोमैः स्तोत्रसमूहैस्तं प्रसिद्धं त्वा मृध्याम समर्धयामः। कीदृशं त्वामश्वं न वोढारमश्वमिव तथा हविषो वाहकं क्रतुं न कर्तारमिवोपकर्तारमित्यर्थः। तथा भद्रं भजनीयं हृदिस्पृशं हृदयंगममतिशयेन प्रियमित्यर्थः॥ १६॥

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसम्॥ १७॥

भाष्यम्–पृथिव्यादीँल्लोकान्मनसा जिहिंसिम हिंसितुमिच्छेम यन्मातरं पितरं वा हिंसितुमिच्छेमेति यत्तस्मात्तस्मादेनसः पापाद्गार्हपत्योऽग्निर्मा मां प्रमुञ्चतु मामनेनसं सर्वपापरहितं करोतु॥ १७॥

वीरं मे दत्त पितरः॥ १८॥

भाष्यम्–हे पितरः पितृपितामहप्रपितामहा मे मह्यं वीरं वीरं पुत्रं दत्त ददत॥ १८॥

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथाऽयमरपा असत् ॥ १९ ॥

भाष्यम्— हे पितरो युष्मत्प्रसादाद्भक्तपिण्डप्राशनेन पुष्करस्रजं संपूर्णस्वर्णाद्यलंकृतं कुमारमेव गर्भमाधत्त यथाऽसौ कुमार इह परलोकेऽप्यपालं पातीत्यलंपाः कुलभूषणो यथा स्यात्तथाऽस्तत्यात् । कुलरक्षणायालं भवेत्तथाऽऽचरेति वा । प्रजातन्तुं मा व्यवच्छेत्सीरितिशासनानुसरणमेव कुलभूषणमिति यावत् ॥ १९ ॥

इति पिण्डपितृयज्ञमन्त्रभाष्यम् ।

---

## अथाऽऽग्रयणब्राह्मणं सभाष्यम् ।

अथाऽऽग्रयणप्रस्तावे यदुक्तं सूत्रकारेण " निरुप्तं हविरुपसन्नमप्रोक्षितं भवत्यथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति " इति तदिदं विधत्ते —

> ब्रह्मवादिनो वदन्ति यदर्धमासा मासा ऋतवः संवत्सर ओषधीः पचन्त्यथ कस्मादन्याभ्यो देवताभ्य आग्रयणं निरुप्यत इत्येता ह तद्देवता उदजयन्यदृतुभ्यो निर्वपेद्देवताभ्यः समदं दध्यादाग्रयणं निरुप्यैता आहुतीर्जुहोत्यर्धमासानेव मासानृतून्त्संवत्सरं प्रीणाति न देवताभ्यः समदं दधाति । इति । [ तै० सं० ५ काण्डे प्रपा० ७ अनु० २ ]

ब्रह्मवादिनः परस्परमेवं विचारयन्ति—अर्धमासमासर्तुसंवत्सररूपा देवता ओषधीनां परिपाकं संपादयन्ति । एवं सति ता देवता उपेक्ष्यान्याभ्य इन्द्राग्न्यादिभ्यो देवताभ्य आग्रयणाख्यं नूतनधान्यरूपं हविः कस्मात्कारणान्निरुप्य । इति । तत्राभिज्ञा एवमुत्तरमाहुः । यस्मादेता इन्द्राग्न्यादयो देवता इतरैर्देवैः सह समयं कृत्वा तत्र तत्रौषधिविषय उत्कर्षेण जयं प्रापुस्तस्मादिन्द्राग्न्यादिभ्यो निर्वापो युक्तः । एतच्च रजसूयप्रकरण आग्रयणविधौ स्पष्टमाम्नातम् " देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् " इति । एवं सति जेतॄनिन्द्राग्न्यादीनुपेक्ष्य यदृतुमासादिदेवताभ्यो निर्वपेत्तदानीमेतासां तासां च देवतानां कलहं संपादयेत् । एवं तर्ह्योषधिपरिपाकहेतुनामृतुमासादिदेवतानां परितोषः कथमिति चेच्छ्रूयताम् । इन्द्राग्न्यादिभ्य आग्रयणं निरुप्य शतायुधायेत्येता अज्यान्याहुतीर्मासादिदेवताभ्यो जुहुयात् । तेनार्धमासादिदेवताः प्रीणयति । ततो देवतानां कलहं च न करोति ।

यदपि सूत्रकारेणाऽऽग्रयणप्रस्तावे विहितम् " भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति " इति तं विधिं मन्त्रव्याख्यानरूपार्थवादेनोन्नयति—

**भद्रान्नः श्रेयः समनैष्ट देवा इत्याह हुताद्याय यजमानस्यापराभावाय। इति। [ तै० सं० ५ काण्डे प्रपा० ७ अनु० २ ]**

यजमानो भक्षणकाले भद्रादित्यादिमन्त्रं पठेत्। अयं च मन्त्रो हुतशेषस्यादनाय समर्थः। अद्मीमहीति मन्त्रलिङ्गात्। हुतभक्षणेन यजमानः पराभूतो न भवति। एतच्च ब्राह्मणमाग्रयणविधिसमीपे नेतव्यम्।

**ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा [ तै० सं० १ काण्डे प्रपा० ८ अनु० १ ]।**

हविर्द्व(त्र)ये दक्षिणाद्वये श्रूयमाणेऽपि कर्मैकत्वसिद्ध्यर्थमाग्रयणतां संघरूपां विधातुं प्रस्तौति—

**यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन्। ताः पराभवन्। [ तै० ब्रा० का० १ प्र० ६ अ० १ ] इति।**

यावत्य ओषधीनां संबन्धिन्य इति शेषः।

विधत्ते—

**“ आग्रयणं भवति हुताद्याय। यजमानस्यापराभावाय ” ( ९ )। [ तै० ब्रा० का० १ प्र० ६ अ० १ ] इति।**

**द्यावापृथिव्यमेककपालम्। [ तै० सं० १ काण्डे प्रपा० ८ अ० २ ]।**

द्यावापृथिव्यदेवतां प्रशंसति—

**“ द्यावापृथिव्य एककपालो भवति। प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति ”। [ तै० ब्रा० का० १ प्र० ६ अ० २ ] इति।**

अलंकरणकाल आज्येनैककपालमभिपूरयतीत्यापस्तम्बेन यदुक्तं तदिदं द्वेधा प्रशस्य विधत्ते—

**“ यजमानो वा एककपालः। तेज आज्यम्। यदेककपाल आज्यमानयति। यजमानमेव तेजसा समर्धयति। यजमानो वा एककपालः। पशव आज्यम्। ( ४ ) यदेककपाल आज्यमानयति। यजमानमेव पशुभिः समर्धयति ”। [ तै० ब्रा० का० १ प्र० ६ अ० ३ ] इति।**

विशेषान्तरं विधातुं प्रस्तौति—

**“ यदल्पमानयेत्। अल्पा एनं पशवोऽभुञ्जन्त उपतिष्ठेरन्। यद्बह्वानयेत्। बहव एनं पशवोऽभुञ्जन्त उपतिष्ठेरन् ”। [ तै०ब्रा०का० १प्र०६अ०३ ] इति।**

भुञ्जतः क्षीरदानादिना पालयन्तोऽभुञ्जन्त इति तद्विपर्ययः। पशूनामल्पत्वमपालयितृत्वं चेत्युभौ दोषौ। बहुत्वं पालयितृत्वं चेत्युभौ गुणौ तत्र गुणसंपादनेन प्रशंसन्विधत्ते—

**" बह्वानीयाऽऽविःपृष्ठं कुर्यात्। बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते "। [ तै० ब्रा० का० १ प्र० ६ अ० ३ ] इति।**

बह्वाज्ये पुरोडाशस्य पृष्ठमविमृज्य यथा दृश्यते तथा बह्वाज्यमानयेत्। तथासत्याज्यस्य बहुत्वात्पशूनामल्पत्वदोषो न भविष्यति। पुरोडाशपृष्ठस्याऽऽविर्भूतत्वादपालयितृत्वमपि न भवति। कृत्स्नस्यापि पुरोडाशस्य होमं विधातुं प्रस्तौति—

**" यजमानो वा एककपालः। यदेककपालस्यावद्येत्। ( ५ ) यजमानस्यावद्येत्। उद्वा माद्येद्यजमानः। प्र वा मीयेत " [ तै०ब्रा०का० १प्र०६अ०३ ]**

इतरपुरोडाशेषु भक्षणाद्यर्थमवशेष्य किंचिदेवावदीयते तद्वत्तत्राप्यवदानेन यजमानस्यावयवश्छिद्येताथवोन्मत्तो भवेत्। यद्वा प्रमीयेत।

कृत्स्नहोमं विधत्ते—

**" सकृदेव होतव्यः। सकृदिव हि सुवर्गो लोकः। " [ तै० ब्रा० का० १ प्र० ६ अ० ३ ] इति।**

सकृदेव कृत्स्न एव। स्वर्गलोकस्य सकृत्त्वमखण्डितत्वम्।

एककपाले पूर्वमानीतस्य बह्वाज्यस्य होमं विधत्ते—

**" हुत्वाऽभिजुहोति। यजमानमेव सुवर्गं लोकं गमयित्वा। तेजसा समर्धयति। " ( तै० ब्रा० का० १ प्र० ६ अ ३ ) इति।**

आदौ पुरोडाशं हुत्वा तस्योपर्याज्यं जुहुयादित्यर्थः।

चोदकप्राप्तेनाऽऽहवनीयहोमेनैककपालं प्रशंसति —

**" यजमानो वा एककपालः। सुवर्गो लोक आहवनीयः। यदेककपालमाहवनीये जुहोति। यजमानमेव सुवर्गं लोकं गमयति। " [ तै०ब्रा०का० १ प्र० ६ अ० ३ ] इति।**

कयाचिदुपपत्त्या पुरोडाशस्य चोदकप्राप्तं स्रुचा होममपोद्य हस्तेन होमः प्रसक्तस्तद्वा- ( स्तं वा ) रयितुं स्रुचा होमस्य प्रतिप्रसवं विधत्ते—

**" यद्धस्तेन जुहुयात्। सुवर्गाल्लोकाद्यजमानमवविध्येत्। स्रुचा जुहोति। सुवर्गस्य लोकस्य समष्ट्यै। " [ तै० ब्रा० का० १ प्र० ६ अ० ३ ] इति।**

अवविध्येत्प्रच्यावयेत्। पुरोडाशो येन संनिवेशेन पात्रेऽवस्थितस्तेनैव संनिवेशेनाग्नौ

तस्य स्थितिः शाखान्तरे विहिता स्रुचा हूयमानस्त्ववाङ्मुखो बर्हौ पतेदतस्तद्विरोधं परिहर्तुं हस्तेन होतव्यमित्येष मन्दानामुपपत्तिः ।

हुतस्य पुरोडाशस्य नैश्चल्यं विधातुं प्रस्तौति—

" यत्प्राङ्ग्रद्येत । देवलोकमभिजयेत् । यद्दक्षिणा पितृलोकम् । यत्प्रत्यक् । (७) । रक्षाꣳसि यज्ञꣳ हन्युः । यदुदङ् । मनुष्यलोकमभिजयेत् । " [ तै० ब्रा० का० १ प्र० ६ अ० ३ ] इति ।

यद्यपि लोकादिजयो न स्वरूपेण दोषस्तथाऽप्यविकफलभावनायां सत्यां तावन्मात्रत्वं दोष एव ।

विधत्ते—

" प्रतिष्ठितो होतव्यः । एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनुप्रतितिष्ठतः । द्यावापृथिवी ऋतवः । ऋतून्यज्ञः । यज्ञं यजमानः । यजमानं प्रजाः । तस्मात्प्रतिष्ठितो होतव्यः (८) । " [ तै० ब्रा० का० १ प्र० ६ अ० ३ ] इति ।

प्रागादिदिक्षु पतनपरिहारेण होमस्थान एव प्रतिष्ठितो निश्चलो यथा भवति तथा होतव्यः । ऋतव इत्यादिष्वनुप्रतितिष्ठन्तीत्यादिकं द्रष्टव्यं तस्मादिति पूर्वस्य विधेरुपसंहारः । तदेतदुक्तं कृत्स्नहोमादिकमापस्तम्बेन स्पष्टमुदाहृतम्—

" उपांशु प्रचरति सर्वहुतमपर्यावर्तयञ्जुहुयात्प्रतिष्ठितं न हस्तेन जुहुयात् " इति । [ आप० श्रौ० सू० ६ । ३० । ८ । ]

स्रुचा होमेऽप्यपर्यवृत्तिं संप्रदायविद एवं संपादयन्ति । शिक्ये पुरोडाशमवस्थाप्य वामहस्तेन शिक्यग्रं धृत्वा दक्षिणहस्तेन स्रुचमधरतो द्धरन्निव तया स्रुचा होमं कुर्वन्वामहस्तेन शिक्यमेमिपदुद्धृत्य बर्हैः स्थापयेदिति ।

इत्याग्रयणब्राह्मणं सभाष्यं समाप्तम् ।

## अथाऽऽग्रयणसंभारस्मरणपट्टिका ।

१ जायापती—कर्मानुष्ठानार्थम् ।
२ ऋत्विजः—याजनार्थम ।
३ दर्भाः—प्रस्तराद्युपयोगार्थम् ।
४ समिधः—अग्निसमिन्धनार्थम् ।
५ पुराणव्रीहयः—पुरोडाशार्थम् ।
६ नवव्रीहयः—चतुष्पुरोडाशार्थम् ।
७ नवश्यामाकाः—चर्वर्थम् ।
८ शूर्पत्रयम—निर्वापार्थम् ।
९ स्थालीद्वयम—चरुश्रपणार्थम् ।
१० एकविंशतिः कपालानि पुरोडाशाधिश्रयणार्थम् ।
११ पयः—वैश्वदेवचरुपचनार्थम् ।
१२ पात्रीत्रयम्—पुराणनवव्रीहिश्यामाकनिर्वापाद्यर्थम् ।
१३ उपवनपात्रम्—क्षीरचरुपचनार्थम् ।
१४ आशयपात्रम्—द्यावापृथिव्यैककपालस्थापनार्थम् ।
१५ आज्यम्—होमाद्यर्थम् ।
१६ प्रथमजगोवत्सः—दक्षिणादानार्थम् ।
१७ वासश्च—दक्षिणार्थम् ।
१८ शुद्धोदकम्—आचमनाद्यर्थम् ।

प्राकृतास्संभारादयमुक्तो विशेषः । अपरं येन च येनार्थो भवति तदपि प्रयुञ्जीत ।

आग्रयणविधिवाक्यानि निर्दिष्टतैत्तिरीयब्राह्मणाश्वलायनापस्तम्बसूत्रेष्वगन्तुं सुशकानीति न तदर्थं पृथग्यत्नः क्रियते ।

इत्याग्रयणसंभारस्मरणपट्टिका ।

---

## अथाऽऽश्वलायनीयमाग्रयणीयसूत्रम् ।

**आग्रयणं व्रीहिश्यामाकयवानां सस्यं नाश्नीयादग्निहोत्रमहुत्वा यदा वर्षस्य तृप्तः स्यादथाऽऽग्रयणेन यजेतापि ह देवा आहुस्तृप्तो नूनं वर्षस्याऽऽग्रयणेन हि यजत इत्यग्निहोत्रीं वैनानादायित्वा तस्याः पयसा जुहुयादपि वाऽक्रिया**

यवेष्विष्टिस्तु राज्ञः सर्वेषां चैके श्यामाकेष्ट्यां सौम्यश्चरुः सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामित्यत्रान्तरेळाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत्प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय । भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा । स नो मयोभूः पितवा विशेह शं नो भव द्विपदे शं चतुष्पद इति प्राश्याऽऽचम्य नाभिमालभेतामोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमाम एधि मामृधाम इन्द्रेत्येतेन भक्षिणो भक्षान्सर्वत्र नवभोजनेऽथ व्रीहियवानां धान्ये विराजावग्नीन्द्रावग्निन्द्राग्नी वा विश्वे देवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी । आधाये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्तो विश्वे देवास आगत ये के च ज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः प्रपूर्वजे पितरा नव्यसीभिरिति ॥ २१ ॥

इत्याग्रयणसूत्रम् ।

---

## अथ भाष्यवृत्तिसमेतमाग्रयणसूत्रम् ।

### आग्रयणं व्रीहिश्यामाकयवानाम् ॥ १ ॥

**दे० भा०**—नित्यानि कर्माण्यग्न्याधेयादीन्यधिकृतानि । इदमपि नित्यं प्रतिसंवत्सरे नवसस्य आग्रयणं भवति । आग्रयणमिति कर्मणः संज्ञाऽविक्रियते । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्सर्वमाग्रयणस्य विधानमाग्रयणकाले नवानां सस्यानां निर्वपेयुरित्युक्ते सर्वसस्यग्रहणं स्यात्सस्यं नाश्नीयादग्निहोत्रमहुत्वेति वचनात्सर्वसस्यानामाग्रयणे प्राप्त इष्टिनियमः क्रियते । व्रीह्यादीनां त्रयाणामेवाऽऽग्रयणं भवति नान्यस्येति । तत्र मूले कृष्टानां व्रीहिभिराग्रयणमफले कृष्टानामारण्यानां च श्यामाकैरित्यन्येषाम् ॥ १ ॥

**वृत्तिः**—अग्रेऽयनं भक्षणं येन कर्मणा तदाग्रयणम् । प्रथमद्वितीययोर्ह्रस्वदीर्घत्वव्यत्ययः । एषां त्रयाणां द्रव्याणां संवत्सरे प्रथमनिष्पन्नानामाग्रयणं नाम कर्म कर्तव्यमित्यर्थः । व्रीहिशब्दस्य प्रथमनिपातो व्रीहीणां प्राधान्यस्थापनार्थम् । तेन कालचोदना व्रीह्याग्रयणस्यैव भवति । श्यामाकशब्दस्य मध्यनिपातो व्रीहिकालाद्यवकालो भिन्न इति ज्ञापयति ॥ १ ॥

### सस्यं नाश्नीयादग्निहोत्रमहुत्वा ॥ २ ॥

**दे० भा०**—सस्यं नाश्नीयाद्व्रीह्यादिसस्यजातं सर्वं नाश्नीयादग्निहोत्रमहुत्वाऽनिष्ट्वेत्यर्थः । इष्ट्वा त्वश्नीयादित्यर्थादापन्नम् । सस्यग्रहणात्सर्वसस्यानां प्रतिषेधोऽन्यथाऽधि-

कृतानामेव स्यात् । अनिष्ट्वेति वक्तव्येऽग्निहोत्रग्रहणमिष्टपक्षप्रदर्शनार्थम् । अनिष्ट्वा प्राशने महान्दोषः श्रूयते तस्मात्सूत्रारम्भः । “ हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी ” ( आप० श्रौ० सू० ६ । ३१ । ७ । ) इत्युक्तमन्येषाम् ॥ २ ॥

**वृत्तिः**—सस्यं नवनिष्पन्नं नाश्नीयादाग्रयणेनानिष्ट्वा । यद्याग्रयणेनानिष्टवतो नवनिष्पन्नेनाशनेन विना निर्वाहो न स्यात्तदा तेषां द्रव्याणां तत्कालनिष्पन्नेन सायंप्रातरग्निहोत्रं हुत्वाऽश्नीयात् । ततः काल आगत आग्रयणं कुर्यात् । अग्निहोत्रमहुत्वा नाश्नीयादितिवचनादाग्रयणेनानिष्ट्वाऽप्यग्निहोत्रं हुत्वाऽश्नतो न दोष इति गम्यते । सस्यग्रहणं व्रीह्याद्यन्यदपि यन्नवनिष्पन्नं तस्य सर्वस्य प्रतिषेधार्थम् ॥ २ ॥

**यदा वर्षस्य तृप्तः स्यादथाऽऽग्रयणेन यजेत ॥ ३ ॥**

**दे० भा०**— यदा वर्षस्य निष्पन्नेनेष्टवेज्यायां प्राप्तायां यदा यस्मिन्काले वर्षस्य लोकस्तृप्तः स्यात्तृप्तिं प्राप्नोत्यलं वृष्ट्येति । अथ तदानीमेवाऽऽग्रयणेन यजेत ॥ ३ ॥

**वृत्तिः**—यदा वर्षतृप्तिर्लोकस्य भवति तदाऽऽग्रयणेन यजेत । अनेन प्रकारेण व्रीह्याग्रयणस्य शरत्काल उक्तो भवति ॥ ३ ॥

**अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याऽऽग्रयणेन हि यजत इति।**
**अग्निहोत्रीं वै नानादयित्वा तस्याः पयसा जुहुयात् ॥ ४ ॥**

**दे० भा०**—कस्माद्धेतोः । अपि हि देवा आहुरप्येवं किल देवता आहुस्तृप्तो लोको नूनं वर्षस्याऽऽग्रयणेन यस्माद्यजत इति कस्माच्छरदि श्यामाकैर्व्रीहिभिर्यजेत । अन्येषां तु “ वर्षासु श्यामाकैः शरदि व्रीहिभिः ” । ( आप० श्रौ० सू० ६ । ३१ । १४ । ) इत्युक्तम् । “ व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽयवेभ्यः ” ( आप० श्रौ० सू० ६ । ३१ । १३ ) अग्निहोत्रं वोक्तं नाश्नीयादग्निहोत्रमहुत्वेति । तस्मान्न यवाग्वादिभिरग्निहोत्रं होतव्यं भवति । कामादृतेऽपि हि सर्वाणि नित्यानि काम्यानि चेत्येतस्मादथवा पयसा होम इत्येतस्मिन्पक्ष इदमुच्यते । अग्निहोत्री गौस्तां वै नानादयित्वा तस्यां परिणतेषु वासेषु यत्पयस्तेन पयसा जुहुयात्सायंप्रातर्नित्यकल्पः । वर्षहोमे वेदं भवति । वाशब्दो विकल्पार्थः । यवाग्वादिभिः पयसा वेति वचनात्सस्यभूतानेव । अन्येषामप्युक्तम्—“ अपि वाऽग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा प्राशयित्वा तस्याः पयसा सायंप्रातर्जुहुयात् ” ( आप० श्रौ० सू० ६ । ३० । १४ । ) तस्या इति वचनाद्व्री-

ह्यादिषु विपरिणतेषु यत्पयो भवतीति भवति । तत्र श्यामाकानामग्निहोत्रहोमो न भवति । श्यामाकेष्टयामित्यत्रेष्टिग्रहणाद्व्रीहियवानामेव भवति । अध्वर्यूणामप्युक्तम् " व्रीहिस्तम्बं यवस्तम्बं वा " इति ॥ ४ ॥

**वृत्तिः**—अथाऽऽग्रयणेन यजेतेतीष्टिरेवाऽऽग्रयणशब्देनोक्ता । इदानीमिदमप्युच्यते । अग्निहोत्रहोमार्था धेनुरग्निहोत्रीत्युच्यते । तां व्रीहिश्यामाकयवानामन्यतममाशयित्वा तस्याः पयसा सायंप्रातरग्निहोत्रं जुहुयात् । इष्टिः प्रथमकल्पस्तदसंभवेऽयमनुकल्प इति द्वावेवाऽऽग्रयणकल्पावत्रोच्येते ॥ ४ ॥

**अपि वा क्रिया यवेषु ॥ ५ ॥**

**दे० भा०**—आग्रयणस्यापि वा क्रियाऽक्रिया वा विकल्पः । यवेषु पक्वेषु क्रियावचनाद्यवानामाग्रयणविकल्पः । अग्निहोत्रहोमेष्टिस्थालीपाकादि सर्वेषां पक्षेषु विकल्पः । अन्यथा यवेष्टिरित्युक्तेऽधिकारादग्निहोत्रस्यैव विकल्पः स्यात् । यवानामिति वक्तव्ये यवेष्विति सप्तमीवचनाद्यवेषु निष्पन्नेष्विति वेणुयवेष्वपि विकल्पं दर्शयति कदाचिन्निष्पद्यन्त इति निमित्तसप्तमी प्रयुज्यते । " वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यति " ( आप० श्रौ० सू० ६ । ३१ । ९ । ) ॥ ५ ॥

**वृत्तिः**—यवैराग्रयणस्य क्रिया वा भवेदक्रिया वेति विकल्पः ॥ ५ ॥

**इष्टिस्तु राज्ञः ॥ ६ ॥**

**दे० भा०**—इष्टिरेव राज्ञां भवति । इष्टिरुत्तरे वक्ष्यते । तुशब्दोऽग्निहोत्रादिव्यावृत्त्यर्थः ॥ ६ ॥

**वृत्तिः**—त्रयाणां वर्णानामविशेषेण कल्पद्वये प्राप्ते राज्ञो विशेष उच्यत इष्टिरेव नान्य इति ॥ ६ ॥

**सर्वेषां चैके ॥ ७ ॥**

**दे० भा०**—सर्वेषां वर्णानां चैक इष्टिं मन्यन्तेऽग्निहोत्रहोममग्निहोत्रिणाम् । स्थालीपाकं वा । इष्टिरेवान्येषाम् ॥ ७ ॥

**वृत्तिः**—सर्वेषामपि वर्णानामिष्टिरेवेत्येके मन्यन्ते ॥ ७ ॥

**श्यामाकेष्ट्यां सौम्यश्चरुः ॥ ८ ॥**

**दे० भा०**—श्यामाकानामिष्टिस्तस्यां विधिरुच्यते । अधिकारसूत्रमेतत् । इष्ट्यधिकारेषु पुनरिष्टिग्रहणाच्छ्यामाकानामिष्टिरेव नान्येषामिति । सौम्यश्चरुः । सोमोऽस्य देवता

सौम्यश्चरुर्न पुरोडाशः । चरुर्व्रीहिजः । इष्टयामेव चरुर्भवति नैकाग्निविधाने । अनाहिताग्नेराग्रयणस्थालीपाक इति ॥ ८ ॥

**वृत्तिः**—श्यामाकाग्रयणेष्टयां सोमदेवत्यश्चरुर्भवति । कालो वर्षर्तुः । शाखान्तरे दर्शनात् ॥ ८ ॥

**सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामित्यवान्तरेळाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत् । प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय ॥ ९ ॥**

**दे० भाष्यम्**—सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामित्येते याज्यानुवाक्ये सोमस्य शेषं पौर्णमासेन । अवान्तरेळाया नित्यं जपं नित्यमन्त्रजपमिळे भागमित्युक्त्वा ततः सव्ये पाणौ तामवान्तरेळां कृत्वेतरेण दक्षिणेन पाणिना तामवान्तरेळामभिमर्शयेत् । प्रजापतये त्वेत्येतेन मन्त्रेण जपमुक्त्वेति सिद्धे नित्यवचनाद्यो यत्र नित्यो मन्त्रस्तत्र तं जपित्वेति भवति । अग्निहोत्रहोमादिषु सर्वाधिकारादितरेणेत्युच्यते ॥ ९ ॥

**वृत्तिः**—इतिकाराध्याहारेण सूत्रच्छेदः । नित्यजपशब्देनेळे भागमिति मन्त्र उच्यते । तस्यानित्यत्वे सत्यपि नित्यवचनमेतेन भक्षिण इति विध्यतिदेशे तद्वर्जितस्य प्रापणार्थम् ॥ ९ ॥

**भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा । स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पद इति प्राश्याऽऽचम्य नाभिमालभेतामोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमा म एधि मामृथाम इन्द्रेति ॥ १० ॥**

**दे० भाष्यम्**—इतरेणैव तामवान्तरेळां प्राश्य तत आचम्य नाभिमालभेतामोऽसीत्येनेन मन्त्रेण । अभिमर्शनानन्तरं नाभिमालभेतेत्यनुच्यमाने प्राशनं न प्राप्नोति तस्मात्प्राश्येत्युच्यते । सिद्धस्य प्राशनस्य पुनरालम्भादाचमनलोपे प्राप्त आचम्येत्युच्यते ॥ १० ॥

**वृत्तिः**—स्मृतिप्राप्तस्याऽऽचमनस्य विधानं यस्मिन्देश आचमनं कृतं तस्मिन्नेव देशे स्थितस्य नाभ्यालम्भनसिद्ध्यर्थम् ॥ १० ॥

**एतेन भक्षिणो भक्षान्सर्वत्र नवभोजने ॥ ११ ॥**

**दे० भाष्यम्**—एतेन होतुर्विधानेन भक्षिणो ब्रह्मादयः श्यामाकानिळाभक्षान्भक्षयेयुः । सर्वत्राग्निहोत्रहोम एकाग्निविधाने च नवभोजने चान्नप्राशनेष्ववान्तरेळायामुक्तो

विधिरन्यत्र भक्षे न प्राप्नोति । होतुरुक्तो विधिरप्यन्यस्य न प्राप्नोति । तस्मादतिदेशः क्रियते । इष्ट्यधिकारात्सर्वत्रग्रहणमग्निहोत्रादिष्वपि प्राप्त्यर्थमिळाया अधिकारादन्येष्वपि प्राशनेषु प्राप्त्यर्थं नवभोजन इष्टिर्भवति ॥ ११ ॥

**वृत्तिः**—एतेन विधानेन सर्वभक्षेषु सर्वे भक्षिणः सर्वान्भक्षान्भक्षयेयुः । सर्वत्रवचनं प्रकरणादुत्कर्षार्थम् । नवभोजनवचनं लौकिकेऽपि नवभोजने प्रापणार्थम् । सर्वत्रवचनात्प्रकरणादुत्कृष्टमपि नवभोजनवचनाल्लौकिक एव व्यवतिष्ठते । वैदिकेऽग्निहोत्रहोमे "नवानां सवनीयान्" इत्यत्र च न प्राप्नुयात्तत्रापि प्रापणार्थं भक्षवचनम् ॥ ११ ॥

**अथ व्रीहियवानां धाय्ये विराजौ ॥ १२ ॥**

**दे० भाष्यम्**—अथ व्रीहियवानामाग्रयणं व्रीहिश्यामाकयवानामित्युक्तम् । तत्र श्यामाकेष्टिरुक्ता पूर्वे हि ते पच्यन्ते । अथ व्रीहियवानामिष्टिर्वक्ष्यते । व्रीहीणां यवानां च वक्ष्यमाणेष्टिर्भवति । शरदि व्रीहीणां वसन्ते यवानां समानेष्टिर्धाय्ये अस्यामिष्टौ विराजौ धाय्ये संयाज्ये भवतः ॥ १२ ॥

**वृत्तिः**—अथानन्तरं व्रीहीणां यवानां चाऽऽग्रयणेष्टिरुच्यते । तत्र व्रीह्याग्रयणस्य काल उक्तः । वसन्तो यवाग्रयणस्य । तत्र हि तेषां प्रथमः पाक इति तन्त्रे विशेषाभावादुभयोः सहवचनं तयोर्धाय्ये विराजौ च भवतः । "इतरत्पौर्णमासं तन्त्रं वैराजम्" इत्येतावतैवोक्तेऽपि तावन्मात्रविकारसिद्धौ सत्यां धाय्याविराड्ग्रहणं विकल्पेन वृधन्वतोरपि प्रापणार्थम् ॥ १२ ॥

**अग्नीन्द्राविन्द्राग्नी वा विश्वे देवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी ॥ १३ ॥**

**दे० भाष्यम्**-तस्यामिष्टयां देवताऽग्नीन्द्राविन्द्राग्नी वा विश्वे देवाः । विश्वे देवा द्वितीया सोमस्तृतीया देवता यदि तत्र श्यामाकश्चरुः समानतन्त्रो भवति द्यावापृथिवी च देवता चतुर्थी भवति समानतन्त्रपक्षे ( इन्द्राग्नी विश्वे देवाः सोमो द्यावापृथिवी ) नानातन्त्रपक्षे तृतीया भवति ( इन्द्राग्नी विश्वे देवा द्यावापृथिवी ) द्यावापृथिव्योरनन्तरे सौम्यमित्येके ॥ १३ ॥

**वृत्तिः**—आद्ययोर्विकल्पेनैका देवता गृह्यते । यदि श्यामाकाग्रयणमस्यामेवेष्टौ समानतन्त्रेण क्रियते तदा सोमस्तृतीयो भवति ॥ १३ ॥

**आधाये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्तो विश्वे देवास आगत ये के चज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः प्रपूर्वजे पितरा नव्यसीभिरिति ॥ १४ ॥**

दे० भा०—आघाये सुकर्माण इत्यग्नीन्द्रयोर्याज्यानुवाक्ये इन्द्राग्न्योर्दर्शेष्टयामुक्ते । विश्वे देवासो ये के चेति विश्वेषां देवानाम् । मही द्यौः पृथिवी च नः प्रपूर्वजे इति द्यावापृथिव्योः । इति याज्यानुवाक्याः शेषं पौर्णमासेन ॥ १४ ॥

इति देवत्रातभाष्यम् ।

वृत्तिः—इन्द्राग्न्योः सोमस्य चोक्ता याज्यानुवाक्याः ॥ १४ ॥

इति वृत्तिः ।

इति देवत्रातभाष्यगार्ग्यनारायणवृत्तिभ्यां
समेतमाग्रयणसूत्रम् ।



एवमाग्रयणसूत्रमाश्वलायनीयं यद्यप्यस्ति समाम्नातं तथाऽपि न तावता समाम्नातेनेष्टिः कर्तुं सुशकाऽतश्चेष्ट्यर्थमवश्यमापस्तम्बसूत्रं शरणीकरणीयम् । भवितव्यं च प्रयोगेण प्रयोगशास्त्रानुसारिणाऽतस्तदर्थमत्राऽऽपस्तम्बसूत्रलिखनमप्रासङ्गिकं न भवेदिति तदप्यत्र रुद्रभट्टकृतसूत्रदीपिकया सह प्रस्तावयामः । ततः परं यथाक्रममाग्रयणप्रयोगमन्त्रभाष्यादि लिखामः । तत्र स्वशाखोक्तानाग्रयणानुकल्पानवगन्तुमस्ति स्वप्रयोगशास्त्रापेक्षा । नवीनं चात्र देवत्रातभाष्यं संगृहीतमिति स्वशाखीयसूत्रलिखनमपि सम्यगित्युत्पश्यामः ।

## अथाऽऽपस्तम्बीयाग्रयणश्रौतसूत्राणि प्रारभ्यन्ते ।

नानिष्ट्वाऽऽग्रयणेनाऽऽहिताग्निर्नवस्याश्नीयात् ॥ १ ॥
व्रीहीणां यवानां श्यामाकानामित्यग्रपाकस्य यजेत ॥ २ ॥
अमावास्यायां पौर्णमास्यां वा ॥ ३ ॥
आमावास्यं तन्त्रम् ॥ ४ ॥
सप्तदश सामिधेन्यः ॥ ५ ॥
निर्वपणकाल आग्नेयमष्टाकपालं निर्वपति पुराणानां व्रीहीणाम् ॥ ६ ॥
यथा दान्तेनादान्तं संयुनक्ति तादृक्तदिति विज्ञायते ॥ ७ ॥
येन यज्ञेनेत्सेंत्कुर्यादेव तत्राऽऽग्नेयमष्टाकपालमिति विज्ञायते ॥ ८ ॥
नवानामितराण्यैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा वैश्वदेवं पयसि चरुं
सौम्यं श्यामाकं चरुं द्यावापृथिव्यमेककपालम् ॥ ९ ॥
पुरस्तात्सौम्याद्द्यावापृथिव्यमेके समामनन्ति ॥ १० ॥
निरुप्तं हविरुपसन्नमप्रोक्षितं भवति ।
अथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति ॥ ११ ॥
पुरस्ताद्वा स्विष्टकृतः ॥ १२ ॥
प्रोक्षादि कर्म प्रतिपद्यते ॥ १३ ॥
एकमुलूखलं मुसलं प्रतिवीजं वा ॥ १४ ॥
सर्वेषु हविष्कृदवहननमन्त्रः ॥ १५ ॥
तुषोपवपनम् । १६ ॥
उत्तममोप्य वाचं विसृजते ॥ १७ ॥
एषोऽन्येषां नानाबीजानां समवेतानां कल्पः ॥ १८ ॥
अलंकरणकाल आज्येनैककपालमभिपूरयति ॥ १९ ॥
आविःपृ(ष्पृ)ष्ठं वा कृत्वाऽऽसादयाति ॥ २० ॥
प्रचरणकाल उद्धृत्य बर्हिषदं कृत्वा जुह्वामुपस्तीर्याऽऽ-
धायाऽऽशयमन्वानीयाभिघार्योपांशु प्रचरति ॥ २१ ॥
सर्वहुतमपर्यावर्तयन्नृजु प्रतिष्ठितं न हस्तेन जुहुयात् ॥ २२ ॥
यदि हुतः पर्यावर्तेत स्रुचोऽग्रेण कल्पयेत् ॥ २३ ॥
न पाणिना ॥ २४ ॥
वरे दत्ते कल्पयितव्यः २५ ॥
आधायाभिघार्य पुनर्होतव्य इत्येके ॥ २६ ॥

अपि वा नैककपालं कुर्वीताऽऽज्येन द्यावापृथिवी यजेत ॥ २७ ॥
ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति ।
वासः श्यामाके ॥ २८ ॥
भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति ॥ २९ ॥
सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् ॥ ३० ॥
अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति श्यामाकानाम् ॥ ३१ ॥
सिद्धमिष्टिः संतिष्ठते ॥ ३२ ॥
अपि वाऽमावास्यायां पौर्णमास्यां वाऽऽग्रयणेष्टिमन्वायातयेत् ॥३३॥
अपि वाऽमावास्यां पौर्णमासीं वा नवैर्यजेत ॥ ३४ ॥
अपि वाऽग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा ग्रासयित्वा तस्याः पयसा सायं प्रातर्जुहुयात् ॥ ३५ ॥
अपि वा नवानां यवाग्वा सायं प्रातर्जुहुयात् ॥ ३६ ॥
अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वाऽऽहवनीये जुहुयादाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः ॥ ३७ ॥
अपि वा नवानां चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् ॥ ३८ ॥
एवं यवैर्यजेत ॥ ३९ ॥
तत्राऽऽग्नेयश्यामाकौ न भवतः ॥ ४० ॥
य ऊर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति ।
एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधिमनावचर्कृषुः ।
इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः ।
इति यजमानभागं प्राश्नाति । सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् ॥ ४१ ॥
सिद्धमिष्टिः संतिष्ठते ॥ ४२ ॥
यदि नानातन्त्रां श्यामाकेष्टिं कुर्वीत । श्यामाकानुद्धर्तवा इति संप्रेष्यति ॥ ४३ ॥
तस्याः सप्तदश सामिधेन्यः ॥ ४४ ॥
सद्वन्तावाज्यभागौ विराजौ संयाज्ये ॥ ४५ ॥

त्वमग्ने स प्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञ वितन्वते ।
सोम यास्ते मयोभुव इति सद्वन्तौ ।
प्रेद्धो अग्न इमो अग्न इति विराजौ ॥ ४६ ॥
वासो दक्षिणा दधिमन्थो मधुमन्थो मधुपर्को मधुग्लुन्थो बभ्रुर्वा पिङ्गलः ॥ ४७ ॥
सिद्धमिष्टिः संतिष्ठते ॥ ४८ ॥
हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी ॥ ४९ ॥
वेणुयवानामिष्टिमेके समामनन्ति ॥ ५० ॥
वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यति ॥ ५१ ॥
तस्या एतदेव तन्त्रमेषा देवता ॥ ५२ ॥
आग्नेयी मैत्रावरुणी प्राजापत्या वा ॥ ५३ ॥
स प्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्दशहविषां द्वे स्विष्टकृतः ॥ ५४ ॥
व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽयवेभ्यो दर्शपूर्णमासावेवं यवैरा व्रीहिभ्योऽपि वा । व्रीहिभिरेवोभयत्रैते ह वै सूपचरतमा भवन्तीति बह्वृचब्राह्मणम् ॥ ५५ ॥
वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैर्यथर्तु वेणुयवैरिति विज्ञायते ॥ ५६ ॥

इत्यापस्तम्बीयाग्रयणसूत्राणि समाप्तानि ।



## अथाऽऽपस्तम्बीयाग्रयणश्रौतसूत्राणि सभाष्याणि।

**नानिष्ट्वाऽऽग्रयणेनाऽऽहिताग्निर्नवस्याश्नीयात् ॥ १ ॥**

उक्तः प्रवासः । अथाऽऽग्रयणमारभ्यते । यत्र नवसस्यानामग्रपाको देवान्नीयते तदाग्रयणं नाम नित्यं कर्म। तेनानिष्ट्वा सर्वमेव सस्यं नाश्नीयात् । यदप्ययज्ञियं कोद्रवादि तदपि नाश्नीयादेव नवस्येति सामान्यनिर्देशान्नवानां फलानामनिष्टेऽपीति लिङ्गाच्च । आश्वलायनस्तु प्रागाग्रयणान्नवैर्हुतमग्निहोत्रस्याशनमनुजानाति । यदाह सस्यं नाश्नीयादग्निहोत्रमहुत्वा यदा वर्षस्य तृप्तः स्यादथाऽऽग्रयणेन यजेतेति ॥ १ ॥

**व्रीहीणां यवानां श्यामाकानामित्यग्रपाकस्य यजेत ॥ २ ॥**

यागस्त्वासामेवौषधीनामग्रपाकेण भवति नान्यासामित्यर्थः । अग्रे पच्यत इत्यग्रपाकः । प्रथमपक्वमन्नमिति यावत् ॥ २ ॥

**अमावास्यायां पौर्णमास्यां वा ॥ ३ ॥**

यजेतेत्यनुषङ्गः । यदिष्ट्यादिविधिसिद्धस्यापि पर्वणो विधानमामावास्यतन्त्रत्वादाग्रयणस्याऽऽमावास्यैककालत्वभ्रमनिरासार्थम् । अमावास्यापौर्णमासीशब्दाभ्यां च प्रतिपत्पञ्चदश्योः संधिमानहोरात्र उच्यते तत्रैव तयोर्व्युत्पत्तेः । अतः स एव तावद्विकृतीनां यागकालः । तास्तु प्रकृतिसंनिपाते तदनुरोधेन नेतव्याः । यथोक्तं सत्याषाढभारद्वाजाभ्यां दर्शपूर्णमासयोर्विकृतेश्च संनिपाते तत्र दर्शपूर्णमासौ बलीयांसाविति तत्रेयं विरोधगतिः—यदा संधिमदहरुपवसथं करोति तदा विकृतीष्टिः प्रकृतेरुपवासः । यदा यजनीयं तदा प्रकृत्येष्ट्वा विकृत्या याग इति । सत्याषाढस्तु कात्यायनः प्रकृत्याऽऽह—अमावस्यां पौर्णमासीं वा संस्थाप्य यजेतेति । ऋतुमप्याग्रयणस्योत्तरत्र विधास्यति तेन च पर्वणोः समुच्चयः ॥ ३ ॥

**आमावास्यं तन्त्रम् ॥ ४ ॥**

ऐन्द्राग्नस्य मुख्यत्वादेव सिद्धे पूर्णमासविकाराणां हविषां भूयस्त्वात्पौर्णमासतन्त्रत्वशङ्कापनयनार्थ आरम्भः । तेन च भूयस्त्वान्मुख्यत्वं बलवदिति ज्ञापितं भवति ॥ ४ ॥

**सप्तदश सामिधेन्यः ॥ ५ ॥**

समिन्धनार्था ऋचः सामिधेन्यस्ता आग्रयणे भवन्ति ॥ ५ ॥

**निर्वपणकाल आग्नेयमष्टाकपालं निर्वपति पुराणानां व्रीहीणाम् ॥ ६ ॥**

व्रीहीणां संबन्धिनं व्रीहिमयमित्यर्थः ॥ ६ ॥

यथा दान्तेनादान्तं संयुनक्ति तादृक्तदिति विज्ञायते ॥ ७ ॥

यथा दान्तेन वत्सतरेणादान्तं बलीवर्दं योजयति कर्षकः शाकटिको वा तादृगेव नवानां हविषां पुराणेन सह निर्वापमित्यर्थः । अत एवोपपत्तिवचनाद्दर्शपूर्णमासयोरन्वारम्भस्थाने आग्रयणे पृथगाग्नेयं नेच्छन्ति तत्र दान्तादान्तयोरसंभवादाग्रयणहविष्ट्वाऽऽग्नेयस्य । तत्र च लिङ्गमाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्य इति । भारद्वाजस्तु स्वतन्त्राग्रयणेऽप्याहापि वा नवान्येव निर्वपेदाऽऽग्नेयमिति ॥ ७ ॥

येन यज्ञेनेत्सेत्कुर्यादेव तत्राऽऽग्नेयमष्टाकपालमिति विज्ञायते ॥ ८ ॥

न केवलमाग्रयणे किंतु सर्वत्रैवेष्टिमात्रे येनार्धितुमिच्छति तत्राऽऽग्नेयं मुख्यं समानतन्त्रं च निर्वपेदित्यर्थः ॥ ८ ॥

नवानामितराण्यैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा वैश्वदेवं पयसि चरुं सौम्यं श्यामाकं चरुं द्यावापृथिव्यमेककपालम् ॥ ९ ॥

श्यामाकमपि नवानामेव ॥ ९ ॥

पुरस्तात्सौम्याद्द्यावापृथिव्यमेके समामनन्ति ॥ १० ॥

गतः ॥ १० ॥

निरुप्तं हविरुपसन्नमप्रोक्षितं भवति । अथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति ॥ ११ ॥

निरुप्तं हविरित्यादि गुरुसूत्रकरणमाग्रयणं निरुप्यैता आहुतीर्जुहोतीति ब्राह्मणव्याचिख्यासयेति द्रष्टव्यम् । सूत्रं चैतद्द्वयमाम्नातमाधाने । आज्यानयः शतायुधायेत्यादयो भद्रान्न इत्यन्ताः ॥ ११ ॥

पुरस्ताद्वा स्विष्टकृतः ॥ १२ ॥

नारिष्ठेभ्य उपरिष्टाज्जुहोत्यान्तुकवत् । आग्रयणं निरुप्येति यागानुवादोऽयं न निर्वापमात्रस्येति भावः ॥ १२ ॥

प्रोक्षादि कर्म प्रतिपद्यते ॥ १३ ॥

गतः ॥ १३ ॥

एकमुलूखलं मुसलं प्रतिबीजं वा ॥ १४ ॥

अत्रोलूखलमुसलमात्रग्रहणाद्द्वयोरेवायं नानात्वविकल्पो नान्येषाम् । अतः शूर्पादीन्येकैकानि भवन्ति । सत्याषाढस्त्वाहैकमुलूखलं मुसलं शूर्पं कृष्णाजिनं चेति । प्रदर्शनार्थमेतद्विभूनामित्यन्ये । भारद्वाजस्त्वाह त्रीणि शूर्पाणि प्रयुनक्ति त्रीण्युलूखलानि द्वे दृषदा-

विति । तत्र शूर्पैकत्वे प्रदेशभेदेन निर्वापोद्वापौ विवेकपरापवने तु सामर्थ्यात्पात्रान्तरे चैकैकस्य बीजस्य भवतः । तथा दृषदुपधिवापः पर्यायेण पात्रीकृष्णाजिनयोः प्रस्कन्दनं संवपश्च प्रदेशभेदेनेत्यादि द्रष्टव्यम् । बीजसंस्कारेषु संभवतां तन्त्रत्वमितरेषामावृत्तिश्च यथायथमनुसंधातव्ये । तत्राऽऽह भारद्वाजः—आ तन्त्रिभावादेकैकं बीजमपवर्जयेदिति ॥ १४ ॥

## सर्वेषु हविष्कृदवहननमन्त्रः ॥ १५ ॥

यदाऽवहननार्थो हविष्कृन्मन्त्रस्तदोलूखलैकत्वे च बीजे बीज आवर्तते । यदाऽऽह्वानार्थस्तदाऽप्युलूखलैकत्व आवर्तते भिन्नकालत्वात् । यथा वक्ष्यति हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिर्भिन्नकालेष्विति । भिन्नकालता च तत्र कर्मणः काण्डानुसमयेनैवानुष्ठेयत्वात् । तथा च भारद्वाजोऽपि वैकस्मिन्नुलूखले पूर्वापरमपहन्यात्तत्राऽऽवपनप्रभृतयो विवेचनान्ता मन्त्रा बीजं बीजमभ्यावर्तेरन्निति । यदा तूलूखलभेदस्तदा न हविष्कृदाह्वानमावर्तते कालव्यवेतत्वात्कालाव्यवायश्च तत्र कर्मणां समानजातीयन्यायतः प्रवृत्तिसिद्धेः । तथा चैकैकस्मिन्कृष्णाजिने त्रीण्युलूखलान्यधिवर्तयतीति प्रकृत्य भारद्वाजः सर्वाणि हवींष्योप्य हविष्कृतमाह्वयीति सर्वाण्यवहत्य दृषदुपले समाहन्त्यनुपूर्वं सर्वाणि हवींष्युद्वपति परापुनाति विविनक्तीति ॥ १५ ॥

## तुषोपवपनम् ॥ १६ ॥

तुषोपवपनमपि सर्वेषु बीजेषु भवत्युलूखलाभेदे भेदे च सर्वेषां तुषाणां प्रतिपाद्यत्वात् । तत्र सर्वे तुषाः समाहृत्यान्ततः प्रतिपादनीया विभुत्वात् । भारद्वाजश्चाऽऽह सर्वेषामन्ततस्तुषानुपवपतीति । प्रक्षालनानिनयनमप्येतेनैव व्याख्यातम् ॥ १६ ॥

## उत्तममोप्य वाचं विसृजते ॥ १७ ॥

हविष्कृदावृत्युक्तौ तूत्तमं बीजमोप्य यो हविष्कृत्तेन वाचं विसृजते न पूर्वेणेत्यर्थः । अथ पेषणादीनामपि पूर्ववत्तन्त्रावृत्तिभ्यां प्रवृत्तिः । चरुपुरोडाशधर्माश्च यथायथं प्रत्येतव्याः ॥ १७ ॥

## एषोऽन्येषां नानाबीजानां समवेतानां कल्पः ॥ १८ ॥

अन्येषामप्येकस्मिंस्तन्त्रे समवेतानां नानाबीजानामेकमुलूखलं मुसलमित्यादिरेष एव कल्पः प्रयोगः ॥ १८ ॥

## अलंकरणकाल आज्येनैककपालमभिपूरयति ॥ १९ ॥

अथोद्वासनकाले पाण्यां कोडं कृत्वा तत्र प्रतिष्ठापितमेककपालमलंकरणकालेऽलंकरणमन्त्रेणाभिपूरयति । यथा स निमज्जत्याज्ये तथा कोडं पूरयतीत्यर्थः ॥ १९ ॥

**आविःपृष्ठं वा कृत्वाऽऽसादयति ॥ २० ॥**

अथवा तमाविःपृष्ठं प्रकाशपृष्ठं कृत्वाऽनभिपूर्य ततो हवींष्यासादयतीत्यर्थः । तथा च व्यक्तं प्रदेशान्तरे यथाऽऽविःपृष्ठं कृत्वा व्याहृतिभिर्हवींष्यासादयेदिति । अथापरा व्याख्या— उद्वासनकाले पात्रान्तर उद्वासितमेककपालमाज्येनाभिपूर्याऽऽविःपृष्ठं वा कृत्वा तेनैव पात्रेण सह सादयति । तथा च सत्याषाढोऽप्यन्यस्मिन्पात्र एककपालमुद्वास्येत्यादि ॥ २० ॥

**प्रचरणकाल उद्धृत्य बर्हिषदं कृत्वा जुह्वामुपस्तीर्याऽऽधायाऽऽशयमन्वानीयाभिघार्योपांशु प्रचरति ॥ २१ ॥**

प्रचरणकाले घृतादेककपालमुद्धृत्य बर्हिषि सन्नं कृत्वा ततो जुह्वामुपस्तीर्य तत्र कृत्स्नं पुरोडाशं तूष्णीं निधाय तस्मिन्घृत आशयितस्तदाशयमाज्यं पश्चादानीय सकृदभिघार्योपांशु प्रचरति । द्विरभिघारणमित्येके । तदयुक्तमाशयेनैव चतुरवत्ततासिद्धेः कृत्स्नं वैश्वानरमवदाय द्विरभिघार्येत्यन्यत्र वचनाच्च ॥ २१ ॥

**सर्वहुतमपर्यावर्तयन्नजुं प्रतिष्ठितं न हस्तेन जुहुयात् ॥ २२ ॥**

सर्वहुतमिति विस्पष्टार्थम् । अथवा यथाऽस्कन्नः सर्वो हुतो भवति तथेत्यर्थः । अपर्यावर्तयन्यथा हूयमानो हुतश्च न पर्यावर्तेत तथा स्रुक्पार्श्वेन शनैश्च्यावयेत् ॥ २२ ॥

**यदि हुतः पर्यावर्तेत स्रुचोऽग्रेण कल्पयेत् ॥ २३ ॥**

कल्पयेद्यथास्थानं प्रतिष्ठापयेत् । हुत इति वचनादहुतस्य पर्यावर्तने यद्येककपालः स्कन्देत्पर्यावर्तेतेत्यनेन विधिना कल्पयेत् ॥ २३ ॥

**न पाणिना ॥ २४ ॥**

सहकार्यान्तरापेक्षायामपि न पाणिना कल्पयेत् ॥ २४ ॥

**वरे दत्ते कल्पयितव्यः ॥ २५ ॥**

कल्पयिष्यमाणेऽध्वर्यवे वरो देय इत्यर्थः ॥ २५ ॥

**आधायाभिघार्य पुनर्होतव्य इत्येके ॥ २६ ॥**

अथवा नैव कल्पयितव्यः किंतूद्धृत्य स्रुच्याधायाभिघार्य पुनराश्रावणादिविधिना होतव्यः ॥ २६ ॥

**अपि वा नैककपालं कुर्वीताऽऽज्येन द्यावापृथिवी यजेत ॥ २७ ॥**

उभयोरपि पक्षयोर्वैशेषिकमेव हुतानुमन्त्रणं न प्राकृतमिति दर्शितं याजमाने ॥ २७ ॥

**ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । वासः श्यामाके ॥ २८ ॥**

एकाऽष्टका वक्ष्यते या माघ्याः पौर्णमास्या इति तस्या अर्वाक्तस्याः प्रागेव ये यजमानस्य गोषु वत्सा जाताः पूर्वस्मिन्संवत्सरे तेषां प्रथमजं ददाति । वासः श्यामाके चरौ निमित्तभूते । तयोश्चाभिमर्शनादावूहः प्रकृतावेव दर्शितः ॥ २८ ॥

**भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति ॥ २९ ॥**

प्रत्याम्नानात्प्राकृतमन्त्रो निवर्तते ॥ २९ ॥

**सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् ॥ ३० ॥**

न केवलं यजमानभागमात्रस्यैव किंतु ये यजमानस्यर्त्विजां वा मन्त्रवन्तो भक्षा इडाप्राशित्रादिविषयास्तेषां सर्वेषामपि मन्त्रस्यायं प्रत्याम्नायः स्यात् ॥ ३० ॥

**अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति श्यामाकानाम् ॥ ३१ ॥**

श्यामाकानां यजमानभागं पृथगनेन मन्त्रेण प्राश्नाति सर्वेषां वेत्यादि पूर्ववत् ॥ ३१ ॥

**सिद्धमिष्टिः संतिष्ठते ॥ ३२ ॥**

गतः ॥ ३२ ॥

**अपि वाऽमावास्यायां पौर्णमास्यां वाऽऽग्रयणेष्टिमन्वायातयेत् ॥ ३३ ॥**

अथाऽऽपत्स्वनुग्रहार्थमाग्रयणस्यानुकल्पा उपदिश्यन्ते तेषामुत्तरोत्तरकल्पस्यानुकल्पत्वमापत्तारतम्यानुसारित्वं च बोद्धव्यम् । तत्रानापद्यपि क्वचित्कश्चिद्विकल्पः सामर्थ्याद्व्यवतिष्ठते तं तं विषयविशेषं तत्र तत्र कल्पे प्रदर्शयिष्यामः । तत्र यः कदाचिदापदा पृथगाग्रयणेष्टिं निर्वप्तुं न शक्नुयात्स तां दर्शपूर्णमासयोरन्यतरत्रान्वायातयेत् । तदेकतन्त्रेणाग्रयणहवींष्यनुनिर्वपेदित्यर्थः । तत्र चाज्यान्यादिवैशेषिकस्य विरोधात्कार्यम् । पुराणाग्रयणं तु नेच्छन्ति तच्च दर्शितमेव प्राक् । दक्षिणास्तु समुच्चीयन्ते वासः श्यामाक इति लिङ्गात् । भक्षणे तु नवस्य पृथक्तस्य भक्षणं मन्त्रभेदात् ॥ ३३ ॥

**अपि वाऽमावास्यां पौर्णमासीं वा नवैर्यजेत ॥ ३४ ॥**

पूर्वकल्पस्याप्यशक्तौ दर्शपूर्णमासयोरन्यतरमेव नवैर्यजेत । तत्र तु सर्वस्यापि वैशेषिकस्य निवृत्तिः । अथ यत्राक्रिया दर्शपूर्णमासव्यतिरिक्तेष्टीनां यथा ताभ्यां संवत्सरमिष्ट्वा तत ऊर्ध्वमन्यानि कर्माणि कुरुत इति तत्रायमेव पक्षो व्यवतिष्ठते सामर्थ्यात् ॥ ३४ ॥

**अपि वाऽग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा ग्रासयित्वा तस्याः पयसा सायं प्रातर्जुहुयात् ॥ ३५ ॥**

व्रीह्याग्रयणकाले सव्रीहिकं व्रीहिस्तम्बं यवाग्रयणकाले यवस्तम्बं च प्रातरेव गां ग्रासयित्वा भक्षणप्रपीनायास्तस्याः पयसा सायं जुहुयादग्नेयुः प्रातश्च । तत्र व्रीहियवनियमाच्छ्यामाकानां निवृत्तिः ॥ ३५ ॥

**अपि वा नवानां यवाग्वा सायं प्रातर्जुहुयात् ॥ ३६ ॥**

पूर्वेणायं पक्षो व्याख्यातस्तुल्यविकल्पश्च सर्वत्र ॥ ३६ ॥

**अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वाऽऽहवनीये जुहुयादाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यः । ३७ ॥**

स्विष्टकृच्चतुर्थाभ्य इति वचनाच्छ्यामाकदेवतायाः सोमस्य निवृत्तिः । स्थालीपाक इति वचनाच्च पार्वणप्रकृतिको यजमानकर्तृकश्च । अथ यदा संवत्सरे पवमानहविषामुत्कर्षस्तदाऽयमेव पक्षः सामर्थ्यात् ॥ ३७ ॥

**अपि वा नवानां चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् ॥३८॥**

पुरुषाशनपर्याप्तग्राहिणा महता शरावेण चतुरं निरुप्तमोदनं लौकिकेऽग्नौ पक्त्वा चतसृणामासां देवतानामर्थे चतुरो ब्राह्मणान्भोजयेत् । अथ यदोत्सृष्टाग्निर्यजमानस्तदाऽयमेव पक्षः सामर्थ्यात् ॥ ३८ ॥

**एवं यवैर्यजेत ॥ ३९ ॥**

वसन्ते यवानामग्रपाकेणाप्येवं व्रीह्याग्रयणस्य सानुकल्पस्याऽऽवृता यजेत । तत्र त्वाह भारद्वाजो न यवानामाग्रयणं विद्यत इत्यौडुलोमिरिति । तथाऽपि वाक्क्रिया यवेष्विप्याश्वलायनः ॥ ३९ ॥

**तत्राऽऽग्नेयश्यामाकौ न भवतः ॥ ४० ॥**

तत्र यवाग्रयणे पुराणाग्नेयश्यामाकचरू न भवतः ॥ ४० ॥

**य ऊर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधिमनावचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति यजमानभागं प्राश्नाति । सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् ॥ ४१ ॥**

पूर्ववद्व्याख्या ॥ ४१ ॥

**सिद्धमिष्टिः संतिष्ठते ॥ ४२ ॥**

गतः । ४२ ॥

**यदि नानातन्त्रां श्यामाकेष्टिं कुर्वीत श्यामाकानुद्धर्तवा इति संप्रेष्यति ॥ ४३ ॥**

यो व्रीह्याग्रयणे श्यामाकश्चरुरुक्तस्तं यदि पृथक्तन्त्रं कुर्वीत तदा वर्षासु श्यामाकसस्ये पक्वे सति श्यामाकानुद्धर्तवा उद्धार्याऽऽहरेतेति कर्मकरान्यजमानः संप्रेष्यति । श्यामाकसस्य इत्यपि संप्रैषावयवत्र इति न भणितव्यं विपर्ययस्यैवोत्तरत्र व्यक्तत्वात् । यथा वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यतीति ॥ ४३ ॥

**तस्याः सप्तदश सामिधेन्यः ॥ ४४ ॥**

सप्तदशवचनमन्वाधानादेः सर्वस्यापि विशेषस्य प्रदर्शनार्थम् । तन्त्रं तस्याः पौर्णमासमग्नीषोमीयविकारत्वात् ॥ ४४ ॥

**सद्वन्तावाज्यभागौ विराजौ संयाज्ये ॥ ४५ ॥**

सद्वन्तावस्तिधातुमन्तौ ॥ ४५ ॥

**त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते । सोम यास्ते मयोभुव इति सद्वन्तौ । प्रेद्धो अग्न इमो अग्न इति विराजौ ॥ ४६ ॥**

गतः ॥ ४६ ॥

**वासो दक्षिणा दधिमन्थो मधुमन्थो मधुपर्को मधुग्लुन्थो बभ्रुर्वा पिङ्गलः ॥ ४७ ॥**

वाससः पुनरुपादानमुत्तरैर्विकल्पार्थम् । सर्पिरादिसंयुक्ताः सक्तवो मन्थः । स दध्ना संयुक्तो दधिमन्थः मधुना मधुमन्थः मधुपर्कं गृह्ये व्याख्यास्यति । अनिर्मथितमधुर्नवकोशो मधुग्लुन्थः । मधुमिश्रं गुडमित्यन्ये । बभ्रुः कपिलः । पिङ्गलः पिङ्गाक्षः । एवं द्विरूपो गौरित्यर्थः ॥ ४७ ॥

**सिद्धमिष्टिः संतिष्ठते ॥ ४८ ॥**

गतः ॥ ४८ ॥

**हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी ॥ ४९ ॥**

पूर्वत्रानिष्ट्वाऽऽग्रयणेनेत्यनेन प्रागाग्रयणान्नवस्याशनं प्रतिषिद्धम् । तत्र केषांचिदशनमनेनाभ्यनुज्ञायते । हरितयवा नाम सस्यविशेषास्तथा शाकाः शमीधान्यानि कोशी-

धान्यानि । तेषां जम्ब्वादिफलानां च नवानामनिष्टेऽप्याग्रयणे याथाकाम्यं भक्षणे भवति । ॥ ४९ ॥

**वेणुयवानामित्येके समामनन्ति ॥ ५० ॥**

वेणुयवैराग्रयणं केचिद्विच्छन्ति ॥ ५० ॥

**वेणुयवेषु पक्वेषु वेणुयवानुद्धरेयुरिति संप्रैष्यति ॥ ५१ ॥**

श्यामाकसंप्रैषेणायं व्याख्यातः ॥ ५१ ॥

**तस्या एतदेव तन्त्रमेषा देवता ॥ ५२ ॥**

यच्छ्यामाकेष्टयामुक्तं सर्वत्रास मित्यादि तदेवास्यास्तन्त्रं देवताऽपि तत्रत्यः सोम एवेत्यर्थः ॥ ५२ ॥

**आग्नेयी मैत्रावरुणी प्राजापत्या वा ॥ ५३ ॥**

इष्टिरिति शेषः ॥ ५३ ॥

अथ सर्वस्यैवाऽऽग्रयणस्य हौत्रे विकारमाह—

**स प्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्दश हविषां द्वे स्विष्टकृतः ॥५४॥**

स प्रत्नवदिति परःक्षुद्रस्यानुवाकस्याऽऽदितो द्वे धाय्ये भवतः । ततः पराश्चतस्रो व्रीहियवाग्रयणयोराज्यभागयोरनुवाकस्यादितो द्वे अन्त्यस्य परे द्वे नैमित्ते । श्यामाकेष्ट्यां तु सद्वन्तावित्युक्तम् । आज्यभागयोः पूर्वे । परास्तु दश प्रधानहविषां याज्यानुवाक्यास्ताश्च यथालिङ्गं प्रयोज्या न तु क्रमात् संख्यानियमात् । ततः परे द्वे संयाज्ये ॥ ५४ ॥

**व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽयवेभ्यो दर्शपूर्णमासावेवं यवैरा व्रीहिभ्योऽपि वा व्रीहिभिरेवोभयत्रैते ह वै सुचरतमा भवन्तीति बह्वृचब्राह्मणम् ॥ ५५ ॥**

दर्शपूर्णमासयोर्व्रीहिभिर्यवैर्वेति व्रीहियवयोः सर्वकालं विकल्प उक्तः । इदानीं शाखान्तरीयो विनिवेशः पक्षे यववृत्थ्य प्रदर्श्यते । व्रीह्याग्रयणेष्ट्वा व्रीहिभिरेव दर्शपूर्णमासौ यजेताऽऽयवाग्रयणात् । एवं यवाग्रयणादारभ्याऽऽव्रीह्याग्रयणाद्यवैः । अपि वा व्रीहिभिरेव यजेतोभयोः कालयोः । यत एते सुचरतमाः सुखेनावहन्यन्ते पिष्यन्ते च न यववद्दुःखेन तस्माद्व्रीहिभिरेव नित्यं यजेत । दर्शपूर्णमासावेति वचनादग्निहोत्रार्थेषु तण्डुलेष्वयं नियमः । दर्शपूर्णमासाभ्यामेव तद्विकाराश्च व्याख्याताः ॥ ५५ ॥

**वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैर्यथर्तु वेणुयवैरिति विज्ञायते ॥ ५६ ॥**

यदि नानातन्त्रा श्यामाकेष्टिस्तदाऽनया वर्षासु यजेत । ततः शरदि केवलैर्व्रीहिभिः । समानतन्त्रत्वे तूभयैः शरदि । ततो वसन्ते यवैः । वेणुयवैस्तु यथर्तु यजेत । ते ह्यनियतकालनिष्पत्तयो यस्मिन्नेवर्तौ निष्पद्यन्ते तस्मिन्नेव यजेतेत्यर्थः ॥ ५६ ॥

**इति रुद्रभट्टकृतसूत्रदीपिकया सहितमापस्तम्बीयाग्रयणसूत्रम् ।**

---

## अथाऽऽपस्तम्बसूत्रानुसारि आग्रयणप्रयोगः ।

**यजमानः**—शरद्यमावास्यायां पौर्णमास्यां वा प्रातरग्निहोत्रं हुत्वाऽऽचम्य दर्भेष्वासीनो दर्भान्धारयमाणः पवित्रपाणिः पत्न्या सह

**व्रीहिश्यामाकाभ्यां तन्त्रेणाऽऽग्रयणेन यक्ष्ये ।**

इति प्रथमाग्रयणे संकल्पयेत् । द्वितीयाग्रयणे तु

**आग्रयणेन यक्ष्ये ।**

इति संकल्पयेत् ।

विद्युदसि० । ऋत्विग्वरणम् । अद्य यज्ञाय । आग्रयणीयाय हविः । इति विशेषः ।

**अध्वर्युः**—आमावस्यं तन्त्रं कुर्यात् । सप्तदश सामिधेनीः । वेदं कृत्वा वेदिम् । यस्य कस्यचिद्यज्ञियकाष्ठस्योपवेषम् । अलंकारपरिस्तरणे ।

**यजमानः**—देवा देवेष्विति जपेत् ।

**अध्वर्युः**—पात्रासादनं विशेषयेत् । * एकविंशतिः कपालानि । द्वे स्थाल्यौ स्फ्येन सह द्वंद्वमासादयेत् । + शूर्पत्रयम् । एकमुलूखलमेकं मुसलम् । ⊙ पात्रीत्रयम् । आज्यस्थाल्या सहाऽऽशयपात्रम् । प्रणीताप्रणयनेन सहोत्पवनपात्रम् । प्रातर्दोहपात्रान्वाहार्यस्थालीवर्जमितराणि प्राकृतानि वेषाय वा + इति शूर्पत्रयमादत्ते । निरस्तमिति तन्त्रेण निरसनम् । निर्वपणकाले ' अग्नये जुष्टं निर्वपामि ' इति ◡ पुराणानां व्रीहीणाम् ।

---

* आश्वलायनसूत्राध्यायिनो विशेषं तत्र तत्र टिप्पण्यां प्रदर्शयामः । इतरत्सर्वमापस्तम्बेन समानम् । त्रयोदश कपालानि । + शूर्पद्वयम् । ⊙ पात्रीद्वयम् । + वेषाय त्वामिति । ◡ अग्निदेवत्याऽऽश्वलायनीयानां न सूत्रिता तस्मात्सर्वत्राग्निदेवताकपुराणव्रीहितन्त्रं तेषां नास्ति ।

पवित्रे प्रक्षाल्यान्यस्मिञ्शूर्पे निधाय देवस्य त्वेत्यनुद्रुत्य 'इन्द्राग्निभ्यां जुष्टं निर्वपामि' तथा देवस्य त्वेत्यनुद्रुत्य 'विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामि' इति नवानां व्रीहीणाम्। पवित्रे प्रक्षाल्यान्यस्मिञ्शूर्पे निधाय देवस्य त्वेत्यनुद्रुत्य 'सोमाय जुष्टं निर्वपामि' इति नवानां श्यामाकानाम्। पवित्रे प्रक्षाल्येन्द्राग्निविश्वेदेवनिरुप्तशूर्पे निधाय देवस्य त्वेत्यनुद्रुत्य 'द्यावापृथिवीभ्यां जुष्टं निर्वपामि' इति नवानां व्रीहीणाम्। तत इदं देवानामित्याद्यासादनकालेऽग्ने हव्यꣳ रक्षस्वेन्द्राग्नी हव्यꣳ रक्षेथां विश्वेदेवा हव्यꣳ रक्षध्वं सोम हव्यꣳ रक्षस्व द्यावापृथिवी हव्यꣳ रक्षेथामित्यासादयेत्। अथ लौकिकमाज्यं पञ्चवारं जुह्वां गृहीत्वा पञ्चाज्यानीर्जुहुयात्तत्र मन्त्राः—

शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे।
शतं यो नः शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा॥

**यजमानः**—इन्द्रायेदं न मम।

**अध्वर्युः**—ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति।
तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परिदत्तेह सर्वे स्वाहा॥

**यजमानः**—देवेभ्य इदं न मम।

**अध्वर्युः**—ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितं नो अस्तु।
तेषामृतूनाꣳ शतशारदानां निवात एषामभये स्याम स्वाहा॥

**यजमानः**—ऋतुभ्य इदं न मम।

**अध्वर्युः**—इदुवत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः।
तेषां वयꣳ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम स्वाहा॥

**यजमानः**—वत्सरेभ्य इदं न मम।

**अध्वर्युः**—भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा।
स नो मयोभूः पितो आविशस्व शं तोकाय तनुवे स्योनः स्वाहा॥

**यजमानः**—देवेभ्य इदं न मम।

**अध्वर्युः**—सशूकायामित्यादिप्रोक्षणाभिमन्त्रणान्तं कृत्वा देवस्य त्वेत्यनुद्रुत्य, अग्नये वो जुष्टं प्रोक्षामीन्द्राग्निभ्यां वो जुष्टं प्रोक्षामि विश्वेभ्यो देवेभ्यो वो जुष्टं प्रोक्षामि सोमाय वो जुष्टं प्रोक्षामि द्यावापृथिवीभ्यां वो जुष्टं प्रोक्षामि। शुन्धध्वमित्यारभ्य प्रस्कन्दत्पुरानुमन्त्रणं कृत्वा वायुर्वो विविनक्त्विति विविच्य देवो वः सवितेति मन्त्रेण पात्र्यां पुराणतण्डुलप्रस्कन्दनान्तं कृत्वा नवव्रीह्यवहननार्थमुलूखलं प्रक्षाल्याग्नेस्तनूरसीत्याद्यारभ्याऽऽग्नी-

ध्रप्रैषवर्जं पात्र्यां नवतण्डुलप्रस्कन्दनान्तं श्यामाकावहननार्थमुलूखलं प्रक्षाल्याग्नेस्तनूरसीत्याद्यारभ्याऽऽग्नीध्रप्रैषवर्जं प्रस्कन्दच्छ्यामाकतुषाननुमन्त्र्य समाहृतान्सर्वांस्तुषान्मध्यमपुरोडाशकपाल ओप्य रक्षसां भागोऽसीति निरसनं कृत्वा वायुर्वो विविनक्त्विति विविच्य देवो वः सवितेति मन्त्रेण पात्र्यां श्यामाकान्प्रस्कन्दयित्वा 'अदब्धेन व' इति मन्त्रेण पात्रीस्थान्पुराणनवतण्डुलाञ्छ्यामाकांश्च तन्त्रेणावेक्ष्य त्रिष्फलीकर्तवा इति पत्नीं संप्रेष्यति ।

पत्नी—पुराणनवव्रीहीन्नवश्यामाकान्क्रमेण देवेभ्यः शुन्धध्वमित्यारभ्य देवेभ्यः शुम्भध्वमित्यन्तेन मन्त्रेण सुफलीकृतान्कुर्यात् ।

अध्वर्युः—फलीकरणं प्रज्ञातं निधाय सर्वतण्डुलान्क्रमेण पार्थक्येन प्रक्षाल्य प्रक्षालितमुदकमेकीकृत्य त्रिष्फलीक्रियमाणानामिति निनयनमन्त्रेणोत्करे तन्त्रेण निनीय यथाभागं व्यावर्तध्वमिति नवाञ्श्यामाकवर्जं तण्डुलान्विभज्येदमिन्द्राग्न्योरिदं द्यावापृथिव्योरिति पेषणार्थानिदं विश्वेषां देवानामिति चर्वर्थानभिमृश्य कृष्णाजिनादानादि अणूनि कुरुतादित्यन्तमाग्नेयस्य कृत्वा पुनर्नवानां कृष्णाजिनादानादि कृत्वा देवस्य त्वेत्यनुद्रुत्येन्द्राग्निभ्यां जुष्टमधिवपामि द्यावापृथिवीभ्यां जुष्टमधिवपामि धान्यमसीत्यादि अणूनि कुरुतादित्यन्ते पिष्टलेपं प्रज्ञातं निदध्यात् । आग्नेयस्याष्टौ कपालान्युपधायैन्द्राग्नस्य चाष्टावुपधाय तूष्णीं चत्वार्युपधाय वैश्वदेवसौम्ययोः स्थाल्यौ क्रमेण ध्रुवोऽसीति मन्त्रेणोपधाय द्यावापृथिव्यमेककपालमुपधाय भृगूणामङ्गिरसां तपसा तप्यस्वेति मन्त्रेणैककपाले वेदेनाङ्गारानध्यूह्य मदन्तीरधिश्रयति । पात्र्यां देवस्येत्यनुद्रुत्याग्नये जुष्टं संवपामीति मन्त्रेण पुराणपिष्टं समोप्यान्यस्मिन्पात्रे देवस्य त्वेत्यनुद्रुत्येन्द्राग्निभ्यां जुष्टं संवपामि द्यावापृथिवीभ्यां जुष्टं संवपामीति पिष्टानि समोप्य प्रोक्षणीवत्पिष्टानि क्रमेणोत्पूय श्यामाकतण्डुलांश्चोत्पूय देवस्त्वा सविता पुनात्विति मन्त्रेण पय उत्पूय तूष्णीं वैश्वदेवस्थाल्यामासिच्यापश्चोत्पूय सौम्यस्थाल्यामासिञ्चत्यपः । मखस्य शिरोऽसीत्याग्नेयं पिण्डं कृत्वा पुनर्मखस्य शिरोऽसीत्यनेन नवानां पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्येदमिन्द्राग्न्योरिदं द्यावापृथिव्योरित्यभिमृश्य घर्मोऽसीत्येतेन मन्त्रेणाऽऽग्नेयमधिश्रित्य तेनैव मन्त्रेणैन्द्राग्नमधिश्रित्य वैश्वदेवचरुस्थाल्यां तेनैव मन्त्रेण तण्डुलानोप्य तेनैव मन्त्रेण सौम्यस्थाल्यां श्यामाकतण्डुलानोप्य तेनैव मन्त्रेणैककपालमधिश्रयति । क्रमेण पुरोडाशानामेव प्रथनं कृत्वा सर्वाणि हवींषि त्रिः पर्यग्नि कृत्वाऽऽग्नेयमभिघार्य तूष्णीमितराण्यभिघार्याऽऽग्नेयमैन्द्राग्नं च पात्र्यां प्रतिष्ठाप्याविकृतप्राकृतेन मन्त्रेण वैश्वदेवचरुं सौम्यं चरुं चोद्वास्य ( विहितस्य प्रथनस्याभावादार्द्रो भुवनस्येत्यूहमन्ये वर्णयन्ति । आशयपात्र एककपालमुद्वास्यालंकरणमन्त्रेणाभिपूर्य यथा स पुरोडाश

आज्ये निमज्जति, तथा क्रोडं पूरयतीत्यर्थः। ) प्रियेण नाम्ना प्रियꣳसद आसीदेति मन्त्रेण सर्वाणि हवीꣳष्यपरेण स्रुच आसादयति।

**यजमानः**—यज्ञोऽसीत्याग्नेयमयं यज्ञ इति सर्वाणि यो नः कनीय इत्यैन्द्राग्नं ममाग्ने वर्चे इत्यनुवाकेनाग्निर्होतेति पञ्चहोत्रा चाऽऽसन्नान्यभिमृशेत्। आग्नेय ऐन्द्राग्नश्च प्रकृतिवद्यागः कार्यस्तयोर्यागानुमन्त्रणादि प्राकृतमेव।

**अध्वर्युः**—* " विश्वेभ्यो देवेभ्योऽनुब्रू ३ हि " इति पुरोनुवाक्यां संप्रेष्य विश्वान्देवान्यजेति याज्यां संप्रेष्य वषट्कृते जुहुयात्।

**यजमानः**—विश्वेभ्यो देवेभ्य इदं न मम।

**विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयम्। इति**

वैश्वदेवं हुतमनुमन्त्रयते।

**अध्वर्युः**—सोमायानुब्रू ३ हीति पुरोनुवाक्यां संप्रेष्य सोमं यजेति याज्यां संप्रेष्य वषट्कृते जुहुयात्।

**यजमानः**—सोमायेदं न मम।

**सोमस्याहं देवयज्यया वृत्रहा भूयासम्।**

इति सौम्य हुतमनुमन्त्रयते

**अध्वर्युः**—एककपालप्रचरणकाले घृतादेककपालमुद्धृत्य बर्हिषि सन्नं कृत्वा जुह्वामुपस्तीर्य तत्र कृत्स्नं पुरोडाशं निधायाऽऽशयाज्यं पश्चादानीय सकृदभिघार्य द्यावापृथिवीभ्यामित्युपांशु अनुब्रूहीत्युच्चैः पुरोनुवाक्यां संप्रेष्य द्यावापृथिवी इत्युपांशु यजेत्युच्चैर्वषट्कृते यथा हूयमानो हुतश्च न पर्यावर्तेत यथा स्रुक्पार्श्वेन शनैर्जुहुयात्।

**यजमानः**—द्यावापृथिवीभ्यामिदं न मम।

**द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासम्।**

इत्येककपालं हुतमनुमन्त्रयते।

अत्रैवं संप्रदायविदः संपादयन्ति।

**अध्वर्युः**—शिक्ये पुरोडाशमवस्थाप्य वामहस्तेन शिक्याग्रं धृत्वा दक्षिणहस्तेन स्रुचमधस्ताद्धारयित्वा तया स्रुचा होमं कुर्वन्वामहस्तेन शिक्यमीषदुद्धृत्य वह्नौ स्थापयेदिति। एककपालहोमे सर्वत्रैवं विभावनीयम्। न पार्वणहोमोऽत्रास्ति तथा चातुर्मास्यान्तर्गतवैश्वदेवपर्वोक्ताः प्रसूमयाभिहोमादयो धर्मा न सन्ति सूत्रकारेणासूत्रितत्वादिति ज्ञेयम्। स्विष्टकृतमिष्ट्वाऽऽग्नेयं पुरोडाशं विरुज्येतरद्धविरविरुज्य प्रत्येकं प्राशित्रमवदाय ब्रह्मणे परिहरेत्।

---

* आश्वलायनस्य तु—विश्वान्देवान्सोममुपांशु विद्यात्।

* **ब्रह्मा**—मित्रस्य त्वा चक्षुषा प्रेक्ष इत्यारभ्याद्धेन त्वा चक्षुषाऽवेक्ष इत्यवेक्षणान्तं कृत्वा देवस्य त्वेत्येतेन सावित्रेण मन्त्रेणाङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदायाग्नेस्त्वाऽऽस्येन प्राश्नामीति मन्त्रेण पुराणहविःप्राशित्रं प्राश्याऽऽचम्य तथैन्द्राग्नं प्राशित्रम् ।

भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा ।

स नो मयोभूः पितो वाविशस्व शं तोकाय तनुवे स्योनः ॥

इति प्राश्याऽऽचम्य श्यामाकं गृहीत्वा ।

**आग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः ।**

**शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥**

इति श्यामाकं प्राश्याऽऽचम्य या अप्स्वन्तरित्यादि प्रकृतिवत्सर्वं कुर्यात् ।

= **अध्वर्युः**—इडावदाने पुराणनूतनहविषा क्रमेण पृथक्पृथगिडामवद्येत् । इडाभक्षणकाल इडे भागामेति मन्त्रेण पुराणावदानं प्राश्यैन्द्राग्नं वैश्वदेवं च भद्रान्न इति मन्त्रेण प्राश्याऽऽचम्य श्यामाकमग्निः प्रथमः प्राश्नात्विति मन्त्रेण प्राश्याऽऽचम्य वाग्यत आस्त आ मार्जनात् ।

---

* आश्वलायनब्रह्मा—प्राशित्रभक्षणे मित्रस्य त्वा चक्षुषा प्रतीक्ष इत्यारभ्य कुशेषु प्राग्दण्डं निधायेत्यन्तं प्रकृतिवत्कृत्वा प्राशित्रभागमङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा सव्ये पाणौ कृत्वा प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति मन्त्रेणाऽऽभिमृश्याग्नेष्ट्वाऽऽस्येन प्राश्नामि बृहस्पतेर्मुखेनेति मन्त्रं जपित्वा ।

भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा ।

स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे ॥

इति प्राश्याऽऽचम्य ।

अमोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः ।

स मे जरां रोगमपनुद्य शरीरादमा म एधि मामृथाम इन्द्र ॥

इति नाभिमालभ्य सव्येन त्वेत्यपां निनयनपर्यन्तं प्रकृतिवत् । इळाभक्षणं तु प्रकृतिवदेव । यद्यध्वर्यव " इडामेके पूर्वं समामनन्ति " एतं पक्षमभ्युपगच्छेयुस्तदा ( इडाया ऊर्ध्वं प्राशित्रभक्षणपक्षे ) इळायामेवायं भक्षणविशेषो न प्राशित्रे तदा प्राशित्रभक्षणं तु प्रकृतिवदेव कार्यम् । आग्रयणत्रयपक्षेऽप्येवमेवाऽऽग्रयणद्वयपक्षेऽप्येवमेव कार्यम् ।

= इडाभक्षण आश्वलायनीयस्य यजमानस्य विशेषः—

इळाभागं गृहीत्वा सव्ये पाणौ कृत्वा प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति मन्त्रेण दक्षिणहस्तेनाभिमृश्य—

एवं ब्रह्माऽऽग्नीध्रो यजमानश्च तत आदक्षिणाकालं प्रकृत्या समानं भवति।

**यजमानः**—दक्षिणाकाले वत्सं वासश्चान्तर्वेदि संस्थापयेत्।

*** ब्रह्मा–ब्रह्माणी ब्रह्मणी स्थो ब्रह्मणे वां मा मा हिꣳसिष्टमहुते मह्यꣳ शिवे भवतम्।**

इत्यभिमृशेत्।

**यजमानः**—ब्रध्न पिन्वस्वेत्यारभ्यामुष्मिँल्लोक इत्यन्तमुच्चार्य

**सहस्रधारे उत्से अक्षीयमाणे ते दध्नतुः पृथिवीमन्तरिक्षं दिवं च ताभ्यां वत्सवासोभ्यामतितराणि मृत्युम्।**

इत्यभिमृश्येमे वो वत्सवाससी प्रतिगृह्णीध्वमिति दद्यात्।

**अध्वर्युप्रभृतय ऋत्विजः–देवस्य+ त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणे रुद्राय गाम्॥**

अग्रे प्रकृतिवद्गृहीत्वा पुनर्देवस्य त्वेत्यादि देवि दक्षिण इत्यन्तमुक्त्वाग्ना त्वा कृन्तन्नुपसरत्वा तन्वत वरूत्रयस्त्वा वयन्त्सोमाय वासः। तेनामृतत्वमश्यामीत्यादिप्रकृतिमन्त्रैर्वासो गृह्णीरन्। ततः प्रकृत्या समानम्।

**यजमानः**—संवत्सरपतिराशिषेति मन्त्रेण पुराणभागं प्राश्य भद्रान्नः श्रेय इति मन्त्रेणैन्द्राग्नं वैश्वदेवं चैकीकृत्य प्राश्याऽऽचम्याग्निः प्रथमः प्राश्नात्विति मन्त्रेण श्यामाकं प्राश्याऽऽचामेत्।

तत एककपालोद्वासनेऽध्वर्युयजमानयोः—

**यद्घर्मे कपालमुपचिन्वन्ति वेधसः। पूष्णस्तदप्यव्रत इन्द्रवायू विमुञ्चतामिति जपे विशेषः।**

विष्णुक्रमादि यज्ञशंयुवर्जं ब्राह्मणतर्पणान्तं प्राकृतं कुर्यात्।

---

भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा।
स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे॥
इति प्राश्याऽऽचम्य।
अमोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः।
स मे जरां रोगमपनुद्य शरीरादमा म एधि मामृथाम इन्द्र॥
इति नाभिमालभ्याप उपस्पृशेत्।

* आश्वलायनीयब्रह्मणो वत्सवाससोः स्पर्शो नास्ति। + आश्वलायनीयब्रह्मा दक्षिणाग्रहणं प्रकृतिवत्कुर्यात्।

## अथाऽऽग्रयणहौत्रप्रयोगः ।

होता—" अग्निः पावक ईड्यः " इत्यन्तं प्रकृतिवदेव कुर्यात् । अग्ने

शोचिष्केशस्तमीमहों ३ पृथुपाजा अमर्त्यो घृतनिर्णिक्स्वाहुतः । अग्निर्यज्ञस्य हव्यवों३ तं सबाधो यतः स्रुच इत्थाधिया यज्ञवन्तः ।

आचक्रुरग्निमूतयों ३ समिद्धो अग्न आहुत देवान् ।

इत्यादि प्रकृतिवत्कुर्यात् ।

आवाहनकाले—अग्निमग्न आ३वह । सोममा३वह । ※ इन्द्राग्नी आ३वह ।

( उपांशु+ ) विश्वान्देवान्, आ३वह । ( इत्युच्चैः ) ।

( उपांशु × ) सोमम्, आ३वह ( इत्युच्चैः )

( उपांशु ) द्यावापृथिवी, आ३वह ( इत्युच्चैः ) ।

देवाँ आज्यपाँ आ३वह ।

इत्यादि उत्तमप्रयाजपर्यन्तं प्रकृतिवत्कुर्यात् ।

उत्तमप्रयाजे ये३ यजामहे स्वाहाग्निं स्वाहा सोमं ÷ स्वाहेन्द्राग्नी स्वाहा विश्वान्देवानित्युपांशु = स्वाहेत्युच्चैः सोममित्युपांशु ⌣ स्वाहेत्युच्चैर्द्यावापृथिवी इत्युपांशु स्वाहेत्युच्चैर्देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु वौपट् वार्घ्नौ वृधन्वन्तौ वाऽऽज्यभागौ कुर्यात् । प्रधानयागकाले ।

⊛ इन्द्राग्नी अवसागतमस्मभ्यं चर्षणी सहा । मा नो दुःशंस ईशतो३म् । ये३ यजामहे इन्द्राग्नी गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् । इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैर्वौ३षट् ।

( उपांशु ∽ ) विश्वे देवास आगत शृणुता म इमं हवम् ।

एदं बर्हिर्निषीदतो३म् ।

( उच्चैः ) ये३ यजामहे । ( उपांशु × ) विश्वान्देवान् ।

---

※ आपस्तम्बीययजमानस्यात्र विशेषः । अग्निमा३वह । + उच्चैः । × उच्चैः । ÷ स्वाहाऽग्निम् । = उच्चैः । ⌣ उच्चैः । ⊛ अग्नेर्याज्यापुरोनुवाक्ये प्रकृतिवत् । ∽ उच्चैः । × उच्चैः ।

ये के च ज्मा महि नो अहि माया दिवो जज्ञिरे अपां सधस्थे।

ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवा३ (उच्चैः)वौ ३-षट्।

(उपांशु *) सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे। ताभिर्नोऽविता भवो३म्।

(उच्चैः) ये३ यजामहे (उपांशु +) सोम या ते धामानि दिवि या पृथिव्या या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेळन्राजन्त्सोम प्रति हव्या गृभाय ३ (उच्चैः) वौ३षट्।

(उपांशु) मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।

पिपृतान्नो भरीमभिः ॐ ३।

(उच्चैः) ये३ यजामहे (उपांशु) द्यावापृथिवी—

प्रपूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य।

आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथा३म्। (उच्चैः) वौ३षट्।

अथ स्विष्टकृद्यागे—

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ।

त्वां शश्वन्त उपयन्तु वाजो३म्।

(उपांशु) ये ३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळिन्द्राग्न्योः × प्रिया धामान्ययाट् (उपांशु ❀) विश्वेषां देवानां (उच्चैः) प्रिया धामान्ययाट् (उपांशु ⸸) सोमस्य (उच्चैः) प्रिया धामान्ययाट् (उपांशु) द्यावापृथिव्योः (उच्चैः) प्रिया धामान्ययाट् देवानामाज्यपानामित्यादि० जुषतां हविरिमो अग्ने वीततमानि हव्या जस्रो वक्षि देवतातिमच्छा।

प्रति न ईं सुरभीणि व्यन्तु३ वौ३षट्।

---

* उच्चैः। + उच्चैः। × ळग्नेः प्रिया धामानीन्द्राग्न्योः। ❀ उच्चैः। ⸸ उच्चैः।

इळां प्रकृतिवदुपहूयेळाभक्षण इळे भागमितिमन्त्रं जपित्वाऽऽन्तरेळां सव्ये पाणौ कृत्वा

**' प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय '।**

इति मन्त्रेण दक्षिणपाणिनाऽभिमृश्य दक्षिणहस्ते गृहीत्वा

**भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा ।**

**स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे ।**

इति मन्त्रेण भक्षयित्वाऽऽचम्य

**अमोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः ।**

**स मे जरां रोगमपनुद्य शरीरादमा म एधि मा मृथाम इन्द्र ॥**

इति मन्त्रेण नाभिमालभ्याप उपस्पृशेत् । दक्षिणाग्रहणं प्रकृतिवत् ।

**सूक्तवाके—अग्निरिदं हविरजुषत० कृत । सोम इदं हविरजुषत०कृत । *इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । (+ उपांशु) विश्वे देवाः (उच्चैः) इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत (× उपांशु) सोम इदं हविर्जुषतावीवृधत महो ज्यायोऽकृत । (उपांशु) द्यावापृथिवी इदं हविर्जुषेतामवीवृधेतां महो ज्यायोऽक्राताम् ।**

देवा आज्यपा इत्यादि सर्वमासमाप्ति प्रकृतिवत्कुर्यात् ।

इत्याग्रयणहोत्रप्रयोगः ।

---

## अथाऽऽग्रयणानुकल्पप्रयोगः ।

**यजमानः**—शरद्यमावास्यायां पौर्णमास्यां वाऽऽचम्य

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायमग्निहोत्रं नवसस्यनिष्पन्नय-वाग्वा होष्यामि ।**

नवसस्यं व्रीह्यादिरूपं लौकिकेतिकर्तव्यतयाऽऽवृदवहत्य तण्डुलान्निष्पाद्य पयोवद्यवा-गूमधिश्रित्यावज्वल्य शुद्धोदकं स्रुवेण शान्तिरित्यादिमन्त्रेण प्रतिषिञ्च्याद्यदि प्रतिषेचनमुप-क्रमे कृतं स्यात् । अन्यत्सर्वं पयोहोमवत्कुर्यात् । एवमेव प्रतिपदि प्रातः कुर्यात् । भक्षणं त्वेवं विशिष्यादुभयत्राग्निहोत्रस्रुचं सव्ये पाणौ कृत्वा

---

* अग्निरिदं हवि०कृत । तत इन्द्राग्न्योः । + उच्चैः । × उच्चैः ।

**प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय ।**

इति दक्षिणेन हस्तेन स्रुक्स्थं द्रव्यमभिमृश्य दक्षिणहस्ते प्रथमाहुतिं निधाय

**भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा ।**
**स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे ॥**

इति प्रथमां प्राश्याऽऽचम्य द्वितीयाहुतिं दक्षिणहस्ते निधाय भद्रान्न इति पूर्वोक्त-मन्त्रेण प्राश्याऽऽचम्य

**अमोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः ।**
**स मे जरां रोगमपनुद्य शरीरादमा म एधि मा मृथाम इन्द्र ॥**

इति नाभिमालभ्याप उपस्पृश्य सर्पदेवजनेभ्यः स्वाहेत्यादि नित्याग्निहोत्रवत्सर्वं कार्यम् ।

अथ द्वितीयानुकल्पप्रयोगः ।

**यजमानः—अग्निहोत्रीं गां व्रीहिश्यामाकयवानामन्यतममाशयित्वा तस्याः पयसा सायं प्रातरग्निहोत्रं जुहुयात् ।**

प्राशने तु पूर्वानुकल्पप्रयोगोऽनुसंधेयः । इति ।

इत्याग्रयणानुकल्पप्रयोगः ।

---

## अथैतरेयब्राह्मणोक्तमाग्रयणप्रायश्चित्तम् ।

**तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात्का तत्र प्रायश्चित्ति-रिति सोऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वैश्वानरो अजीजनत्पृष्टो दिवि पृष्टो अग्निः पृथिव्यामित्याहुतिं वाऽऽहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति सा तत्र प्रायश्चित्तिः । ( ऐ० ब्रा० ३२।८) ।**

**सा० भा०**—गृहेषु नवधान्ये समागते सत्याग्रयणेष्टिं कृत्वा पश्चान्नवान्नं भोक्तव्यं तस्या इष्टेरकरणे वैश्वानरगुणयुक्तोऽग्निः पुरोडाशदेवता ॥ ३२ । ८ ॥

अस्याः प्रायश्चित्तेष्टेः प्रयोगोऽध्वर्युसूत्रादवगन्तव्यः । अत्र तु पूर्णाहुतिप्रयोग एव लिख्यते ।

## अथ पूर्णाहुतिप्रयोगः ।

**यजमानः**—प्रातरग्निहोत्रं हुत्वा तमग्निमपवर्ज्य

**आग्रयणमकृत्वा नवान्नप्राशनजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वानरेष्टिस्थाने पूर्णाहुतिं होष्यामि ।**

इति संकल्प्याध्वर्युं वृणुयात् ।

अस्मिन्पूर्णाहुतिहोमेऽध्वर्युं त्वामहं वृणे ।

**अध्वर्युः**—वृतोऽस्मि कर्म करिष्यामीत्युक्त्वा गार्हपत्यादाहवनीयं प्रणीय ( नात्र दक्षिणाग्निप्रणयनम् ) पवित्रे कृत्वा लौकिकमाज्यमुत्पूय जुह्वां चतुर्गृहीतं गृहीत्वा

**अग्नये वैश्वानराय स्वाहा ।**

इत्याहवनीये जुहुयात् ।

**यजमानः**—अग्नये वैश्वानरायेदं न मम ।

आचम्यानेन पूर्णाहुतिहोमेन श्रीभगवानग्निरूपपरमेश्वरः प्रीयताम् । तत आहवनीयाग्नेरपवर्गं कृत्वाऽऽचामेत् ।

इत्याग्रयणप्रायश्चित्तम् ।

---

## अथाऽऽग्रयणमीमांसा ।

तैत्तिरीयब्राह्मणे तावद्राजसूयप्रकरण आग्रयणं समाम्नातमस्ति तत्र दक्षिणात्वेन वत्सवाससी श्रूयेते—

**प्रथमजो वत्सो दक्षिणा वासो दक्षिणा ॥ इति ।**

प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशतः प्राकृतो विध्यन्तोऽप्याग्रयणेष्ट्यां प्राप्नोति । तत्रान्वाहार्यस्य विध्यन्तःपातित्वात् । तथा च प्रकृतौ " यदन्वाहार्यमाहरति " आहरतिरत्र दानार्थकः । एवं च साक्षाद्विकृतावुक्तं दक्षिणाद्रव्यं प्राकृतेनातिदेशप्राप्तेन समुच्चीयत इति समुच्चय एवाभ्युपगन्तव्यः ।

इममेव समुच्चयपक्षं सूत्रयामास बौधायनः—

**अन्वाहार्यमासाद्य प्रथमजं वत्सं ददाति ( बौ० श्रौ० सू० ३ । १२ । १३ )**

सोऽयं समुच्चयः कैश्चन सूत्रकारैर्न सूत्रितस्तदर्थं संशय उपपद्यते समुचयोऽनुष्ठेयो न वा । तदपाकरणायावश्यं मीमांसया भवितव्यमिति भगवाञ्जैमिनिर्दशमलक्षणे सूत्रयांबभूव । तदेवात्र निर्दिशामः—

**वासो वत्सं च सामान्यात् । ( पू० मी० १० । ३ । ३४ ) ।**

**सूत्रार्थः**—आग्रयणे प्रथमजो वत्सो दक्षिणेत्यत्राबाधायान्वाहार्यस्यापि समुच्चय इति पूर्वपक्षे सिद्धान्तमाह—वास इति । यथा पुनराधेयदक्षिणा प्राकृतदक्षिणां बाधत एवं वासो वत्सं च सामान्यादेककार्यकारित्वात् ॥ ४ ॥ अयमर्थविवेकोऽत्रानुसंधेयः । समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चानत्यर्थत्वमनेककार्यत्वनैककार्यत्वाद्वैकृतीभिः प्राकृतीनां बाधः । वासो वत्सं च समानकार्यकारित्वात्प्राकृतीं दक्षिणां बाधत इत्यर्थः ।

**अर्थापत्तेस्तद्धर्मः स्यान्निमित्ताख्याभिसंयोगात् । ( पू० मी० १०।३।३५ ) ।**

**सूत्रार्थः**—तत्रैवान्वाहार्यधर्मा मन्त्रादयो न सन्ति । प्रकृतावन्वाहार्योद्देशेन प्रवृत्तत्वादिति पूर्वपक्षे सिद्धान्तमाह—अर्थेति । अर्थस्य प्राकृतमन्त्राद्युद्देश्य दक्षिणाया आपत्तेः स्थाने पतितत्वात् । तद्धर्मोऽन्वाहार्यधर्मो वासोवत्से स्यात् । वासो दक्षिणेत्यस्य मन्त्रनिमित्तस्य दक्षिणाख्यया दक्षिणानाम्नाऽभिसंयोगात् । संयुक्तत्वात् । वासोवत्समन्वाहार्यधर्मकं स्यादन्वाहार्यकार्यपरिक्रयनिमित्तकदक्षिणाशब्दसंयोगादित्यर्थः । (१०।३।३५)

अनेन न्यायेनान्येऽपि पाकादयो धर्माः प्राप्नुयुरित्याह—

**दाने पाकोऽर्थलक्षणः । ( पू० मी० १० । ३ । ३६ ) ।**

**सूत्रार्थः**—तत्रैव वत्से प्राकृतपाकप्राप्तौ सिद्धान्तमाह—दान इति । अर्थः श्रौतस्तस्य वत्सशब्दस्य लक्षणे लक्षकः पाको भवेदतो दाने दानसाधनवत्से निवर्तत इति शेषः । वत्से पाके सति दक्षिणासाधनं न वत्सस्तस्य नष्टत्वात् । किंतु मांसं वत्सपदस्य लक्षणापत्तिरिति भावः । अयमर्थः—अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहाय पक्त्वा वत्सं तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते । श्रुतं तु वत्सद्रव्यं पाकेन नश्येदश्रुतं च मांसं दीयेत वत्सशब्दो वा मांसलक्षणार्थः स्यात् । नचैतन्न्याय्यम् । तस्मान्न वत्सस्य पाक इति । प्रकृतौ दानेऽन्वाहार्यसिद्ध्यर्थं पाकोऽर्थसिद्ध इह तु न तथेति नासौ कर्तव्यः । ( १० । ३ । ३६ )

**पाकस्य चान्नकारितत्वात् । ( पू० मी० १० । ३ । ३७ ) ।**

**सूत्रार्थः**—अथ वाससि पाकः स्यान्नेति संशये विरोधाभावात्पच्येत प्रयोजनाभावात्त्वपाकः । प्रकृतौ हि दक्षिणाभूतान्नसंपत्त्यर्थकः पाको नादृष्टार्थस्तस्मान्न वाससः पाकः । ( १० । ३ । ३७ )

**तथाऽभिघारणस्य । ( पू० मी० १० । ३ । ३८ ) ।**

**सूत्रार्थः**—अभिघारणमन्वाहार्यधर्मः किं वासोवत्से कर्तव्यं न वेति प्रकृतावदृष्टार्थत्वादिहाविरोधात्कर्तव्यम् । नैवम् । स्वादिमार्थं हि तददृष्टैनैवान्नानामुपकरोति । न च

वासोवत्सयोः स्वादिना प्रयोजनमस्ति । अतोऽभिघारणनिवृत्तिः । ( १० । ३ । ३८ )।

इत्याग्रयणमीमांसा ।

---

## अथाग्निहोत्रप्रायश्चित्तविधायकमैतरेयब्राह्मणं सभाष्यम् ।

अथाग्निहोत्रे वैकल्यनिमित्तं प्रश्नपूर्वकं प्रायश्चित्तं विधीयते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत । इति ।**

**सा० भा०**—अग्निहोत्रार्थं संपादिता गौरग्निहोत्री । सा चोपावसृष्टा दोहनार्थं वत्सेन संयोजिता । ऊर्ध्वं दुह्यमाना सती दोहनमध्ये यद्युपविशेत्तदानीं शास्त्रीयस्य दोहनस्य विनष्टत्वाद्यस्य यजमानस्य तत्राग्निहोत्र्युपवेशने प्रायश्चित्तिरपेक्षिता सा च कीदृशीति प्रश्नः । तामग्निहोत्रीं वक्ष्यमाणेन मन्त्रेणाभिमन्त्रयेतेति प्रायश्चित्तविधिः ।

तत्र मन्त्रं दर्शयति—

**यस्माद्भीषा निषीदसि ततो नो अभयं कृधि ।**
**पशून्नः सर्वान्गोपाय नमो रुद्राय मीढुष इति । इति ।**

**सा० भा०**—हेऽग्निहोत्रि त्वं यस्माद्विरोधिनः शङ्कयमानान्मनसा स्मर्यमाणाद्व्याघ्रादेर्भीषा भयेन निषीदस्युपविशसि ततो भयहेतोः सकाशान्नोऽस्माकमभयं कृधि कुरु । तथा नोऽस्माकं सर्वान्पशून्गोपाय रक्ष मीढुषे सेचनसमर्थाय रुद्राय पशुस्वामिने नमोऽस्तु । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

अभिमन्त्रणादूर्ध्वं तस्या अग्निहोत्र्या मन्त्रान्तरेणोत्थापनं विधत्ते—

**तामुत्थापयेत् । इति ।**

**सा० भा०**—तस्मिन्नुत्थापने मन्त्रमाह—

**उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् ।**
**इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति । इति ।**

**सा० भा०**—अदितिरदीना देवी देवतारूपाऽग्निहोत्र्युदस्थादुत्थितवत्युत्थाय च यज्ञपतौ यजमान आयुरधात्संपादितवती । कीदृश्यग्निहोत्री । इन्द्रमित्रवरुणानामपेक्षितं हविर्भागं कृण्वती संपादयन्ती । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

उत्थापनानन्तरकर्तव्यं दर्शयति—

**अथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैना ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिः । इति ।**

**सा० भा०**—अस्या अग्निहोत्र्या ऊधसि उदकपात्रग्रहणं नाम जलस्योत्क्षेपणं मुखे गृहीत्वा जलं पाययित्वा तादृश्या ब्राह्मणाय दानं यदस्ति सा तत्र वैकल्ये प्रायश्चित्तिरवगन्तव्या ।

अथ दोहनकाले ध्वनिकरणे प्रायश्चित्तं विधत्ते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिः । इति ।**

**सा० भा०**—वाश्येत हम्भा (हुम्बा) रवं कुर्वीत तदानीमेवाग्निहोत्री स्वकीयामशनायां क्षुधां यजमानस्य प्रतिख्याय प्रख्यापनार्थं वाश्यते ध्वनिं करोति । तस्मात्तामग्निहोत्रीं वाश्यमानामन्नमप्यादयेत् । अपिशब्दात्तृणादिकमपि । तच्च भक्षणं क्षुधाशान्त्यै संपद्यते । अन्नं शान्तिहेतुरिति प्रसिद्धम् । सूयवसादित्यादिर्मन्त्रः । हेऽग्निहोत्रि भगवती पूज्या त्वं सूयवसाद्भूयाः । सुष्ठु यवसं तृणं सूयवसं तदत्ति भक्षयतीति सूयवसात् । तादृशी भवेति मन्त्रार्थः । मन्त्रेणान्नमादयेदिति यदस्ति सैव तत्र ध्वनौ प्रायश्चित्तिर्द्रष्टव्या ।

दुह्यमानस्य क्षीरस्याग्निहोत्र्याः स्थानचलनेन भूमौ पतने प्रायश्चित्तं विधत्ते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेत् । इति ।**

**सा० भा०**—स्पन्देत किंचिच्चलेत् । सा चलन्ती यदि तत्र भूमौ स्कन्दयेदीषत्क्षीरं पातयेत्तत्क्षीरं हस्तेन स्पृष्ट्वा मन्त्रं जपेत् ।

तं मन्त्रं दर्शयति—

**यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः ।**
**पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति । इति ।**

**सा० भा०**—अथेदानीं यद्दुग्धं क्षीरं पृथिवीमसृप्त प्राप्नोत् । यच्चौषधीः पतितं तृणजातमत्यसृपदतिशयेन प्राप्नोत् । यदपि तत्क्षीरं बिन्दुरूपमापो भूमिष्ठं जलं प्राप्नोत् ।

आप इति द्वितीयार्थे प्रथमा । तत्सर्वमस्मदीयेषु गृहेष्वघ्न्यायामस्मदीयायां धेन्वां वत्सेष्वस्मदीयेषु मयि मदुदरे वाऽस्तु तिष्ठतु । पृथगन्वयार्थं पयःशब्दावृत्तिः । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

उक्तप्रायश्चित्तादूर्ध्वं होमं विधत्ते—

**तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्यात् इति ।**

**सा० भा०**—तत्र दोहनपात्रे यत्क्षीरं भूमौ पतित्वा परिशिष्टं स्यात्तद्यदि होमायालं पर्याप्तं भवेत्तदानीं तेन जुहुयात् ।

अपर्याप्तावुपायान्तरमाह—

**यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः । इति ।**

**सा० भा०**—यद्यु वै यदि च सर्वं दुह्यमानं क्षीरं सिक्तं भूमौ पतितं स्यात्तदानीमन्यां कांचिद्गामाहूयाऽऽनीय तां दुग्ध्वा तदीयेन क्षीरेण जुहुयात् । यद्यन्याऽपि न लभेत तदानीमप्यग्निहोत्रं न परित्याज्यम् । किंत्वा श्रद्धायै होतव्यम् । आङोऽत्राभिविधिरर्थः । आ श्रद्धायाः श्रद्धासहितं सर्ववस्तुजातं होतव्यं होमयोग्यम् । अयमर्थः—दधियवाग्वादीनां मध्ये येन केनापि द्रव्येण होतव्यम् । सर्वालाभे त्वन्ततः श्रद्धामपि जुहुयात् । अहं श्रद्धां जुहोमीति संकल्प्य श्रद्धाहोमः । अग्निहोत्रस्य नित्यत्वात्सर्वात्मना परित्यागो न युक्त इति ।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**सर्वं वा अस्य बर्हिष्यं सर्वं परिगृहीतं य एवं विद्वानग्निहोत्रं जुहोति ॥ २७ ॥ इति ।**

**सा० भा०**—विदित्वाऽनुष्ठातुरस्य पुरुषस्य सर्वमपि बर्हिष्यं यज्ञयोग्यम् । अतः सर्वं द्रव्यमनेन होमार्थं परिगृहीतं भवति ।

एकादशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य सर्वाण्येव हवींषि दुष्येयुर्वाऽपहरेयुर्वा का तत्र प्रायश्चित्तिरित्याज्यस्यैनानि यथादेवतं परिकल्प्य तयाऽऽज्यहविषेष्ट्या यजेतातोऽन्यामिष्टिमनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः ॥ ४ ॥ इति ।**

**सा० भा०**—पुरोडाशदधिपयोरूपाणि हवींषि सर्वाणीत्युच्यन्ते । आज्यस्य संबन्धीन्येतानि त्रीणि हवींषि तत्तद्देवतामनतिक्रम्य तदनुसारेण परिकल्प्याऽऽज्यहविर्युक्तया

तयेष्ट्या यजेत । इष्ट्वा च तत्तदूर्ध्वमन्यामिष्टिमनुल्बणामन्यूनानधिकां यथाशास्त्रं तन्वीत विस्तारयेत् । यथाशास्त्रमनुष्ठितो यज्ञः पूर्वस्य विकलस्य यज्ञस्य प्रायश्चित्तिः ।

द्वादशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत का तत्र प्रायश्चित्तिरिति सर्वमेवैनत्स्रुच्यभिपर्यासिच्य प्राङुदेत्याऽऽहवनीये हैतां समिधमभ्यादधात्यथोत्तरत आहवनीयस्योष्णं भस्म निरूह्य जुहुयान्मनसा वा प्राजापत्यया वर्चा तद्धुतं चाहुतं च स यद्येकस्मिन्नुन्नीते यदि द्वयोरेष एव कल्पस्तच्चेद्व्यपनयितुं शक्नुयान्निःषिच्यैतद्दुष्टमदुष्टमभिपर्यासिच्य तस्य यथोन्नीती स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिः । इति ।**

**सा० भा०**– अग्निहोत्रार्थं पयो गार्हपत्ये पाकार्थं यदधिश्रितं तद्यदि किंचिदमेध्यं यज्ञानर्हं केशकीटादिकमाप्येत प्राप्नुयात्तदानीमेतद्धविः सर्वमप्यग्निहोत्रहवण्यां स्रुचि साकल्येन सिक्त्वा प्राङ्मुख उदेयोत्थायाऽऽहवनीयं प्रति गत्वा तस्मिन्नेतां नित्यां समिधमादध्यात् । अथानन्तरमाहवनीयस्योत्तरभागे किंचिदुष्णं भस्म ततो निःसार्य तस्मिन्मनसा नित्याग्निहोत्रमन्त्रमनुस्मृत्य वाचा वा प्रजापते न त्वदेतानीति मन्त्रमुच्चार्य जुहुयात् । तदेतद्भस्मन उष्णत्वाद्धुतमपि भवति । अग्निराहित्यादहुतमपि भवति । न केवलमधिश्रित एवामेध्यपात एतत्प्रायश्चित्तं किं तर्हि चतुरुन्नयनावस्थायां यद्येकस्मिन्नुन्नीते यदि वा द्वयोरुन्नीतयोरमेध्यपातस्तदानीमेष एव कल्पः प्रकारः । उन्नयनं नामाग्निहोत्रहवण्यां सेचनम् । तत्केशकीटादिदूषितमग्निहोत्रहवण्यामुन्नीतं यद्यपनेतुं शक्नुयात्तदानीमेतद्दुष्टं निःषिच्य निःसार्य स्थाल्यामवस्थितमदुष्टं क्षीरमग्निहोत्रहवण्यामभिपर्यासिच्य यथोन्नीती स्यादुन्नीती येन प्रकारेण भवति तेन प्रकारेण जुहुयात् । अदुष्टं द्रव्यान्तरमधिश्रयणादिना संस्कृत्य जुहुयादित्यर्थः ।

त्रयोदशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याग्निहोत्रमधिश्रितं स्कन्दति वा विष्यन्दते वा का तत्र प्रायश्चित्तिरिति तदद्भिरुपनिनयेच्छान्त्यै शान्तिर्वा आपोऽथैनद्दक्षिणेन पाणिनाऽभिमृश्य जपति । इति ।**

**सा० भा०**—अग्निहोत्रद्रव्यं गार्हपत्ये पाकार्थमधिश्रितं सत्कदाचित्स्कन्दति स्खलति क्षीरबिन्दुरधः पततीत्यर्थः । विष्यन्दते विशेषेण स्यन्दनं दाहाधिक्येन स्थालीमुखस्योपर्युद्गमनं तत्स्कन्नं विष्यन्दितं वा द्रव्यं दक्षिणेन पाणिना स्पृष्ट्वा वक्ष्यमाणं मन्त्रं जपेत् ।

तं दर्शयति—

**दिवं तृतीयं देवान्यज्ञोऽगात्ततो मा द्रविणमाष्टान्तरिक्षं तृतीयं पितॄन्यज्ञोऽगात्ततो मा द्रविणमाष्ट पृथिवीं तृतीयं मनुष्यान्यज्ञोऽगात्ततो मा द्रविणमाष्ट । इति ।**

सा० भा०– अस्य स्कन्नस्य विष्यन्दितस्य वा पयसस्तृतीयमंशस्वरूपं दिवं स्वर्गलोकमगात्प्राप्नोतु । तेन यज्ञोऽपि देवान्प्राप्नोतु । प्रापणाद्वैकल्यपरिहारे सति मामग्निहोत्रिणं द्रविणमाष्ट धनं प्राप्नोतु । तथैवापरं तृतीय द्रव्यांशस्वरूपमन्तरिक्षमगात् । तेन यज्ञोऽपि पितॄन्प्राप्नोतु । ततः प्रापणान्मां धनं प्राप्नोतु । पुनरप्यपरं तृतीयं द्रव्यांशस्वरूपं पृथिवीमगात् । तेन यज्ञोऽपि मनुष्यानगात् । ततस्तदुभयप्रापणान्मां द्रविणं धनमाष्ट प्राप्नोतु ।

मन्त्रान्तरजपं विधत्ते—

**ययो रोजसा स्कभिता रजांसीति वैष्णुवारुणीमृचं जपति विष्णुर्वै यज्ञस्य यद्दुरिष्टं पाति वरुणः स्विष्टं तयोरुभयोरेव शान्त्यै । इति ।**

सा० भा०–ययोरोजसेत्याद्यृक्सूत्रे[1] पठिता । तस्याश्चतुर्थपादे विष्णू अगन्वरुणा पूर्वहूताविति श्रुतत्वादियं विष्णुवरुणदेवताका यज्ञस्य यद्दुरिष्टमङ्गवैकल्यं तच्छमयित्वा विष्णुः पाति । यज्ञस्य यत्स्विष्टं यथाशास्त्रमनुष्ठितमङ्गं तद्वरुणः पाति । फलप्रतिबन्धनिवारणं तत्प्रतिपालनम् । तस्मादयं जपस्तयोरुभयोर्दुरिष्टस्विष्टयोर्यथोक्तप्रकारेण शान्त्यर्थं संपद्यते ।

उत्तरवाक्यमुपसंहरति —

**सा तत्र प्रायश्चित्तिः । इति ।**

चतुर्दशे प्रश्नोत्तरे दर्शयति–

**तदाहुर्यस्याग्निहोत्रमधिश्रितं प्राङुदायन्स्खलते वाऽपि वा भ्रंशते का तत्र प्रायश्चित्तिरिति स यद्युपनिवर्तयेत्स्वर्गाल्लोकाद्यजमानमावर्तयेदत्रैवास्मा उपविष्टायैतमग्निहोत्रपरीशेषमाहरेयुस्तस्य यथोन्नीती स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिः । इति ।**

सा० भा०–अग्निहोत्रद्रव्यं गार्हपत्येऽधिश्रितं पाकादूर्ध्वमादाय प्राङ्मुख आहवनीयं प्रत्युदायन्नुद्गच्छन्नध्वर्युर्यदा भवति तदानीं तद्द्रव्यं स्खलते यद्वा भ्रंशते । बिन्दुपतनं

---

१ ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ । ( आश्व० श्रौ० सू० ५ । २० )

स्खलनं साकल्येन द्रव्यपतनं भ्रंशः । पुनरप्यग्निहोत्रस्थाल्या द्रव्यं ग्रहीतुं सोऽध्वर्युर्यदि पश्चिमामुखो निवृत्तो भवेत्तदानीं स्वर्गप्राप्तं यजमानं तस्माल्लोकादावर्तयेत् । अतो निवृत्ति-मकृत्वा स्खलनभ्रंशदेश एवोपविष्टायास्मा अध्वर्यवे स्थालीगतमग्निहोत्रद्रव्यशेषमन्ये पुरुषा आहरेयुस्तस्य द्रव्यस्य स्वीकारेणाध्वर्युर्यथोन्नीती स्यात्तथा जुहुयात् । उन्नीतमुन्नयनं स्थालीगतस्य द्रव्यस्याग्निहोत्रहवण्यां चतुर्वारं प्रक्षेपश्चतुरुन्नयतीति श्रुतत्वात् । उन्नयनादि-संस्कारपूर्वकं जुहुयादित्यर्थः ।

पञ्चदशे प्रश्नोत्तरे दर्शयति—

**तदाहुरथ यदि स्रुग्भिद्येत का तत्र प्रायश्चित्तिरित्यन्यां स्रुचमाहृत्य जुहुया-दथैनां स्रुचं भिन्नामाहवनीयेऽभ्यादध्यात्प्राग्दण्डां प्रत्यक्पुष्करां सा तत्र प्राय-श्चित्तिः । इति ।**

**सा० भा०**—स्रुगग्निहोत्रहवणी तद्भेदे स्रुगन्तरेण हुत्वा भिन्नां स्रुचमाहवनीये प्रक्षि-पेत् । तदानीं तदीयो दण्डः प्राच्यामवस्थितस्तदीयं पुष्करं बिलं प्रतीच्यामवस्थितं यथा भवति तथा प्रक्षिपेत् ।

षोडशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याऽऽहवनीये ह्याग्निर्विद्येताथ गार्हपत्य उपशाम्येत्का तत्र प्रायश्चि-त्तिरिति स यदि प्राञ्चमुद्धरेत्प्राऽऽयतनाच्च्यवेत यत्प्रत्यञ्चमसुरवद्यज्ञं तन्वीत यन्मन्थेद्भ्रातृव्यं यजमानस्य जनयेद्यदनुगमयेत्प्राणो यजमानं जह्यात्सर्वमेवैनं सह भस्मानं समोप्य गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत्सा तत्र प्रायश्चित्तिः ॥ ५ ॥ इति ।**

**सा० भा०**—प्रतिदिनमाहवनीयाग्निर्होमोर्ध्वमुपशाम्यति । गार्हपत्याग्निस्तु सर्वदा धार्यते । तस्माद्गार्हपत्यात्तत्तद्धोमकाल आहवनीयार्थमग्निं विहरेदित्येषोऽनुष्ठानक्रमः । एवं सति यदि कदाचिदाहवनीयस्य स्थानेऽग्निरनुपशान्तो विद्येत तदानीं गार्हपत्यश्चोपशाम्येत् । तत्र तस्य वैकल्यस्य परिहाराय पक्षाः पञ्चविधाः संभवन्ति । विद्यमानमाहवनीयं गार्ह-पत्यतया संभाव्य ततोऽपि पूर्वदेश आवहनीयं कर्तुं तस्मात्पूर्वसिद्धाहवनीयात्प्राञ्चमग्नि-मुद्धरेदिति प्रथमः पक्षः । तस्मिन्पक्षे यजमान आयतनात्स्वकीयस्थानात्प्रच्यवेताऽऽह-वनीयस्थानात्प्रच्युतत्वात् । अथ गार्हपत्यार्थं पूर्वसिद्धादाहवनीयात्प्रत्यञ्चमग्निमुद्धरेदिति द्वितीयः पक्षः । तस्मिन्द्वितीयपक्षे यज्ञ एषोऽसुरयज्ञसमानः स्यात् । असुरयज्ञश्च शाखा-न्तरे तानसुरान्प्रकृत्यैवमाम्नायते—‘ त आहवनीयमग्र आदधीत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम् । ’ इति । तदीयदोषोऽपि तत्रैवाऽऽम्नातः ‘ भद्रा भूत्वा परा भवि-

ष्यन्ति ' इति । गार्हपत्यार्थमग्निमथनं कर्तव्यमिति तृतीयः पक्षः । तदानीं विद्यमान आहवनीये तद्विरोधिनोऽग्न्यन्तरस्य मथनाद्यजमानस्य शत्रुमुत्पादयेत् ।' पुनराधानं कर्तुं विद्यमानमाहवनीयमनुगमयेदुपशमयेदिति चतुर्थः पक्षः । तस्मिन्पक्षे विद्यमानस्य विनाशनात्प्राणो यजमानं परित्यजेत् । आहवनीयगतं भस्मसहितं सर्वमप्यग्निं कस्मिंश्चित्पात्रे प्रक्षिप्य नीत्वा गार्हपत्यस्थाने प्रक्षिप्यानन्तरं ततो गार्हपत्यात्प्राञ्चमाहवनीयमुद्धरेदिति पञ्चमः पक्षः । अस्मिन्पक्षे दोषाभावात्सैव प्रायश्चित्तिर्भवति ।

सप्तदशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याग्नावग्निमुद्धरेयुः का तत्र प्रायश्चित्तिरिति स यद्यनुपश्येदुदूह्य पूर्वमपरं निदध्याद्यद्य ( द्य ) नानुपश्येत्सोऽग्नयेऽग्निवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निनाऽग्निः समिध्यते त्वं ह्यग्ने अग्निनेत्याहुतिं वाऽऽहवनीये जुहुयादग्नयेऽग्निवते स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।**

**सा० भा०**—सायंप्रातराहवनीयेऽग्नौ स्थित एव सति पुनरपि गार्हपत्यादग्निं य उद्धरेयुस्तदानीमुद्धृतस्याग्नेः प्रक्षेपात्पूर्वमेव विद्यमानस्याग्नेर्दर्शने तं पूर्वं विद्यमानमग्निमुदूह्य तस्मादाहवनीयस्थानादुद्धृत्य तस्मिन्स्थाने पुनरपरमिदानीमानीतमग्निं निदध्यात् । यदि तु * विद्यमानं नानुपश्येत्तदानीमानीतमग्निं तत्र प्रक्षिप्य पश्चादग्निद्वयमवगत्याग्निवतेऽग्नये देवतायै पुरोडाशं निरुप्य तस्यैते याज्यानुवाक्ये कुर्यात् । अग्निनाऽग्निरिति पुरोनुवाक्या । त्वं ह्यग्ने अग्निनेति याज्या । सोऽयमेकः पक्षः । दर्विहोमत्वाद्याज्यानुवाक्ये परित्यज्याग्नयेऽग्निवते स्वाहेति मन्त्रेणाऽऽहवनीय आज्यं जुहुयादिति द्वितीयः पक्षः ।

अष्टादशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां का तत्र प्रायश्चित्तिरिति सोऽग्नये वीतयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्न आयाहि वीतये यो अग्निं देववीतय इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये वीतये स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।**

**सा० भा०**—अग्न्युद्धरणादूर्ध्वं व्यवस्थितयोराहवनीयगार्हपत्ययोः सतोर्यदि गार्हपत्यगतोऽङ्गार आहवनीये प्रमादात्पतेदाहवनीयगतो वा गार्हपत्ये पतेत्सोऽयं मिथः संसर्गः । तत्र प्रायश्चित्तार्थस्य पुरोडाशस्य वीतिगुणयुक्तोऽग्निर्देवता । अन्यत्पूर्ववद्व्याख्येयम् ।

एकोनविंशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य सर्व एवाग्नयो मिथः संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये**

---

* मलस्थयद्यर्थव्ययार्थप्रदर्शकस्तुशब्दः

विविचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये स्वर्णवस्तोरुषसामरोचि त्वामग्ने मानुषीरीळते विश इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये विविचये स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।

सा० भा०—आहवनीयगार्हपत्यदक्षिणाग्नीनां सर्वेषां परस्परसंसर्गे सति विविचिगुणयुक्तोऽग्निः पुरोडाशदेवता । अन्यत्पूर्ववद्व्याख्येयम् ।

विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयोऽन्यैरग्निभिः संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये क्षामवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अक्रन्ददग्निस्तनयन्निव द्यौरधा यथा नः पितरः परास इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये क्षामवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ६ ॥ इति ।

सा० भा०—यस्याग्निहोत्रिणः संबन्धिन आहवनीयाद्यग्नयोऽन्यदीयैरावहनीयादिभिर्लौकिकाग्निभिर्वा संसृज्येरंस्तस्य प्रायश्चित्तीये पुरोडाशे क्षामवद्गुणयुक्तोऽग्निर्देवता । अन्यत्पूर्ववद्व्याख्येयम् ।

एकविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयो ग्राम्येणाग्निना संदह्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये कुवित्सु नो गविष्टये मा नो अस्मिन्महाधन इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।

सा० भा०—ग्राम्योऽग्निर्महानसादिगतः । स कदाचित्प्रमादेन प्रवृद्धो ग्रामगतानि गृहाणि दहन्नग्निहोत्रशालागतानाहवनीयादीनग्नीन्सम्यग्दहति तदानीं प्रायश्चित्तस्य पुरोडाशस्यं संवर्गगुणयुक्तोऽग्निर्देवता । अन्यत्पूर्ववत् ।

द्वाविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नयेऽप्सुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अप्स्वग्ने सधिष्टव मयो दधे भेधिरः पूतदक्ष इत्याहुतिं वाऽऽहवनीये जुहुयादग्नयेऽप्सुमते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ इति ।

सा० भा०—दिव्याग्निर्वैद्युतः । अशनिपाते सति तदीयेनाग्निनाऽऽहवनीयादीनां संसर्गे प्रायश्चित्तपुरोडाशस्याप्सुमानग्निर्देवता । अन्यत्पूर्ववत ।

त्रयोविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये शुचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्याहुतिं वाऽऽहवनीये जुहुयादग्नये शुचये स्वाहेति सा तत्र प्रायश्चित्तिः। इति।

सा० भा०—प्रेतदहनाय प्रवृत्तोऽग्निः शवाग्निस्तत्संसर्गे पुरोडाशस्य शुचिगुणयुक्तोऽग्निर्देवता। अन्यत्पूर्ववद्व्याख्येयम्।

चतुर्विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नय आरण्येनाग्निना संदह्येरन्का तत्र प्रायश्चित्तिरिति समे वाऽऽरोपयेदरणी वोल्मुकं वा मोक्षयेद्यद्याहवनीयाद्यदि गार्हपत्याद्यदि न शक्नुयात्सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्योक्ते याज्यानुवाक्ये आहुतिं वाऽऽहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ७ ॥ इति।

सा० भा०—दावाग्निररण्यादागत्याग्निहोत्रशालां दहन्नाहवनीयादीन्यदा सम्यग्दहति तदानीं तद्दहनात्पूर्वमेवाग्नीनरणी द्वयोररण्योः सह समारोपयेदेव। तदशक्तौ गार्हपत्याहवनीयादुल्मुकं मोक्षयेत्। सहसोल्मुकमादाय परितो गच्छेत्। समारोपणं वोल्मुकमोचनं वेति पक्षद्वयस्याग्निदाहत्वरया यदा न शक्तिस्तदा संवर्गगुणयुक्तोऽग्निः पुरोडाशदेवता। तदीययाज्यानुवाक्ये च पूर्वमेवाभिहिते।

अष्टाविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये आयाहि तपसा जनेष्वा नो याहि तपसा जनेष्वित्याहुतिं वाऽऽहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति सा तत्र प्रायश्चित्तिः। इति।

सा० भा०—आहवनीयगार्हपत्यदक्षिणाग्नीनां सर्वेषामुपशान्तौ तपस्वज्जनद्वत्पावकवद्गुणत्रययुक्तोऽग्निः पुरोडाशदेवता।

त्रयस्त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्का तत्र प्रायश्चित्तिरिति

सोऽग्नये वरुणायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वं नो अग्ने वरुणस्य विद्वान्स त्वं नो अग्नेऽवमो भवोतीत्याहुतिं वाऽऽहवनीये जुहुयादग्नये वरुणाय स्वाहेति सा तत्र प्रायश्चित्तिः ॥ इति ।

सा० भा०—आहिताग्नेः स्नानमन्तरेणाग्निहोमे वरुणगुणकोऽग्निः पुरोडाशदेवता ।

चतुस्त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि सूतकान्नं प्राश्नीयात्का तत्र प्रायश्चित्तिरीति सोऽग्नये तन्तुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये तन्तुं तन्वन्रजसो भानुमन्विह्यक्षानहो न ह्यतनोत सोम्या इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये तन्तुमते स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।

सा० भा०—आहिताग्नेः सूतकान्नप्राशने तन्तुमद्गुणकोऽग्निर्देवता ।

पञ्चत्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्जीवे मृतशब्दं श्रुत्वा का तत्र प्रायश्चित्तिरीति सोऽग्नये सुरभिमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निर्होता न्यसीदद्य-जीयान्साध्वीमकर्देववीतिं नो अद्येत्याहुतिं वाऽऽहवनीये जुहुयादग्नये सुरभिमते स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।

सा० भा०—आहिताग्निः स्वस्मिञ्जीवत्येव स्वकीयमरणशब्दं यदा द्वेषिमुखाच्छृणुया-त्तदानीं सुरभिमद्गुणयुक्तोऽग्निर्देवता ।

षट्त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षयेऽरा इवेदचरमा अहेवेत्याहुतिं वाऽऽहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिः । इति ।

सा० भा०—आहिताग्निर्योऽस्ति तस्येत्यस्मिन्नर्थे यस्येतिशब्दः प्रयुक्तः । तस्याऽऽहिता-ग्नेर्भार्या वा तद्गृहावस्थिता गौर्वा यमावपत्यद्वयं सह जनयेत्तदानीं मरुत्वद्गुणयुक्तोऽग्निर्दे-वता

एतद्ब्राह्मणोक्तं प्रायश्चित्तं सूत्रोक्तप्रायश्चित्तेन सह विकल्पते । पूर्णाहुतिप्रयोगस्तु अग्रे निर्दिष्टरीत्याऽऽकलनीयः । इष्टिपक्षमनुष्ठातॄणां याज्यापुरोनुवाक्या लिख्यन्ते । अन्यः

प्रयोगस्त्वाश्वलायनीयैः पौर्णमासप्रकृतिकोऽनुष्ठेयः । स तु प्रकृतेरवगन्तव्यः । विस्तरभिया नेह तन्यते ।

इति प्रायश्चित्तविधायकमैतरेयब्राह्मणं सभाष्यम् ।



## अथाग्निहोत्रप्रायश्चित्तसूत्रं सभाष्यं वृत्त्या समेतं च ।

### विध्यपराधे प्रायश्चित्तिः ॥ १ ॥

**दे० भा०**—समाम्नातमग्न्याधेयादिकर्म, द्रव्यमन्त्रक्रियासमुच्चितं कर्म विधिरुच्यते । तस्य विधेरयथाकरणमकरणं वाऽपराधो विधेरपराधो विध्यपराधस्तस्मिन्विध्यपराध उत्पन्ने प्रायश्चित्तं कर्म क्रियते । दोषनिर्हरणार्थमित्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः पञ्चभिः खण्डैरन्वाहिताग्नेः प्रयाणोपपत्तावित्येवमादिष्वमुष्मिन्कर्मणीदं प्रायश्चित्तमिति वक्ष्यति । तेनैव सिद्ध इदं सूत्रं न वक्तव्यम् । तथाऽप्यविद्यमानेऽविज्ञातं प्रायश्चित्तं कर्तव्यम् । अविज्ञाते भूर्भुवः स्वारित्याहवनीय एवेति ॥ १ ॥

**ना० वृ०**—प्रायश्चित्तिरित्यधिकारोऽयमाऽध्यायपरिसमाप्तेः । विधिशब्देन विहितमुच्यते । अपराधोऽन्यथाभावोऽभावो वा विहितस्याकरणेऽन्यथाकरणे च प्रायश्चित्तिः कर्तव्या । प्रायो विनाशश्चित्तिः संधानम् । विनष्टसंधानं प्रायश्चित्तिरित्युक्तं भवति । विध्यपराधे प्रायश्चित्तिरितिवचनादपराधे सति तदर्थतया विहितमस्ति चेत्तदेव कर्तव्यम् । तन्नास्ति चेद्व्याहृतिहोमः कर्तव्यः । "तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या" इति वचनात् । विध्यपराध इतिवचनाद्विधिसंपादने प्रायश्चित्तिर्नास्ति । यथा यदि वाऽस्याग्निहोत्र उपसन्न इत्याद्यन्तरागमननिषेधावसरे यजमानस्यान्तरागमनं विहितं तस्मिन्गमन इत्यर्थः । कालश्च प्रायश्चित्तानां नैमित्तिकत्वान्निमित्तानन्तरं कर्तव्यानीत्युत्सर्गः ॥ १ ॥

### शिष्टाभावे प्रतिनिधिः ॥ २ ॥

**दे० भा०**—शिष्टस्य निर्दिष्टस्य चोदितस्य व्रीह्यादिद्रव्यस्य कर्मणि प्रयुक्तस्य तस्मिन्व्यापन्ने तदेव पुनरानयितव्यम् । तस्य चेत्पुनरभावो भवति व्रीहयो न विद्यन्ते ततस्तत्सरूपमन्यन्नीवारद्रव्यं प्रतिनिधिर्भवति । तत्प्रतिनिधाय तत्कर्म समापयितव्यम् । द्रव्याभावे प्रायश्चित्तं न हूयते प्रतिनिधिरेव भवति । व्रीह्यभावे विद्यमाना अपि यवाः श्रौता न प्रतिनिधीयन्ते । यथा नोष्ट्रीक्षीरेण जुहुयात् । अयज्ञिया वै माषा वरटा कोद्रवाश्चेति । रूपसामान्याभावे कार्यसामान्यप्रतिनिधिर्नीवाराभावे प्रियंग्वादीनामपि पिण्डाः पुरोडाशकार्ये

समाना भवन्ति । सर्पिषोऽभावे पयसा दध्ना वा तत्कार्यं क्रियते यूपाञ्जनं तु तैलेन क्रियते । स्वाम्यग्निदेवताशब्दः कर्मदिग्देशकालेषु प्रतिनिधिर्निवृत्तः । काम्यं कर्म विगुणमफलं भवति । तस्मात्प्रतिनिधिना समाप्य पुनर्यजेत । विगुणमपि नित्यं फलाय भवति तस्मात्प्रतिनिधिना समाप्य न पुनर्यजेत । यवानां सरूपा गोधूमाः । व्रीहीणां सरूपा नीवाराः । खदिरस्य सरूपो बदरः । पलाशस्य निशः । रूपतश्च सामान्यः प्रतिनिधिः कर्तव्यः ॥ २ ॥

**ना० वृ०**—शिष्टं विहितमित्यर्थः । तस्याभावे प्रतिनिधिरुपादातव्यः । अभाव इत्येतावतैव सिद्धे शिष्टग्रहणं यत्कार्यार्थतया यच्छिष्टं तस्य स्वरूपसत्तायामपि तत्कार्याशक्तौ प्रतिनिधिरुपादातव्य इत्येवमर्थम् । अर्थद्रव्ययोर्विरोधेऽर्थो बलीयानित्ययमपि न्यायोऽर्थादत्र व्युत्पादितो भवति । इदं चापरम् । कार्यसामर्थ्ये सति न गुणसंपादनार्थमुपादातव्य इति व्यतिरेकाल्लभ्यते । अत्रापि न्यायान्तरं व्युत्पादितं भवति । द्रव्यगुणविरोधे द्रव्यं बलीय इति । प्रतिनिधीयत इति प्रतिनिधिः । एतदुक्तं भवति—यत्कार्यार्थतया यद्विहितं तस्य तत्कार्याशक्तौ तस्य यत्प्रतिरूपं तत्तत्कार्यकरणायोपादातव्यमिति । अनेन प्रकारेण सदृशप्रतिनिधिरुक्तो भवति । न्यायादेवायमर्थो लभ्यते । शिष्टाभावे प्रतिनिधिरिति वचनस्येदं प्रयोजनं प्रतिनिधिप्रयोगेऽपि विहितस्वरूपापचाराद्विध्यपराधशङ्कानिवृत्त्यर्थम् । अतस्तत्र प्रायश्चित्तिर्न कर्तव्या । विधिशक्तिरेव तत्रैवंरूपा विपरिणमते नात्र विध्यपराधोऽस्तीत्येवमर्थं सूत्रप्रणयनम् ॥ २ ॥

**आहवनीयमवदीप्यमानमर्वाक्शम्यापरासादिदं त एकं पर ऊत एकमिति संवपेद्यदि त्वतीयात् । यदि वाऽन्यस्याग्निषु यजेत । यदि वाऽस्यान्योऽग्निरग्नीन्व्यवेयाद्यदि वाऽस्याग्निहोत्र उपसन्ने चक्रीवच्छ्वा पुरुषो वा विहारमन्तरियादिष्टिः ॥ ३ ॥**

**दे० भा०**—यद्याहवनीयोऽग्निरवदीप्यमानो गच्छेद्बहिर्गच्छेदित्यर्थः । तमाहवनीयमवदीप्यमानमर्वाक्शम्यापरासात् । शम्या शकटलिङ्गं भवति । सा शम्या प्रक्षिप्ता यस्मिन्देशे पतति स देशः शम्यापरासः । तस्माद्देशादर्वागिदं त एकं पर ऊत एकमित्येतयर्चा तमग्निं संवपेत् । संवपनमेकीकरणं सर्वमग्निमाहवनीय एकीभावं कुर्यात् । आहवनीयग्रहणादन्यस्याग्नेर्न भवत्यर्वाक्शम्यापरासादेतद्विधानं तस्मादन्यद्वक्ष्यति यदि त्वतीयाद्यदि शम्यापरासादग्निरतीयात्तथा सतीष्टिः पाथिकृती तां वक्ष्यति । यदिशब्दोऽनित्यभावे तुशब्दोऽधिकृतव्यावृत्त्यर्थः । यदिशब्देऽप्रयुज्यमाने यदि त्वतीयाच्छम्यापरासमग्निस्ततोऽस्मिन्निमित्त इष्टिः । अन्यस्य यजमानस्याग्निषु विपर्यासेन यजेताग्निहोत्रं जुहुयात् । एकस्मिन्नगारेऽग्निहोत्रसमवाये विपर्यासो भवति । एतस्मिन्निमित्त इष्टिं पाथिकृतीं वक्ष्यति सा

कर्तव्या भवति। वाशब्दः समुच्चयार्थः। एतस्मिंश्च निमित्ते पाथिकृती वक्ष्यमाणा भवति यदिशब्दस्य प्रयोजनमेवोक्तं वाशब्दस्य समुच्चयार्थ इति। अस्येत्यनुच्यमानेऽस्याग्नयो न संबध्यन्ते। यदि वाऽस्याग्निरग्नीन्व्यवेयात्। यदि चास्य यजमानस्याग्नीनन्योऽग्निर्लौकिको व्यवेयादन्तरेण गच्छेत्। गत एव तस्मिन्निमित्ते पाथिकृती सा वर्तते। इतः प्रभृतिषु योगेषु यदिशब्दश्चेन्न प्रयुज्यते ततोऽयमर्थो भवत्यग्न्यादिभिश्चेद्व्यवायो भवति। अस्येति यदि नोच्यतेऽस्याग्नयो न संबध्यन्ते। अन्यथाऽस्य वाऽन्यस्य वाऽग्निनाऽन्तरेण व्यवायेऽपि प्रायश्चित्तं स्यात्। यदि वाऽस्याग्निहोत्र उपसन्ने यदि चास्य यजमानस्याग्निहोत्र उपसन्न आहवनीयसमीपे कुशेषूपसादितेत्युपसन्ने हविषि। अस्मिन्काले चेत्कृतव्यवाये प्रायश्चित्तं भवति। चक्रीवच्छ्वा पुरुषो वा पुरुष इत्युक्ते पुरुषः स्त्री वाऽपि भवति। वेतिग्रहणादेतेषां यत्किंचन विहारमन्तरेयादन्तरा मध्येनेयाद्गच्छेत्। तत एतेषु वक्ष्यमाणा पाथिकृतीष्टिर्भवति यदिशब्दोक्तं प्रयोजनम्। अस्येत्युत्तरसूत्रार्थम् ॥ ३ ॥

**ना० वृ०**—आहवनीयस्यैकदेशः समस्तो वा यद्यायतनादुत्सृष्यार्वाक्शम्यापरासादेर्बहिर्गच्छेत्तदा तम् " इदं त एकम् " इत्यायतने संवपेत्। ततः समस्ताभिर्व्याहृतिभिर्होमः कर्तव्यः। अग्नीनां सर्ववेदसंबन्धित्वात्। सर्वत्र विनष्टसंधानं द्विविधम्। आयतनादपगतस्य पुनः प्रक्षेपात्सेन्द्रियं संधानं तत्रैव व्याहृतिभिर्होमादतीन्द्रियम्। अतो यत्र यागो होमो जपो दानं दक्षिणारूपब्राह्मणभोजनं चास्ति तत्र तैरेवातीन्द्रियसंधानांशः सिध्यति। यत्र त्वेषामन्यतमं नास्ति तत्र व्याहृतिहोमेनातीन्द्रियांशसंधानं कर्तव्यम्। आहवनीयग्रहणादग्न्यन्तरे नैतत्प्रायश्चित्तम्। तत्र तूष्णीं प्रक्षिप्य व्याहृतिहोमः कर्तव्यः। तस्य च विध्यपराधत्वात्। दीप्यमानवचनं यावत्प्रायश्चित्तकालं जीवत एवैतत्प्रायश्चित्तं भवति न विस्फुलिङ्गमात्रस्येत्येवमर्थम्। उक्तं शम्यापरासदेशमनतिक्रान्तस्य। अनिक्रान्तस्येदमुच्यते। यदि त्वतीयाच्छम्यापरासदेशमित्यर्थः। अन्यस्याग्निषु यागं कुर्यादस्याग्निष्वन्यो वा यजेत। अस्याग्नीनन्यो वाऽग्निर्व्यवेयात्। यद्यग्निहोत्रद्रव्ये कुशेषूपसादिते चक्रीवद्रथशकटादि श्वा पुरुषो मनुष्यजातिः सर्वाग्नीनां मध्येनातिक्रामेत्। एतेषु निमित्तेष्विष्टिं कुर्यात् ॥ ३ ॥

यदि चाध्वे प्रमीयेत ॥ ४ ॥

**दे० भा०**—यदि चाध्वेऽर्थात्प्रवासे यजमानः प्रमीयेत तस्मिन्निमित्त इष्टिर्भवति। यदि त्वतीयादित्यत आरभ्य यानि निमित्तान्यनुक्रान्तान्येतस्मात्तेषु सर्वेष्विष्टिर्भवति।

अनुयोगं चकारः समुच्चयार्थः कृतस्तस्मात्सर्वेषु निमित्तेषु समानप्रायश्चित्तमिष्टिः सा वक्ष्यते ॥ ४ ॥

अग्निः पथिकृत् ॥ ५ ॥

दे० भा०—तस्यामिष्टौ पथिकृदग्निर्देवता ॥ ५ ॥

ना० वृ०—तस्यामियं देवता । अग्निः पथिकृद्गुणकः ॥ ५ ॥

**वेत्था हि वेधो अध्वन आदेवानामपि पन्थामगन्मेति । अनड्वान्दक्षिणा ॥ ६ ॥**

दे० भा०—वेत्था हि वेधो अध्वन आदेवानामपि पन्थामगन्मेति पथिकृदग्नेर्याज्यानुवाक्ये भवतः। अनड्वान्दक्षिणा भवति । वोढुं समर्थोऽनड्वान्भवति पञ्चवर्षो भवति। अस्या इष्टेः शेषं पौर्णमासेन दोषनिर्हरणार्थं प्रायश्चित्तं तत्रानन्तरं दोषात्कर्तव्यम् । इष्टिस्तु यस्मिन्कर्मणि चोदिता तत्कर्म परिसमाप्यान्ते कर्तव्यम् । कर्ममध्ये न क्रियते । "त्रि वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रततेऽन्यतन्त्रं प्रतायते" इति श्रुतेः । तस्मादेवं क्रियते । आ प्रायश्चित्तसमाप्तेस्त एवाग्नयो भवन्ति तत्संस्कारत्वात्प्रायश्चित्तस्य तदधिकृतं कर्म संस्क्रियते प्रायश्चित्तेन ॥ ६ ॥

ना० वृ०—शकटवहनसमर्थो बलीवर्दोऽनड्वान्दक्षिणा ॥ ६ ॥

व्यवाये त्वनग्निना प्रागिष्टेर्गामन्तरेणातिक्रमयेत् ॥ ७ ॥

दे० भा०—व्यवाये विशिष्टविधिरुच्यतेऽनाग्निनाऽग्निव्यवायं च ज्ञात्वाऽन्येन व्यवाये चक्रीवच्छ्वा पुरुषो भवति तेन व्यवाये प्रागिष्टेः प्राक्प्रायश्चित्तेष्टेर्गामन्तरेणातिक्रमयेद्विहारमध्ये न गां गमयेत् । येन मार्गेण पुरुषादयो गतास्तेन गां गमयित्वाऽनन्तरामिष्टिं कुर्यात्तुशब्दोऽधिकृत्यर्थः । बहूनि कर्माण्यविकृतानि व्यवाये तु विशेष उच्यते नान्येषु । अनग्निनेति वचनादग्निव्यवायेषु न भवति नान्यो विशेषः । प्रागिष्टेरितिवचनादिष्टिश्च भवति विशेषविधिश्च प्रागिष्टेरित्यनुच्यमान इष्टेरपवादः स्यात् ॥ ७ ॥

ना० वृ०—अग्निचक्रीवच्छ्वपुरुषैर्व्यवाय इष्टिरुक्ता । तत्राग्निवर्जितैरन्यैर्व्यवाये गवातिक्रमणं भस्मराज्युदकराजिभ्यां संतानमनुगमयित्वा प्रणयनमुपस्थानामिति विशेषः । श्वव्यवाये त्वयमप्यपरो विशेषः "भस्मना शुनः पदं प्रतिवपेत्" इति । एते पदार्था निमित्तानन्तरमेव कर्तव्याः । ततो वर्तमानं कर्म समाप्येष्टिः कर्तव्या । दर्विहोममध्य एव

विधिः । इष्टिमध्ये तु तदेव तदेव तन्त्रमुपजीव्य तत्रैव पाथिकृती कर्तव्या । प्रागिष्टेरिति वचनं पूर्वोक्ताया अपीष्टेः प्रागेवैते पदार्थाः कार्या इत्येवमर्थम् ॥ ७ ॥

**भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्विचक्रम इति ॥ ८ ॥**

दे० भा०—प्रागिष्टेरिति वचनाच्छुनो व्यवाये विशेषविधिरुच्यते । प्रागिष्टेः शुना व्यवाये भस्मना शुनः पदं मार्गं प्रतिवपेत् । तस्मिन्मार्ग इदं विष्णुर्विचक्रम इत्येतयर्चा भस्म विकिरेत् । अस्मिन्कर्मणि न गामन्तरेणातिक्रमयेद्भस्मना प्रतिवपनमेव । यद्येष समुच्चय इष्टः स्यात् । " भस्मना च शुनः पदं प्रतिवपेदिति ब्रूयात् । चकारं समुच्चयार्थं कुर्यात् ॥ ८ ॥

ना० वृ०—शुनो यानि पदानि तानि भस्मना प्रतिवपेत्पूरयेदित्यर्थः । प्रतिपदं मन्त्रावृत्तिः ॥ ८ ॥

**गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च संतनुयात्तन्तुं तन्वन्रजसो भानुमन्विहीति ॥ ९ ॥**

दे० भा०—गार्हपत्याहवनीययोरन्तरमन्तरालं भस्मराजिर्भस्मरेखोदकराजिरुदकधारोभयोर्भस्मराज्या च संतनुयात् । गार्हपत्यादारभ्य यावदाहवनीयं प्राप्नोति । तन्तुं तन्वन्रजसो भानुमन्विहीत्येतयर्चा भस्मराजिं हरेदेतेनैव मन्त्रेणोदकधारां हरेत् । प्रतिद्रव्यमावर्तयेन्मन्त्रम् । भस्मराज्योदकधारया च संतानं कुर्यात् । ॥ ९ ॥

ना० वृ०—प्रतिराजि मन्त्रावृत्तिः ॥ ९ ॥

**अनुगमयित्वा चाऽऽहवनीयं पुनः प्रणीयोपतिष्ठेत । यदग्ने पूर्वंप्रहितं पदं हि ते सूर्यस्य रश्मीनवाततान । यत्र रयिष्ठामनुसंभवैतां सं नः सृज सुमत्या वाजवत्या । त्वमग्ने सप्रथा असीति च ॥ १० ॥**

दे० भा०—तत आहवनीयमग्निमनुगमयेदुपशमयेत् । तत आहवनीयं पुनर्गार्हपत्यात्प्रणीयोपतिष्ठेत प्रणीतमाहवनीयमुपतिष्ठेत । यदग्न इत्यनेन मन्त्रेण यथासमाम्नातेन त्वमग्ने सप्रथा इत्येतयर्चा चोपतिष्ठेत । तत उपस्थानानन्तरमिष्टिः पाथिकृती क्रियते । चशब्दः समुच्चयार्थः । अत्राऽऽहवनीयस्यानुगमनं दृष्ट्वा ब्रूमः । आ प्रायश्चित्तसमाप्तेस्त एवाग्नयो भवन्तीति ॥ १० ॥

ना० वृ०—राजिभ्यां संतानं कृत्वाऽऽहवनीयमनुगमयेत् । ततः प्रणीयोपतिष्ठेत । " यदग्ने पूर्वम् " " त्वमग्ने सप्रथा असि " इति च द्वाभ्याम् । चशब्दः पर्वान्त

इतिकाराभावात् ' त्वमग्ने सप्रथा असि ' इत्यस्य पूर्वमन्त्रशेषाशङ्कानिवृत्त्यर्थः । इष्टेरपि स एव विहारः । प्रायश्चित्त उत्पन्ने पूर्वप्रवृत्ता अग्नयो नापवृज्यन्त इत्यस्यार्थस्य साधनार्थमुत्तरत्र वक्ष्यति " अनुगमयित्वा चाऽऽहवनीयं पुनः प्रणयेत् । " इति ॥ १० ॥

**अध्वे प्रमीतस्याभिवान्यवत्सायाः पयसाऽग्निहोत्रं तूष्णीं सर्वहुतं जुहुयुरा समवायात् ॥ ११ ॥**

**दे० भा०**—अध्वेऽध्वनि प्रवासे प्रमीतस्य यजमानस्य प्रागिष्टेरित्यनुवर्तते । अभिवान्यो वत्सो यस्या गोः साऽभिवान्यवत्साऽन्यवत्समभिगता तस्याः पयसाऽग्निहोत्रं सायं प्रातस्तूष्णीममन्त्रं सर्वहुतं जुहुयुः । द्वितीयाहुत्यां सर्वमत्र हूयते प्राशनार्थं नावशिष्यते । कियन्तं कालमा समवायादा यजमानेन समवायादा शरीराणामाहर्तोराहृतेषु शरीरेषु पथिकृतीमिष्टिं कृत्वा ततः पितृमेधोक्तेन विधानेन संस्कारं कुर्यात् । अथ समिधं धारयति । " उपरि हि देवेभ्यो धारयति " इति श्रुतेः । होमे प्रजापतिं ध्यायेत् । सर्वहुतमितिवचनात्प्राशनं न क्रियते । प्राशनाभावाच्च निनयनमपि न विद्यते तत्संबन्धात् । उक्तो हि तत्संबन्धः " भक्षयित्वाऽभ्यात्ममपः स्रुचा निनयते " इति । पयसाऽग्निहोत्रमितिवचनात्पयसः संस्कारादि यत्कर्म तदेव क्रियते । पयसः संस्कारात्प्राक्तनं कर्म नात्र विद्यते । परिसमूहनपर्युक्षणे धारानियनादेर्होमादौ लुप्तत्वाद्धोमान्तेऽपि पर्युक्षणं न क्रियते । अध्वर्यूणामप्युक्तम्—**प्राशनोत्सेचनपरिषेचनानि न विद्यन्ते । ( आप०श्रौ० सू० १० । ) ॥ ११ ॥**

**ना० वृ०**—पथिकृतं कृत्वा तस्मिन्नेव विहारे तूष्णींधर्मकमग्निहोत्रं नाम कर्मान्तरमनेन विधीयते । तत्सर्वमग्निहोत्रवत्कर्तव्यम् । सर्वहुतत्वं तु विशेषः । अतो नात्र भक्षोऽस्ति । कालश्च सायं प्रातरेव । साङ्गं प्रधानम् । तूष्णीं प्रधाने प्रजापतिध्यानं कर्तव्यम् । अभिवान्यवत्सा नामान्यवत्सेन दोहनीया । अभिवान्यो वत्सो यस्याः साऽभिवान्यवत्सा । अभिवान्योऽभियाचनीय इत्यर्थः । आ समवायादिति । आ शरीरस्याग्निसंबन्धादित्यर्थः ॥ ११ ॥

**यद्याहिताग्निरपरपक्षे प्रमीयेताऽऽहुतिभिरेनं पूर्वपक्षं हरेयुः ॥ १२ ॥**

**दे० भा०**—यदीत्यनित्यभावे । आहिता यस्याग्नयः स आहिताग्निः । स यद्यपरपक्षे प्रमीयते न जीवतीति । अग्निहोत्राहुतिभिरेनं यजमानं पूर्वपक्षं शुक्लपक्षं हरेयुर्नयेयुः कस्मिन्काले न जीवतीत्याशा भवति तदानीमेव तूष्णीं विहृत्याग्नि पक्षहोमन्यायेनाहानि

तावन्ति चतुर्गृहीतानि गृहीत्वैकां समिधमाधाय सायंहोमं जुहुयादेवं प्रातर्होमः। होमयोस्त्वरा चेत्तदानीमेव प्रातर्होमं हुत्वा ततः सायंहोमं जुहुयात्ततः प्रातर्होमं चामावास्यां च कुर्यादित्यर्थः। आहिताग्निग्रहणादनाहिताग्नेरौपासन एष विधिर्न क्रियते। प्रमीयत इतिवचनात्समीपत उ( त्प्रमीतस्य ) क्तो विधिर्जीवतोऽपि न भवति। जीवति तु पुनर्यथाकालमग्निहोत्रं जुहुयादित्यन्येषामप्युक्तम्। जीवे चेत्पुनः काल इति। पूर्वमेव पूर्वपक्षं हुत एव भवति॥ १२॥

**ना० वृ०**—यद्याहिताग्नेरपरपक्षे मरणाशङ्का स्यात्तदा तस्य पक्षस्यावशिष्टा आहुतीः पक्षहोमन्यायेन हुत्वाऽमावास्यां च कृत्वा कर्मभिरेवमेनं पूर्वपक्षं नयेयुः। आहिताग्निग्रहणमन्या अप्यनाहिताग्नेरपरपक्षाश्रिता या नित्याहुतयस्ताः सर्वा होतव्या इत्येवमर्थम्। एष पूर्वाधिकृतानां कालापकर्षो विधीयते। तेन जीवत एव मरणाशङ्कायामेतदिति गम्यते। मृतस्यानधिकारात्। अत एव पूर्वसूत्रेऽग्निहोत्रनामकं कर्मान्तरमित्युक्तम्॥ १२॥

## शम्यापरासदेशमनतिक्रान्ताग्नीनां प्रायश्चित्तप्रयोगः।

यदा कदा वाऽऽहवनीयस्यैकदेशः समस्तो वा यद्यायतनादूर्ध्वमर्वाक्शम्यापरासाद्वेदेर्बहिर्गच्छेत्तदा तम—

**इदं त एकं पर ऊत एकं तृतीयेन ज्योतिषा संविशस्व।**

**संवेशने तन्व३ श्चारुरेधि प्रियो देवानां परमे जनित्रे॥ ( ऋ० सं० ८। १। १८ )।**

इत्यनयर्चाऽऽयतने संवपेत्। ततस्तस्मिन्नेवाग्नौ

**भूर्भुवः स्वः स्वाहा। प्रजापतय इदं न मम।**

इति स्रुवेणाऽऽज्यं जुहुयात्। अग्न्यन्तरे नैतत्प्रायश्चित्तम्। तत्र तूष्णीमायतने प्रक्षिप्य

**भूर्भुवः स्वः स्वाहा। प्रजापतय इदं न मम।**

इति होमः कर्तव्यः। विस्फुलिङ्गमात्रस्य नैतत्प्रायश्चित्तम्।

**इति शम्यापरासदेशमनतिक्रान्तप्रायश्चित्तप्रयोगः।**

## अथ पाथिकृतीष्टिस्थानीयपूर्णाहुतिप्रयोगः ।

**यजमानः**—विहाराद्बहिराचम्य गार्हपत्यस्य पश्चाद्दर्भेष्वासीनो दर्भान्धारयमाणः पत्न्या सह संकल्पयेत् ।

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पाथिकृतीष्टिस्थाने * पूर्णाहुतिं होष्यामि ।**

**अस्यां पूर्णाहुत्यामध्वर्युं त्वामहं वृणे ।**

**अध्वर्युः—वृतोऽस्मि कर्म करिष्यामि ।**

**यजमानः—अस्यां पूर्णाहुत्यां ब्रह्माणं त्वामहं वृणे ।**

**ब्रह्मा—वृतोऽस्मि कर्म करिष्यामि ।**

**अध्वर्युः**—अग्नीन्परिस्तीर्य ब्रह्माणं यजमानं चाऽऽहवनीयस्य दक्षिणत उपवेश्य पत्नीं च गार्हपत्यस्य दक्षिणत उपवेश्य गार्हपत्यस्योत्तरतो दर्भान्संस्तीर्य स्रुवं जुहूमाज्यस्थालीं प्रोक्षणीं चाऽऽसाद्य प्रोक्षणीपात्रमुत्तानं कृत्वा समावप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ गृहीत्वा दर्भयोर्दात्रस्य मध्ये तृणं वा काष्ठं कृत्वा छित्वा पवित्रे कृत्वा ते पवित्रे प्रोक्षण्यां निधायाप आसिच्य तूष्णीं त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा त्रिः प्रोक्ष्य गार्हपत्य आज्यं विलाप्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्य तूष्णीमुत्पूय ते पवित्रे गार्हपत्ये प्रक्षिप्य दर्भैः स्रुक्स्रुवौ संमृज्य स्थालीं स्रुक्स्रुवौ च गृहीत्वाऽऽहवनीयस्य पश्चात्कुशेषूपसाद्याऽऽहवनीयमिध्मैः प्रज्वाल्य स्रुवेण चतुर्गृहीतं गृहीत्वा दक्षिणं जान्वाच्य यजमानेनान्वारब्धे

**अग्नये पथिकृते स्वाहा ।**

**यजमानः—अग्नये पथिकृत इदं न मम ।**

इति त्यक्त्वाऽऽचम्य

**अनया पूर्णाहुत्या भगवानग्निरूपपरमेश्वरः प्रीयताम् ।**

**इति पूर्णाहुतिप्रयोगः ।**

---

*अग्निहोत्रार्थप्रणीतेष्वग्निषु वक्ष्यमाणनिमित्तेष्वन्यतमे निमित्ते प्राप्ते तस्मिन्नेवाऽऽहवनीये पूर्णाहुतिं जुहुयात् । १ अग्नीनां शम्यापरासदेशातिक्रमणम् । २ अन्याग्निषु यजनम् । ३ अस्याग्निष्वन्यस्य यजनम् । ४ अग्निना व्यवायः । ५ चक्रीवच्छ्वपुरुषैर्व्यवायः । अध्वनि यजमानमरणम् ।

एतेषु निमित्तेषु चक्रीवच्छ्वपुरुषैरग्निहोत्र उपसन्ने व्यवाये पूर्णाहुतिः । एतन्निमित्तं यदा प्राप्नोति तदा पूर्णाहुतिः । इति ।

# अथ व्यवधानप्रायश्चित्तविशेषः ।

चक्रीवता व्यवाये शुना व्यवाये पुरुषेण व्यवाये गार्हपत्याहवनीयावन्तरेण गामतिक्रम्य गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च संतनुयात् । प्रतिराजि मन्त्रावृत्तिः । तत्र मन्त्रः—

**तन्तुं तन्वन्नजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।**
**अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥**

तत आहवनीयमनुगमयित्वा गार्हपत्यात्पुनराहवनीयं प्रणीय तं प्रणीतमाहवनीयमुपतिष्ठेत । तत्र मन्त्राः—

**यदग्ने पूर्वं प्रहितं पदं हि ते सूर्यस्य रश्मीनन्वा ततान ।**
**तत्र रयिष्ठामनुसंभवैता सं नः सृज सुमत्या वाजवत्या ।**
**त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते ॥ इति ।**

शुना व्यवाये त्वयं पुनर्विशेषः—गवातिक्रमणं कृत्वा भस्मराज्युदकराजिभ्यां संतानं कृत्वा शुनः पदं भस्मना पूरयेत् । प्रतिपदं मन्त्रावृत्तिः । मन्त्रस्तु—

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।**
**समूहळमस्य पाँसुरे ॥**

तत आहवनीयानुगमनोपस्थानान्तं पूर्ववत् ।

अत्रैवं क्रमः—१ संकल्पे तत्तन्निमित्तोच्चारः कार्यः । यथा—

**आहवनीयाग्नेः शम्यापरासदेशातिक्रमणनिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमिति ।**

तत्रैवम् । अतिक्रान्ताग्नेरिदं त एकामिति पूर्वोक्तमन्त्रेणाऽऽहवनीयायतने समोप्य ततः संकल्प्य पूर्णाहुतिः ।

**२ अन्याग्निहोमजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमिति ब्रूयात् ।**

सति निमित्ते स्वमग्निं प्रणीय पूर्णाहुतिं जुहुयात् । नास्त्यत्रानुगमनप्रणयने ।

**३ स्वाग्निष्वन्ययजमानकर्तृकहोमजनितप्रत्यवायेत्यादि पूर्ववत् ।**

**४ स्वाग्नीनां मध्येऽन्याग्निव्यवायजनितप्रत्यवायेत्यादि पूर्ववत् ।**

नात्र गवातिक्रमणादि ।

५ अग्निहोत्र उपसन्ने यजमानश्चक्रीवता व्यवाये गामतिक्रमय्य भस्मराज्युदकराजिभ्यां

संतानं कृत्वाऽऽहवनीयमनुगमय्य तं पुनर्गार्हपत्यात्प्रणीयोपस्थाय रजतां त्वेत्याद्यग्निहोत्रं समाप्य तस्मिन्नेवाग्नौ पूर्णाहुतिं जुहुयात् । तत्रैवं संकल्पः–

**अग्नीनां चक्रीवता व्यवायजनितप्रत्यवायेत्यादि पूर्ववत् ।**

६ अग्निहोत्र उपसन्ने शुना व्यवाये शुनः पदानि भस्मना पूरयेत् । ततो भस्मराज्युदकराज्यादि प्राग्वत् । अत्र गवातिक्रमणं नास्तीति भाष्यकृदस्तीति वृत्तिकृत । वयं तु गवातिक्रमणं कार्यमित्युत्पश्यामः ।

७ पुरुषेण व्यवाये गवातिक्रमणादि प्राग्वत् ।

**ततस्तज्जनितप्रत्यवायेत्यादि पूर्ववत् ।**

भस्मना पदप्रपूरणं तु शुन एव नान्यस्येति ज्ञेयम् ।

इति व्यवधानप्रायश्चित्तविशेषः ।



**व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैः ॥ १३ ॥**

**दे० भा०**—व्यापत्तौ हि हविषामग्निहोत्रीयपयोयवाग्वादीनां हवींषि केशनखकीटपतङ्गैः संस्पृष्टानि व्यापन्नानि भवन्ति । केशा वालाश्छिन्नानि नखानि कीटोऽमेध्यः क्रिमिर्यः पिण्डान्न च गच्छति स कीटो भवति । पतङ्गः कृमिरेव यः पक्षी भवति। मक्षिका मशकांश्च वर्जयित्वैतैः संस्पृष्टानि व्यापन्नानि भवन्ति ॥ १३ ॥

**ना० वृ०**—अन्यैर्वा बीभत्सैरिति वचनात्केशादिभिरपि बीभत्सैरेवेति गम्यते। तेनाच्युतकेशनखसंसर्गो न दोषाय भवति । तथा कीटपतङ्गैरेवाप्यमेध्यनिवासिभिः संसर्गः । अन्यैर्वा बीभत्सैरित्यनेन च वमनादीन्युच्यन्ते । एतैः संसर्गे हवींषि व्यापन्नानीत्यर्थः । बीभत्सैरित्येतावतैवास्मिन्नर्थे सिद्धे केशादीनां पृथग्ग्रहणं केशादिसंसर्गे स्मृत्युक्तः शुद्ध्युपायो यः स हविषि न भवतीत्येवमर्थम् ॥ १३ ॥

**सिक्तानि च ॥ १४ ॥**

**दे० भा०**—यानि च सिक्तानि क्षरणं प्राप्तानि द्रव्यमाज्यादि क्षरतीति यावत् ॥ १४ ॥

**ना० वृ०**—सिक्तानि च हवींषि दुष्टानि भवन्ति । द्रवेषु क्षरणमिति ॥ १४ ॥

**अग्निहोत्रमधिश्रितं स्रवदभिमन्त्रयेत गर्भं स्रवन्तमगदमकर्माग्निर्होता पृथिव्यन्तरिक्षम् । यतश्चुतदग्नावेव तन्नाभिप्राप्नोति निर्ऋतिं परस्मादिति ॥ १५ ॥**

**दे० भा०**—अग्निहोत्रद्रव्यमधिश्रितं स्रवद्यदि स्थालीमूलतः स्रवेत्तदाऽभिमन्त्रयेत । तदग्निहोत्रद्रव्यमभिमृश्य मन्त्रयेत् । गर्भं स्रवन्तमिति यथासमाम्नातेन मन्त्रेणाभिमृश्य यजेत ॥ १५ ॥

**ना० वृ०**—अधिश्रितमग्निहोत्रद्रव्यं स्थालीमूलेन यदि स्रवति तदाऽनेनाभिमन्त्रयेत गर्भं स्रवन्तमिति ॥ १५ ॥

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्तामभिमन्त्रयेत यस्माद्भीषा निषीदसि ततो नो अभयं कृधि । पशून्नः सर्वान्गोपाय नमो रुद्राय मीढुष इति ॥ १६ ॥**

**दे० भा०**—यस्य यजमानस्याग्निहोत्री गौरुपावसृष्टा वत्सेन संसृष्टोपावसृष्टा भवत्युपावसृष्टा दुह्यमाना यद्युपविशेत्ततस्तां गामभिमन्त्रयेताभिमृश्य मन्त्रं ब्रूयात् । आध्वर्यवमिदं कर्म भवति । यद्यपि स्वयमग्निहोत्रं जुहोति तथाऽप्यध्वर्युरेवैनत्कुर्यात् । दुह्यमानेत्ये-

तावतैव सिद्ध उपावसृष्टेतिवचनात्सवत्सा गौर्भवतीति दर्शयति । अवत्साऽपि दुह्यते । वत्सोऽत्र नाधिकृतस्तस्मात्तामभिमन्त्रयेतेत्युच्यते ॥ १६ ॥

**ना० वृ०**—उपावसृष्टा दुह्यमानेत्युभयं विशेषणं वत्ससंसर्गाद्या दोहनपरिसमाप्तेरेतस्य प्रापणार्थम् । यस्येति ब्राह्मणानुवादः ॥ १६ ॥

**अथैनामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् ।**
**इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ १७ ॥**

**दे० भा०**—अभिमन्त्रणानन्तरं गामुत्थापयेत्–उदस्थादिति यथासमाम्नातेन मन्त्रेण । एनामिति पुनरुच्यते । एनामिति वीप्सार्था ( या ) द्वयोर्दुग्धेन वासेऽग्निहोत्रं जुहुयादित्यत्र प्रयोजनम् ॥ १७ ॥

**ना० वृ०**—अथेति संबन्धार्थं योऽभिमन्त्रयते स एवोत्थापनमपि कुर्याद्यजमान एवोभयं कुर्याद्धोमकर्ता वेत्येवमर्थम् ॥ १७ ॥

**अथास्या ऊधसि च मुखे चोदपात्रमुपोद्गृह्य दुग्ध्वा ब्राह्मणं पाययेद्यस्याभोक्ष्यन्स्याद्यावज्जीवं संवत्सरं वा ॥ १८ ॥**

**दे० भा०**—अथास्या उत्थापनादनन्तरमस्या गोरूधः स्तनाधिष्ठानं तस्मिन्नूधसि च मुखे चोदपात्रमुदकपात्रमुप समीप उद्गृह्य धारयित्वा ततो गां दुग्ध्वा ब्राह्मणं पाययेत्तेन जुहुयात् । ब्राह्मणपानमेव होम इत्यर्थः । यस्य ब्राह्मणस्यान्नमभोक्ष्यं स्यादभोक्ष्यं भवति कियन्तं कालमुत यावज्जीवं संवत्सरं वा । अथशब्दोऽनुक्रमार्थः । अस्या इति वीप्सायां तदेव प्रयोजनम् । द्विश्चकारकरणादपुनरुक्तं ब्राह्मणवाक्यत्वात् । दुग्ध्वा तत्पयो ब्राह्मणं पाययेदित्युक्तम् । ब्राह्मणाय दद्यादिति यावज्जीवं संवत्सरं वेति संवत्सरविकल्पार्थो वाशब्दः ॥ १८ ॥

**ना० वृ०**—ऊधः स्तनप्रदेशः । अग्निहोत्र्या ऊधसि च मुखे च समीप उदपात्रमुद्गृह्य ततस्तां दुग्ध्वा तत्पयो ब्राह्मणं पाययेत् । यस्यान्नं यावज्जीवं न भोक्ष्यमाणो भवेत् । य एतत्पयः पिबति तस्यान्नं यावज्जीवं नाश्नीयादित्यर्थः । संवत्सरं वा नाश्नीयात् । अत्र कालानाम्नानाद्यावज्जीवमित्युक्तवानाचार्यः । संवत्सरं व्रतं नात्येतीति सामान्यानुवादात्संवत्सरवचनम् । अथशब्दः पूर्ववत् ॥ १८ ॥

**वाश्यमानायै यवसं प्रयच्छेत्सूयवसाद्भगवती हि भूया इति ॥ १९ ॥**

**दे० भा०**—उपावसृष्टा दुह्यमाना वा यदि वाश्येत गौः शब्दं करोति तत एतद्भवत्यधिकारादन्यस्मिन्वा काले वाश्यमानायै यवसं तृणं प्रयच्छेत् । यवसं तृणानि भवन्ति । अद्धि तृणमिति मन्त्रे दर्शनात् ॥ १९ ॥

**ना० वृ०**—एतदप्युपावसर्गादिदोहनपर्यन्तमेव । वक्ष्यमाणायै शङ्कयन्त्यै यवसो ( सं ) भक्षः ॥ १९ ॥

**शोणितं दुग्धं गार्हपत्ये संक्षाप्यान्येन जुहुयात् ॥ २० ॥**

**दे० भा०**—शोणितं दुग्धं भवति शोणितं चेद्दुह्यति गौस्तद्दुग्धं गार्हपत्येऽग्नौ संक्षाप्य क्षामं कृत्वाऽन्येन पयसा जुहुयात् । गार्हपत्यग्रहणान्न लौकिकेऽग्नावहोमार्थत्वाल्लौकिके प्राप्ते गार्हपत्ये संक्षाप्य तेनैव जुहुयादिति प्राप्तेऽन्येन जुहुयादित्युच्यते ॥ २० ॥

**ना० वृ०**—संक्षाप्येति यावत्तन्निरवशेषं भवति तावद्दाहयित्वाऽन्येन द्रव्येण जुहुयात् । अत्रान्यवचनात्पूर्वत्र तामन्यां वा पुनर्दुग्ध्वा पयसैव जुहुयात् । तत्रैवं ब्राह्मणम्—अथैनां ब्राह्मणाय दद्यात् । इति । तद्दानं पूर्वोक्तेन सूत्रोक्तेन पयसः प्रमानेन विकल्प्यते । दानपक्षेऽन्यामेव दुग्ध्वा जुहुयात् ॥ २० ॥

**भिन्नं सिक्तं वाऽभिमन्त्रयेत समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत । अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपताविति ॥ २१ ॥**

**दे० भा०**—स्थाली भिद्यते सिच्यते वा पयसो यद्भिन्नं यच्च सिक्तं तदभिमृश्य मन्त्रं जपेत् । समुद्रं व इत्येतं यथासमाम्नातम् । सर्वद्रव्याणामेव विधिरविशेषवचनात् ॥ २१ ॥

**ना० वृ०**—स्थालीभेदेन विक्षिप्तं द्रव्यं भिन्नमित्युच्यते । विक्षेपात्तद्दुष्टं भवति । सिक्तमिति स्कन्नमुच्यते । स्कन्दने च यावत्स्कन्नं तावन्मात्रं दुष्टं भवति न पात्रगतं भिन्नसिक्तानि चेति वचनात् । तद्भिन्नं सिक्तं च समुद्रमित्यनेनाभिमन्त्रयेत । ततोऽपोऽभ्यवहरेयुः । "अपोऽभ्यवहरेयुः" इत्यस्य वचनस्य प्रकरणविशेषाभावाद्व्यापन्नहविर्मात्रमेवास्य विषय इति भेदन इदमेवास्मिन्प्रकरणे सर्वावस्थे पयस्यन्येषु द्रव्येषु च । स्कन्ने पुनः पयसि वक्ष्यमाणत्वादिदमभिमन्त्रणं द्रव्यान्तरेष्वेवेति स्थितम् ॥ २१ ॥

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः । पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति ॥ २२ ॥**

**दे० भा०**—यस्य यजमानस्याग्निहोत्री गौर्योपावसृष्टा वत्सेनोपसृष्टा दुह्यमाना यदि स्पन्देत चलेत्सा गौः स्पन्दनाद्यत्पयस्तत्र दुह्यमानं यदि स्कन्दयेत्तदभिमृश्य जपेत्—यदद्य दुग्धमित्यनेन यथासमाम्नातेन मन्त्रेण । यस्येति वचनाद्यद्यपि यजमानो जुहोत्यन्योऽपि दोहनादि करोति । उपसृष्टेतिवचनात्सवत्सा भवतीति दर्शयति । दोग्धा तु

पुरुषो यः स्कन्दयेत्तस्मै तन्न भवति । तस्योक्तमेव भिन्नं सिक्तं वाऽभिमन्त्रयेत । समुद्रं व इति तत्रेति वचनाद्दो(द्दु)हत एवैतस्यापराध एतत्प्रायश्चित्तम् । दोहनादूर्ध्वं पुरुषापराधे पूर्वोक्तमेव ॥ २२ ॥

**ना० वृ०**—दोहनावस्थायां पयसि (सः) स्कन्दने "यदद्य" इत्यनेनाभिमृशन् स्कन्नमभिमन्त्रयेत "समुद्रं वः" इत्यनेनास्य तुल्यकार्यत्वात् । अत एव समुद्रं व इत्यत्राप्यभिमर्शनं कर्तव्यम् । स्कन्नमभिमन्त्रयेत । दोहनावस्थायां स्कन्न एतद्भवतीत्येतावदत्र विवक्षितम् । इतरद्ब्राह्मणानुवादः । पयोलिङ्गत्वात्पयस्येवेदं भवति ॥ २२ ॥

## अथ प्रायश्चित्तप्रयोगः ।

होमकर्ता यजमानो वा—अधिश्रितमग्निहोत्रद्रव्यं स्थालीमूलेन स्रवति चेत्तदभिमृश्य जपेत् । तत्र मन्त्रः—

**गर्भं स्रवन्तमगदमकर्माग्निर्होता पृथिव्यन्तरिक्षम् ।**
**यतश्च्युतदग्नावेव तन्नाभिप्राप्नोति निर्ऋतिं परस्तात् ॥ १ ॥**

अग्निहोत्री गौरुपायसृष्टा दुह्यमानोपविशेत्तर्हि तामभिमृश्येमं मन्त्रं ब्रूयात्—

**यस्माद्भीषा निषीदसि ततो नो अभयं कृधि ।**
**पशून्नः सर्वान्गोपाय नमो रुद्राय मीढुषे ॥ २ ॥**

अथैनामुत्थापयेत् । तत्र मन्त्रः—

**उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् ।**
**इन्द्राय कृण्वती भागं मित्राय वरुणाय च ॥ ३ ॥**

अथास्या ऊधःसमीपे मुखसमीपे चोदकपात्रमुपोद्गृह्य तां दुग्ध्वा तत्पयो ब्राह्मणं पाययेत् । तत्पयो येन ब्राह्मणेन प्राशितं तस्य गृहे तत्स्वामिकमन्नं नाश्नीयात्संवत्सरं यावज्जीवं वा ।

यद्यग्निहोत्री गौरुपावसर्गादिदोहनपर्यन्तं शब्दं कुर्यात्तर्हि तस्यै यवसं दद्यात् । तत्र मन्त्रः—

**सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।**
**अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ ४ ॥**

अग्निहोत्रमुद्दिश्य दुग्धं पयः शोणितं दुह्येत्तर्हि तद्दुग्धं पात्रमध्ये गृहीत्वा गार्हपत्येऽग्नौ निरवशेषं दाहयित्वाऽन्येन पयसा जुहुयादिति ।

स्थालीभेदेन विक्षिप्तं स्कन्नं वाऽनेन मन्त्रेणाऽभिमन्त्र्याभिमन्त्रितं तदपोऽभ्यवहरेत् । तत्र मन्त्रः—

समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत ।
अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपतौ ॥ ५ ॥

स्कन्नपयोव्यतिरिक्तोऽयं विधिरिति वृत्तिकृत् । तत्राप्ययमेवेति भाष्यकृत् । दोहनाव-स्थायामुपावसृष्टा गौश्चलन्ती यदि तत्र भूमावीषत्क्षीरं पातयेत्तर्हि तत्क्षीरं हस्तेन स्पृष्ट्वाऽभि-मन्त्रयेत् । तत्र मन्त्रः—

यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः ।
पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयि ॥ ६ ॥

इति प्रायश्चित्तप्रयोगः ।

---

तत्र यत्परिशिष्टं स्यात्तेन जुहुयात् ॥ २३ ॥

दे० भा०—यत्तत्र परिशिष्टं स्यात्परिशिष्टं यद्भवति तेन जुहुयाद्यदि होमाय पर्याप्तं भवति तेन जुहुयात् ॥ २३ ॥

ना० वृ०—अर्थप्राप्तस्य विधानं शेषकार्यस्यापर्याप्तावपि तेनैव होमः कर्तव्यः । शेषकार्यस्य भक्षादेर्लोप एव स्यात् । अप्रयोजकत्वाद्द्रव्यस्येति ॥ २३ ॥

अन्येन वाऽभ्यानीय ॥ २४ ॥

दे० भा०—यदि होमाय पर्याप्तं न भवेदन्येन पयसाऽभ्यानीयाभिपूर्य तु जुहु-यात् । वाशब्देऽक्रियमाणे परिशिष्टं यद्यपि होमाय पर्याप्तं तथाऽभ्यानयनं कर्तव्यमेव स्यात्, " यद्दुग्धं सर्वं सिक्तं स्याद्यथाऽन्यामाहूय तां दुग्ध्वा तेन जुहुयात् " इति ब्राह्म-णम् ॥ २४ ॥

ना० वृ०—जुहुयादिति शेषः । होमस्यापर्याप्ताविदं भवति ॥ २४ ॥

एतद्दोहनाद्या प्राचीनहरणात् ॥ २५ ॥

दे० भा०—एतदग्नं प्रायश्चित्तं दोहनादि कृत्वाऽऽप्राचीनहरणात्सामिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वेति आ प्राचीनहरणादेतस्मात्प्राचीनहरणाद्भिन्नं सिक्तं चाभि-मन्त्र्यैतस्मिन्प्राप्त इदमुच्यते । दोहनादीति यदि नोच्यत एतदा प्राचीनहरणादित्युच्यमाने होमकर्मणि प्रारब्ध एतस्मात्प्राचीनहरणादिति मर्यादा नाभिविधिः ॥ २५ ॥

**ना० वृ०**—मर्यादायामयमाकारः । उत्तरत्र तत्रेतिवचनात् । दोहनवचनं पूर्वसूत्रे स्कन्दननिमित्तविशेषस्याविवक्षितत्वसूचनार्थम् । आदिग्रहणमधिश्रितेऽपि पयसि स्कन्न एतदेव प्रायश्चित्तं न ब्राह्मणोक्तम् । " अधिश्रितं स्कन्दति वा विष्यन्दते वा " इति । इदं तु द्रव्यान्तरेषु भवति । विष्यन्दने तु पयस्यपीदमेव भवति विष्यन्दनेऽधिश्रितेऽन्यस्यानाम्नानात् । तत्र यत्परिशिष्टमित्यादि द्रव्यान्तरेष्वपि साधारणमन्यस्यानाम्नानात् । उन्नीयाऽऽहवनीयं प्रतिहरणं प्राचीनहरणमित्युच्यते ॥ २५ ॥

**प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनम् ॥ २६ ॥**

**दे० भा०**—प्रजापतेर्विश्वभृति तन्वं हुतमसीत्येतेन मन्त्रेण हूयमानस्कन्नस्याभिमर्शनम् । तत्रेत्यधिकृते निर्दिश्यते । किमधिकृतं प्राचीनहरणमधिकृतम् ॥ २६ ॥

**ना० वृ**—इदमपि पयस्येव पूर्वेण संबन्धित्वात् । तत्रेति । प्राचीनहरण इत्यर्थः ॥ २६ ॥

**शेषेण जुहुयात् ॥ २७ ॥**

**दे० भा०**—शेषेण होमो न प्राप्नोति । कथं होमार्थमुन्नीतं स्कन्नं सद्धीनं भवति तदर्थमिदं शेषेण जुहुयादिति ॥ २७ ॥

**ना० वृ०**—अन्तरेणापि वचनं सर्वस्य वा प्रधानमात्रस्यैव वा पर्याप्ते शेषेणैव होमो युक्त उक्तत्वाद्द्रव्यस्य वचनमिदानीं किमर्थम् । अयमभिप्रायः—अस्ति चेच्छेषः स च होमद्रव्यस्यापर्याप्तस्तथाऽपि शेषेणैव मात्राहीनेनापि जुहुयादिति वचनम् ॥ २७ ॥

**पुनरुन्नीयाशेषे ॥ २८ ॥**

**दे० भा०**—अशेषे पुनरुन्नीय जुहुयात् । सर्वस्याशेषादिदं नाऽऽरभ्येत पुनरुन्नयनं न प्राप्नोति होमार्थमुन्नीतं स्कन्नमत इदमाह । यथाऽवदानशेष पुनरायतनादवदानमिति । तत्रैव स्थालीं स्रुचं चाऽऽहृत्योन्नयेत् । न तद्देशं निवृत्योन्नयेत् । यदि निवर्तयेत्स्वर्गाल्लोकाऽच्यवत इति श्रुतिः ॥ २८ ॥

**ना० वृ०**—स्रुग्गतस्याशेषे पुनरुन्नीय जुहुयात् । पुनरुन्नयनेऽयं विशेषः प्राचीनहरणे यावति गते स्कन्नं भवति तावत्येवाध्वन्युपविश्य स्थालीमन्येन प्राचीं नीत्वा तत्रैवोपविष्ट उन्नयेत् । न स्वयं स्रुग्वा प्रत्यग्गच्छेत् ॥ २८ ॥

**आज्यमशेषे ॥ २९ ॥**

**दे० भा०**—स्थाल्यामप्यशेषे सत्याज्यं गार्हपत्ये विलाप्याऽऽनीय तदाज्यमुन्नीय जुहुयादशेषाधिकारे पुनरशेषवचनात्स्थाल्यामप्यशेषमाज्यं भवति । आज्यग्रहणात्संस्कार

एव भवति नाग्निहोत्रद्रव्यसंस्कारः सर्पिष इति चोदितं स्यात् । अग्निहोत्रसंस्कारो वा प्राप्नोति । शब्दान्तरेण चोदितत्वादग्निहोत्रसंस्कारो वा क्रियते । अग्निहोत्रसंस्कारेण संस्कृत्य भिन्नं सिक्तं वाऽभिमन्त्रयेत तस्मादुच्यते ॥ २९ ॥

**ना० वृ०**—स्थाल्यामपि यदा नास्ति तदाऽऽज्यं गृहीत्वा तस्य यथासंभवं संस्कारं कृत्वोन्नीय तेन जुहुयात् ॥ २९ ॥

**एतदा होमाद्वारुणीं जपित्वा वारुण्या जुहुयात् ॥ ३० ॥**

**दे० भा०**—इमं मे वरुण श्रुधीतिजपेत् । ततोऽनन्तरं वारुण्या च जुहुयात् । तत्त्वा यामीत्येतयर्चा जुहुयात् । नित्यस्य होममन्त्रस्योद्धारो भवति । आज्येन हूयमान एतद्भवति ॥ ३० ॥

**ना० वृ०**—एतदा होमादद्वयोरपि होमयोः प्रधानत्वाद्धोमद्वयपर्यन्तमेतदेव प्रायश्चित्तं भवति । स्रुवपूर्णस्कन्दने पादोनस्रुवपूर्णस्कन्दने च प्रायश्चित्तम् । ततो न्यूनस्कन्दने न प्रायश्चित्तम् । अर्धस्रुवपूरणे न भवति ततोऽधिके भवति । वारुणीं जपित्वा वारुण्या जुहुयात् । विशेषाभावाद्ये केचन वारुण्यौ भवतः । पूर्वहोमे प्राकृतस्य मन्त्रस्यापवादो वारुणी ॥ ३० ॥

**अनशनमाऽन्यस्माद्धोमकालात् ॥ ३१ ॥**

**दे० भा०**—यजमानस्य पत्न्याश्चानशनमभोजनं कियन्तं कालमाऽन्यस्माद्धोमकालात् । सायंहोमे चेदा प्रातर्होमकालात्प्रातर्होमे चेदा सायंहोमकालान्नाश्नीयात् ॥ ३१ ॥

**ना० वृ०**—यजमानस्येदं न होमकर्तुः । वारुणीजपो वारुणीहोमोऽनशनमित्येतत्त्रयं शेषेण जुहुयादित्यत्र मात्रापचारहोमे पुनरुन्नीय होम आज्यहोमे च भवति ॥ ३१ ॥

**पुनर्होमं च गाणगारिः ॥ ३२ ॥**

**दे० भा०**—पुनर्होमं च गाणगारिराचार्यो मन्यते । तदानीमेव पुनरग्निहोत्रं हुत्वा ततोऽनन्तरमनशनं भवति । गाणगारिग्रहणात्सूत्रकारः पुनर्होमं न मन्यतेऽनशनमेव मन्यते ॥ ३२ ॥

**ना० वृ०**—एतेष्वेव त्रिषु पक्षेषु गाणगारिः पुनर्होमं चेच्छति । आचार्यग्रहणं विकल्पार्थम् । पुनर्होमे पूर्वं समाप्य पुनर्विहरणादि सर्वं क्रियते निमित्ते प्रयोगावृत्तिविधानात् ॥ ३२ ॥

**अग्निहोत्रं शरशरायत्समोषामुमिति द्वेष्टारमुदाहरेत् ॥ ३३ ॥**

**दे० भा०**—अग्निहोत्रद्रव्यमधिश्रितं मच्छरशरायच्छब्दायमानं शरशरेति शब्दं

कुर्यादेततः समोषामुमिति द्वितीयया विभक्त्या यो यजमानस्य द्वेष्टा यो द्वेष्टि किमसौ वर्धते किमसौ जानातीति यो द्वेष्टि न प्रशंसति स द्वेष्टा । तं द्वेष्टारमुदाहरेत् । "समोषामुकम्" समोष शिरिण्डिकामित्युदाहरेत् । उदाहरेदिति वचनात्तूपांशुत्वं न प्राप्नोत्युच्चैरुदाहरणं भवति ॥ ३३ ॥

**ना० वृ०**—अधिश्रितमग्निहोत्रद्रव्यं यदि शब्दयेत्तदा तद्द्रव्यं समोषामुमित्यभिमन्त्रयेत । अमुमित्यस्य स्थाने यजमानद्वेष्टुर्नाम निर्दिशेत् । अधिश्रितविशेषणं तत्रैवास्य संभवाच्छास्त्रान्तरदर्शनाच्च ॥ ३३ ॥

**विष्यन्दमानं मही द्यौः पृथिवी च न**
**इत्याहवनीयस्य भस्मान्ते निनयेत् ॥ ३४ ॥**

**दे० भा०**—विष्यन्दमानं यद्यधिकृतं विष्यन्दति विविधं स्यन्दति सर्वतो विष्यन्दमानमग्निहोत्रं यत्स्थाल्यामवशिष्टमिति तन्मही द्यौः पृथिवी च न इत्येतयर्चाऽऽहवनीयस्य भस्मान्ते निनयेत् ॥ ३४ ॥

**ना० वृ०**—उद्वासिते विष्यन्दित एतद्भवति । अधिश्रिते तु ब्राह्मणोक्तमेव ॥ ३४ ॥

**सांनाय्यवद्बीभत्से ॥ ३५ ॥**

**दे० भा०**—केशादिभिर्बीभत्से सांनाय्येन तुल्यं सांनाय्यवत् । यथा सांनाय्यं केशादिभिर्बीभत्सं प्रजापतिरित्यनयर्चा मध्यमेन पलाशपर्णेनाप्सु जुहुयाद्वल्मीकवपायां वा । एवमग्निहोत्रद्रव्यं बीभत्सं यदि भवति सांनाय्यवदेव जुहुयात् । ततोऽन्येनाग्निहोत्रं जुहुयात् ॥ ३५ ॥

**ना० वृ०**—प्रजापत इत्यनयर्चा मध्यमेन पलाशपर्णेन वल्मीके जुहुयादित्यर्थः ॥ ३५ ॥

**अभिवृष्टे मित्रो जनान्यातयति ब्रुवाण इति समिदाधानम् ॥ ३६ ॥**

**दे० भा०**—अग्निहोत्रद्रव्ये संस्कृते यदि वर्षधारा अभिपतन्ति तदाऽभिवृष्टं भवति । तस्मिन्नभिवृष्टे सत्यग्निहोत्रद्रव्ये मित्रो जनान्यातयति ब्रुवाण इत्यनयर्चा समिदाधानं भवति । आहवनीये नित्यस्य समिदाधानमन्त्रस्य स्थाने समानजातीयन्यायेन । यजमानस्तु नित्यमेवाऽऽधानमन्त्रमाह । समिदाधानपक्षो विधिर्भवति । शेषं समानम् । अभिवृष्ट एतावानेव विकारः ॥ ३६ ॥

**ना० वृ०**—अधिकेयं समित् । उत्तराहुत्यर्थस्याप्यभिवर्षणसंभवात् । अतः पूर्वाहुत्याः प्रागप्यस्मिन्निमित्ते सति निमित्तानन्तरं समिदन्तरमाधेयमेव ॥ ३६ ॥

**यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने ॥ ३७ ॥**

**दे० भा०**—यत्र वेत्थ वनस्पत इत्येतयर्चा समिदाधानं क्रियते । यद्युत्तराहुतिरहुता स्कन्दति । तस्य स्कन्दने सत्याहुतिस्थाने समिधमादध्यात् । न पुनरुन्नयनं क्रियते । एवं प्राशनार्थमपि स्थाल्या न गृह्यते ॥ ३७ ॥

**ना० वृ०**-समिदाधानमिति शेषः ॥ ३७ ॥

**प्रदोषान्तो होमकालः ॥ ३८ ॥**

**दे० भा०**—अस्तमिते होम इति होमकाल उक्तः स प्रदोषान्तो भवति । रात्र्याः प्रथमो यामः प्रदोषो भवति । प्रदोषोऽन्तो यस्य होमकालस्य स प्रदोषान्तः । आ प्रदोषसमाप्तेर्होमकालो भवति । अस्तमितमात्र एव होमकालो भवति । तस्यातिक्रमे प्रायश्चित्तं स्यात्तस्मादिदमुच्यते प्रदोषान्त इति । तदतिक्रमे तु प्रायश्चित्तं वक्ष्यति ॥ ३८ ॥

**ना० वृ०**—प्रदोषो नाम रात्रेः पूर्वश्चतुर्थो भागः । प्रदोषस्यान्तः प्रदोषोन्तः । प्रदोषान्तोऽन्तो यस्य स प्रदोषान्तः । प्रदोषान्तान्त इत्यर्थः । स सायंहोमस्य कालः । केचित्पञ्चमीषष्ठ्यौ नाडिके प्रदोषशब्देनोच्येते तदन्तो वाऽयं होमकालः ॥ ३८ ॥

**संगवान्तः प्रातः ॥ ३९ ॥**

**दे० भा०**—उपोदयं व्युषित उदिते वेत्युक्तो होमकालः संगवान्तो भवति । अह्नः प्रथमो यामः प्रातरित्युच्यते । द्वितीयो यामः संगवो भवति । संगच्छन्ति गावो वत्सैः सह यस्मिन्काले स कालः संगवो भवति । आ मध्याह्नाद्भवति । "**मध्यंदिने संगविनीमायन्ति**" ( ऐ० ब्रा० १२ । ७ ) । उदित इति वचनादुदितमात्रे होमकालस्तस्यातिक्रमे प्रायश्चित्तं स्यात्तस्मादा संगवान्त इति । आ संगवपरिसमाप्तेर्भवति । तस्यातिक्रमे प्रायश्चित्तं वक्ष्यति ॥ ३९ ॥

**ना० वृ०**—यस्मिन्काले गावो वत्सैः सहाऽऽसते स संगवः कालः । तावत्पर्यन्तं प्रातर्होमकालः । केचिदह्नस्तृतीयो भागः संगव इत्याहुः । तदन्तः संगवान्तो दश नाडिका इत्यर्थः । अस्तमित उदिते च विहिते होम एतावति काले क्रियमाणेऽतीतकालो न भवतीति पुनः कालविधिः ॥ ३९ ॥

**तमतिनीय चतुर्गृहीतमाज्यं जुहुयात् ॥ ४० ॥**

**दे० भा०**—तमतिनीय तं कालं प्रदोषं संगवं वाऽतिनीयातिक्रम्य चतुर्गृहीतमाज्यं जुहुयात् । स्रुवेण प्राप्तं चतुर्गृहीतमित्याह । ऐष्टिके कर्मणि प्रकृतमाज्यमस्ति तस्मात्तत्राऽऽज्यमिति नोच्यते "स्थाल्याः स्रुवेणाऽऽदाय" ( आश्वलायन श्रौ० सू० १ ।

११।) इत्युच्यते। तदा होमेष्वाज्ये प्राप्त इह तत्प्रकृतमाज्यं न विद्यते तस्मादाज्यमित्याह॥ ४०॥

ना० वृ०—कस्मिन्काले केन मन्त्रेणेत्यत आह—

**यदि सायं दोषावस्तर्नमः स्वाहेति यदि प्रातः प्रातर्वस्तर्नमः स्वाहेति। अग्निहोत्रमुपसाद्य भूर्भुवः स्वरिति जपित्वा वरं दत्त्वा जुहुयात्॥ ४१॥**

दे० भा०—यदि सायंकालातिक्रमो भवति दोषावस्तर्नमः स्वाहेत्यनेन मन्त्रेण चतुर्गृहीतमाज्यं जुहुयात्। यदिशब्देऽप्रयुज्यमाने सायंशब्दो मन्त्रादिः स्यात् सायं दोषावस्तरिति। यदि प्रातर्यदि प्रातःकालातिक्रमो भवति ततः प्रातर्वस्तर्नमः स्वाहेत्यनेन मन्त्रेण चतुर्गृहीतमाज्यं जुहुयात्। अग्निहोत्रमुपसाद्य होमानुक्रमेण पूर्वं सायंहोमविधिरुच्यते सायंहोमेऽग्निहोत्रद्रव्यमुपसाद्याऽऽहवनीयसमीपे कुशेषूपसाद्योपसादनं कृत्वा भूर्भुवः स्वर्व्याहृतीर्जपित्वा समिधमाधायाप उपस्पृश्य वरं दत्त्वा यदस्य गृहे श्रेष्ठं वरं तदध्वर्यवे दत्त्वा जुहुयात्। उपसाद्य जपित्वा वरं दत्त्वा जुहुयादित्येवोदितेऽप्यसमानकालान्येतान्यसमानकर्तृकाणि च। कथमुपसाद्येतिवचनादुपसाद्य जपो भवति। अध्वर्योरेव भवति। वरं दत्त्वा जुहुयादितिवचनात्। यजमानो वरं ददाति अध्वर्युर्जुहोति। यदि स्वयमेव जुहोति कस्मै वरं ददाति। गौर्वरो भवति। बहुफलत्वात्। अन्येषामप्युक्तम्—“गौर्वै वरो भवति” (आप० श्रौ० सू० ५। ११। ३९)॥ ४१॥

ना० वृ०—उपसादनवचनं क्रमार्थम्। उपसाद्य जपं च वरदानं च कृत्वा समिदाधानादि पूर्ववत्। वरदानं याजमानम्। वरशब्देन गोजातिरुच्यते। तं वरं दत्त्वा जुहुयादिति पूर्वकालतामात्रं विवक्षितं नान्यवधानं कर्त्रैक्यं च॥ ४१॥

**इष्टिश्च वारुणी॥ ४२॥**

दे० भा०—अनेन विधिनाऽग्निहोत्रं जुहुयात्। इष्टिश्च वारुणी क्रियते। चशब्दः समुच्चयार्थस्तदानीमेव संस्थितेऽग्निहोत्रे कुर्यात्। त एवाग्नयो भवन्ति। आ प्रायश्चित्तसमाप्तेस्त एवाग्नयो भवन्तीति व्याख्यातम्। अनुगमयित्वा चाऽऽहवनीयमित्यत्र सायंकालातिनये तु प्रायश्चित्तं व्याख्यातम्। प्रातःकालातिनये तु तदिदानीं वक्ष्यते॥ ४२॥

ना० वृ०—कर्तव्येत्यर्थः। समाप्तेऽग्निहोत्रहोमे तेष्वेवाग्निष्वियमिष्टिः कार्या। उत्तरत्रानुगमनविधानात्॥ ४२॥

**हुत्वा प्रातर्वरदानम्॥ ४३॥**

दे० भा०—प्रातर्वरदानं प्रातःकालातिनये तु चतुर्गृहीतमाज्यं हुत्वाऽग्निहोत्रमुपसाद्य

ऽयाहृतीर्जपित्वा समिधमाधायाप उपस्पृश्य द्वे आहुती हुत्वा वरं ददाति प्रातर्होमं हुत्वा वरदानं भवति । आहुती हुत्वा च वरदानमितिवचनाज्जपस्तु यथास्थाने भवति । इह प्रातरिति वचनात्पूर्वोक्तावधि सायंहोमे भवति ॥ ४३ ॥

ना० वृ०—प्रातःकालातिपत्तौ विशेषो वक्ष्यते । होमोत्तरकाले वृष्ट्यन्ते वरदानं कर्तव्यम् ॥ ४३ ॥

**अनुगमयित्वा चाऽऽहवनीयं पुनः प्रणयेदिहैव क्षेम्य एधि मा प्रहासीरमुं माऽमुं माऽऽमुष्यायणमिति ॥ ४४ ॥**

दे० भा०—अनुगमयित्वा चानेन विधिना प्रातरग्निहोत्रं हुत्वाऽऽहवनीयं चानुगमयति । तमनुगमयित्वाऽनन्तरं पुनः प्रणयेदिहैव क्षेम्य एधीत्यनेन मन्त्रेण । चशब्दः प्रातरधिकारसमुच्चयार्थः । सर्वेषामधिकारादाहवनीयग्रहणम् । अस्मिन्मन्त्रेऽमुमिति निर्देशात् त्रीणि नामानि यजमानस्य नाम नाक्षत्रं प्रवरमिति । तन्नोपपद्यते वचनाभावात् । यथा सूक्तवाके वचनमेवं विहितं तथाऽत्र न विद्यते वचनम् । तस्माद्यथाम्नात एव मन्त्रः प्रयोक्तव्यः । मन्त्रो हि यजमानपत्नीं प्रजां च वदति ॥ ४४ ॥

ना० वृ०—समाप्तेऽग्निहोत्रहोम आहवनीयस्यानुगमनं कृत्वा पुनस्तमेवोद्धरेत् "इहैव क्षेम्य एधि" इति मन्त्रेण । मा प्रहासीरमुं माऽऽमुष्यायणमिति पाठः कर्तव्यः । अमुमित्यस्य स्थाने यजमाननाम द्वितीयया निर्दिशेत् । आमुष्यायणशब्दस्य स्थाने गोत्रनाम मा प्रहासीर्देवदत्तं मा भारद्वाजमिति । पित्रादौ जीवति भारद्वाजायनमिति वदेत् । दक्षिणाग्निश्चाऽऽग्निहौत्रिक एव । आहवनीयस्यैवानुगमनविधानात् । इदमनुगमनं कस्याऽऽहवनीयस्येति न विद्मः । आग्निहौत्रिकस्येति चेत् । न समाप्तेऽग्निहोत्रे तस्य लौकिकत्वादनाहवनीयत्वम् । होमे कृतेऽसमाप्ते च प्रयोगेऽनुगमनमिति चेत् । तथा सति पुनः प्रणयनमदृष्टार्थं स्यात् । अत्रायमभिप्रायः—इष्ट्यर्थं विहृतस्येति तदा पुनः प्रणयेत्तत इष्टिरिति समन्वयो नोपपद्यते । अत्रायमभिप्रायः—समाप्तेऽग्निहोत्रे लौकिकस्य सतोऽनुगमनमेव कर्तव्यं नाऽऽयतनाद्बहिस्त्याग इति तदाऽऽहवनीयमिति शब्दो नोपपद्यते । अत एवंवदतः सूत्रकारस्यायमभिप्राय इति वर्णनीयम् । यस्य कस्यचित्कर्मणोऽर्थाय विहृतेष्वग्निषु यत्किंचिदग्निसाध्यं नैमित्तिकमुत्पद्यते तस्य नैमित्तिकसहितस्य त एवाग्नयो भवेयुः । न पुनः पुनर्विहर्तव्या इति ॥ ४४ ॥

**तत इष्टिर्मित्रः सूर्यः ॥ ४५ ॥**

दे० भा०—ततः प्रणयनादनन्तरमिष्टिः क्रियते सा वक्ष्यते । मित्रः सूर्य इत्येते द्वे देवते भवतः ॥ ४५ ॥

**ना० वृ०**—एते देवते ॥ ४५ ॥

**अभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वानिति संस्थितायां पत्न्या सह वाग्यतोऽग्नीञ्ज्वलतोऽहरनश्नन्नुपासीत ॥ ४६ ॥**

**दे० भा०**—अभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वानित्येतया याज्यानुवाक्यया मित्रस्य । सूर्यस्य * शुनासीरीयायाम् । शेषं पौर्णमासेन संस्थितायां तस्यामिष्टौ समाप्तायां पत्नीसहितो यजमानो वाग्यतोऽभाषयन्नग्नीञ्ज्वलतः समृद्धान्कुर्वन्नहरनश्नन्नभुञ्जन्कृत्स्नमहरुपासीत । इह पत्न्या सहेतिवचनादाशीतं भवति यद्यजमानस्य व्रतमुच्यते तत्पत्न्या भवतीति । अनशनमाऽन्यस्माद्धोमकालादित्युभयोरप्यनशनं भवतीति । अहर्ग्रहणादेतत्सर्वमहन्येव भवति न रात्रौ । अन्यथा प्रायश्चित्तसमाप्तौ सर्वं स्यात्तस्माद्रात्रौ भुञ्जीत । न च वाग्यतः । न चाग्नयो ज्वलन्तो धार्यन्ते । आ प्रायश्चित्तसमाप्तेस्त एव । प्रायश्चित्तार्थेष्वेवाग्निषु सायंहोमो हुतस्तस्मादा प्रायश्चित्तसमाप्तेर्धार्यन्ते सायंहोमार्थं ये भवन्ति ते धार्यन्ते ॥ ४६ ॥

**ना० वृ०**—समाप्तायामिष्टौ पत्नीयजमानौ यतवाचौ भूत्वा तानेवाग्नीञ्ज्वलयन्तावनश्नन्तावहःशेषमुपासीयाताम् । उपासीत पत्न्या सहैवं कुर्वन्नग्नीनां समीप आसीतेत्यर्थः ॥ ४६ ॥

**द्वयोर्दुग्धेन वासेऽग्निहोत्रं जुहुयात् ॥ ४७ ॥**

**दे० भा०**—द्वयोर्गवोर्दुग्धेन वासे सायमग्निहोत्रं जुहुयात्तेष्वेवाग्निषु ॥ ४७ ॥

**ना० वृ०**—वासो रात्रेः पूर्वश्चतुर्थो भागः । द्वयोर्गवोर्दुग्धेन पयसा सायमग्निहोत्रं स्वकाले जुहुयादित्यर्थः ॥ ४७ ॥

**अधिश्रितेऽन्यस्मिन्द्वितीयमवनयेत् ॥ ४८ ॥**

**दे० भा०**—अधिश्रिते तस्मिन्द्वितीयं पयोऽवनयेत् । द्वयोः सहाधिश्रयणं न क्रियते । द्वयोर्दुग्धेनेति वचनात्सहाधिश्रयणं प्राप्तम् । द्वयोर्दुग्धेनेतिवचनाद्द्वयोरपि पत्नीयजमानयोः । अग्रे हुतशेषप्राशनमुपदिशति । ततो हुतेऽग्निहोत्रे भोजनं न च वाग्यमो न चाग्नयो ज्वलन्त एव धार्यन्त एवाऽऽप्रातः ॥ ४८ ॥

**ना० वृ०**—अयमत्र विशेषः—एतस्या गोर्दुग्धं पयोऽधिश्रित्य तस्मिन्नेव पयसि द्वितीयं गोर्दुग्धमवनयेत् । तेन पयसा होमस्ततोऽन्योरपवर्गः ॥ ४८ ॥

---

* शुनासीरीयायां तु—तरणिर्विश्वदर्शतः । चित्रं देवानामुदगादनीकमित्युक्ते ।

## प्रातरिष्टिः ॥ ४९ ॥

**दे० भा०**—प्रातरिष्टिः क्रियते सा वक्ष्यते । प्रातरितिवचनाद्धुतेऽग्निहोत्रे भवति । समानकाले चोदितेष्टिः । पूर्वोक्तत्वादग्निहोत्रं पूर्वं भवति । अनन्तरेष्टिः सा वक्ष्यते ॥ ४९ ॥

**ना० वृ०**—ततः श्वोभूते पूर्वाह्ण इष्टिः कार्या । इयमपि प्रातःकालातिपत्तिनिमित्तैव । प्रातरिति कालनियमात्प्रयोगभेदः । ततो विहरणभेदोऽपराग्न्योरपि भवति ॥ ४९ ॥

## अग्निर्व्रतभृत् ॥ ५० ॥

**दे० भा०**—अग्निर्व्रतभृद्देवता ॥ ५० ॥

**ना० वृ०**—व्रतभृद्गुणकोऽग्निर्देवता ॥ ५० ॥

**त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहाऽऽवह । उपयज्ञं हविश्च नः । व्रतानि बिभ्रद्व्रतपा अदब्धो यजानो देवाँ अजरः सुवीरः । दधद्रत्नानि सुमृळीको अग्ने गोपाय नो जीवसे जातवेद इति ॥ ५१ ॥**

**दे० भा०**—त्वमग्ने व्रतभृदिति यथासमाम्नाते याज्यानुवाक्ये । शेषं पौर्णमासेन समाप्तेष्टिः । समाप्तं च कालातिनयप्रायश्चित्तम् ॥ ५१ ॥

**ना० वृ**—एतत्प्रायश्चित्तं स्वकाल एव प्रणीतेष्वग्निषु होमकालातिपत्तौ भवति । अप्रणीतेषूक्तकालातिपत्तावत्यन्तापद्यनुद्धृतप्रायश्चित्तं कृत्वा होमं कुर्यात् । अनापदि मनस्वतीहोमेनानुद्धृतप्रायश्चित्तेन च सहितो होमः कार्यः । विहृतेष्वेवाग्निष्वहुतेषु होमान्तरकालप्राप्तावुपक्रान्तमेव होमं कालातिपत्तिप्रायश्चित्तसहितं कृत्वा वर्तमानकालीनमनुद्धृतप्रायश्चित्तसहितं कुर्यात् । अविहृतेषु कालान्तरप्राप्तौ मनस्वतीहोमं कृत्वाऽतिपन्नस्य प्रतिहोमं च कृत्वाऽनुद्धृतप्रायश्चित्तादि पूर्ववत् । एवमनेककालातिपत्तावपि द्रष्टव्यम् । विहृतेष्वविहृतेषु वाऽनेककालातिपत्तौ मनस्वतीहोमं प्रतिहोमं चावश्यं कुर्यात् । विहृतेषु तेष्वेवाग्निषु । अविहृतेषु त्वग्नीन्विहृत्य मनस्वत्यादि कृत्वा प्राप्तकालस्य विहरणादि क्रियेत । एवमत्र विचार्य यद्युक्तं तत्कर्तव्यम् । विचारस्याऽऽस्पदमात्रमत्र लिखितमिति मन्तव्यम् ॥ ५१ ॥

## अथ प्रायश्चित्तप्रयोगः ।

जपानन्तरमवशिष्टेनैव होतव्यं यदि होममात्रपर्याप्तं स्यात् । भक्षणादेर्लोपः । होमस्यापर्याप्तावन्यदभ्यानीय जुहुयात् । एतत्प्रायश्चित्तं दोहनकालस्कन्नमारभ्योन्नीयाऽऽहवनीयप्रतिहरणपर्यन्तं ज्ञेयम् ।

**प्रजापतेर्विश्वभृति तन्वं हुतमसि ।**

इति मन्त्रेण प्राचीनहरणसमये स्कन्नमभिमृश्य शेषेण जुहुयात् । अशेषे प्राचीनहरणे यावति गते स्कन्नं भवति तावत्स्रुवेणाऽध्वन्युपविश्य स्थालीमन्येन प्राचीं नीत्वा तत्रैवोन्नीय जुहुयान्न स्वयं स्रुग्ध्वा प्रत्यग्गच्छेत् । यदि स्थाल्यामपि हविर्नास्ति तदा तूष्णीमाज्यमुत्पूयो-न्नीय जुहुयात् । एतत्प्रायश्चित्तं प्रधानाहुतिद्वयपर्यन्तमेव ततो वारुणीं जपेत् । मन्त्रस्तु—

**इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके ।**

ततो होमोऽपि वारुण्यैव नात्र प्राकृतो होममन्त्रः । मन्त्रस्तु—

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**
**अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः स्वाहा ॥**

यजमानः—**वरुणायेदं न मम** । ततोऽनशनमाऽन्यस्माद्धोमात् । स्कन्दने त्वेवम्—पूर्णस्रुक्स्कन्दने पादोनस्रुवपूर्णस्कन्दने च प्रायश्चित्तं न न्यूनस्कन्दने । न्यूनस्कन्दने तु केवलं प्रजापतेरित्यनेन पूर्वोक्तेन मन्त्रेणाभिमर्शः ।

अधिश्रितमग्निहोत्रं यदि शब्दयेत्तद्द्रव्यमभिमन्त्रयेत् ।

तत्र मन्त्रः—**समोष देवदत्तशर्माणम् ।**

देवदत्तेत्यस्य स्थाने द्वेष्टुर्नामोदाहरेत् ।

उद्वासिते दिवे त्वेत्याद्यनन्तरं स्कन्नं चेत—

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।**
**पिपृतान्नो भरीमभिः ॥**

इत्यनेन मन्त्रेणाऽऽहवनीयस्य भस्मान्ते निनयेत् ।

बीभत्सं चेत्—

**प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ।**

मध्यमेन पलाशपर्णेन वल्मीकवपायामप्सु वा जुहुयात् । अप्सु चेत्तूष्णीम् ॥

अग्निहोत्रद्रव्ये संस्कृते यदि वर्षधारा अभिपतन्ति तदा तदग्निहोत्रद्रव्यमभिवृष्टं भवति तस्मिन्नभिवृष्टे कुशोपसादनान्तं कृत्वा

**मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।**
**मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत ॥**

इति मन्त्रेण समिधमादध्यात् ।

**यजमानः**—प्राकृतमेव समिदाधानानुमन्त्रणमाह ।

वृत्तिकृत्तु इदं समिदाधानमधिकमित्याह ।

यद्युत्तराहुतिरहुता स्कन्देत्तदा—

**यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥**

इति मन्त्रेण समिधमाधाय नित्यवज्जुहुयात् । संपूर्णस्कन्दन आहुतिस्थाने यत्र वेत्थेत्यनेन मन्त्रेण समिन्मात्रमाधातव्यम् । सायंहोमकालातिक्रमण उपसादनान्तं कृत्वा

**भूर्भुवः स्वः ।**

इति जपित्वा

**यजमानः**—सायंहोमकालातिक्रमणजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वरं दास्ये ।

इति वरं दद्यात् । वरे दत्ते जुह्वां स्रुवेण चतुर्गृहीतं गृहीत्वा

**दोषावस्तर्नमः स्वाहा ।**

इति मन्त्रेणाऽऽहवनीये जुहुयात् । ततोऽग्निहोत्रहोमः । समाप्तेऽग्निहोत्रहोमे तेष्वेवाग्निषु वारुण्येष्ट्या यजेत पूर्णाहुतिं वा जुहुयात् । पूर्णाहुतिप्रयोगस्तु प्रागेवोक्तः ।

पूर्णाहुतौ मन्त्रस्तु—

**वरुणाय स्वाहा ।**

**यजमानः**—वरुणायेदं न ममेति ब्रूयात् । इति सायंकालिकप्रायश्चित्तविधिः ।

प्रातःकालिकमुच्यते प्रातर्हुत्वा वरं प्रदायाऽऽहवनीयमनुगमयित्वा पुनः प्रणीय

**इहैव क्षेम्य एधि मा प्रहासीरमुं माऽऽमुष्यायणम् ।**

इति मन्त्रेण प्रणयेत् । प्रातस्त्वयं विशेषो हुत्वा वरदानम् ।

**प्रातर्वस्तर्नमः स्वाहा ।**

इति प्रातर्होममन्त्रः । इष्टिरपि पृथगेव । मित्रसूर्यौ देवते । इष्टिस्थाने पूर्ववत्पूर्णाहुतिः । प्रयोगस्तु गत एव । पूर्णाहुतिमन्त्रौ तु—

**मित्राय स्वाहा । सूर्याय स्वाहा । इति ।**

इष्टिकरणपक्षस्त्वन्यतोऽवगन्तव्यः ।

पूर्णाहुतौ हुतायाम् (इष्टिकरणपक्ष इष्टिसमाप्तौ) पत्नीयजमानौ यतवाचौ भूत्वा तानेवाग्नीञ्ज्वलयन्तावनश्नन्तावहःशेषमुपासीयाताम् । ततो रात्रौ द्वयोर्गवोर्दुग्धेन सायमग्निहोत्रं स्वकाले जुहुयात् । तत्रायं योगविशेषः—एकस्या गोः पयस्यधिश्रिते द्वितीयं गोर्दुग्धं तस्मिन्नेवावनीय तेन सायंहोमः । ततो दक्षिणाग्न्याहवनीययोरपवर्गः । ततः श्वोभूते पूर्वाह्ण इष्टिः कार्या । तत्र देवता व्रतभृद्गुणकोऽग्निः । तत्स्थाने पूर्णाहुतिर्वा । पूर्णाहुतिमन्त्रस्तु—

अग्नये व्रतभृते स्वाहा । अग्नये व्रतभृत इदं न मम । इति ।

अन्यः प्रयोगस्तु प्रागुक्त एव ।

एतावता **सायंनिधानोत्तरं** होमकालातिपत्तौ प्रायश्चित्तेऽयं क्रमः—

१ उपसादनानन्तरं भूर्भुवः स्वरिति जपः ।

२ ततो यजमानकर्तृकं वरदानम् ।

३ ततश्चतुर्गृहीतहोमः ।

४ ततः समिदाधानादि नित्याग्निहोत्रम् ।

५ ततस्तेष्वेवाग्निषु वारुणीष्टिः पूर्णाहुतिर्वा ।

इति सायंकालातिपत्तिप्रायश्चित्तिक्रमः ।

---

## अथ प्रातःकालातिपत्तिप्रायश्चित्तिक्रमः ।

१ प्रातरग्निहोत्रमुपसाद्य भूर्भुवः स्वरिति जपः ।

२ चतुर्गृहीतहोमः ।

३ ततः समिदाधानादि नित्याग्निहोत्रीयवृष्ट्यन्तम् ।

४ ततो वरदानम् ।

५ ततो गार्हपत्यहोमादि नित्यवत् ।

६ तत आहवनीयमनुगमय्य पुनः प्रणीय ततस्तस्मिन्नेवाऽऽहवनीये प्रणीत इष्टिः पूर्णाहुतिर्वा ।

७ ततः पत्न्या सह यजमानस्य वाग्यमनम् ।

८ ज्वलदग्नीनां समीपेऽनश्नतोस्तयोर्दंपत्योरासायं वासः ।

९ ततः सायमग्निहोत्रं द्वयोर्गवोर्दुग्धेन कार्यम् ।

१० ततो दक्षिणाग्न्याहवनीययोरपवर्गः ।

११ ततः श्वोभूत इष्टिः पूर्णाहुतिर्वा ।

इति प्रातःकालातिपत्तिप्रायश्चित्तिक्रमः ।

एषैवाऽऽर्त्याऽश्रुपाते ।

दे० भा०—आर्त्या दुःखेन पत्नीयजमानयोरश्रुपाते सति रोदने सति । आर्त्येतिवचनादार्त्याऽश्रुपात एव भवति । हर्षाश्रुपाते न भवति न तत्र प्रायश्चित्तम् ।

ना० वृ०—आर्त्याऽश्रुपाते दुःखेनाश्रुपाते न धूमादिनेत्यर्थः ।

यद्याहवनीयमप्रणीतमभ्यस्तमियाद्बहुविद्ब्राह्मणोऽग्निं प्रणयेद्दर्भैर्हिरण्येऽग्रतो ह्रियमाणे ।

दे० भा०—यद्याहवनीयमुद्धराऽऽहवनीयमित्यपराह्ण आहेति । उत्सर्गेऽपराह्ण आहेति । उत्सर्गेऽपराह्ण इतिवचनादपराह्णप्रणयनं यदि तस्मिन्काले आहवनीयमप्रणीतमादित्योऽभ्यस्तमियात्तथा सत्यस्तमितेऽपि बहुविद्ब्राह्मणोऽग्निं प्रणयेत् । बहु वेत्तीति बहुवित् । बहुशब्दो नित्यमधिकृतापेक्ष एव । बहु तु नित्यकर्माधिकृतं याज्ञकर्मविद्यां यो वेत्ति स बहुविदित्युच्यते । तस्मादादित्यो न कदाचनास्तमेति नोदेति नित्यमात्मन्यवस्थितः । तदुच्यते "सूर्य आत्मा जगतस्तस्थुषश्च" इति तमेवाऽऽत्मगतं मनसा जानन्पश्यन्नाहवनीयं प्रणयेदित्येवं विदुषा प्रणीयमानोऽनस्तमित एव प्रणीतो भवति । अग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुख इत्यादित्येऽग्नावाहवनीयोऽग्निर्निहितो भवति । अविदुषा तु प्रणीयमाने प्रथमार्थो न सिध्यति । तस्मादाह—बहुविद्ब्राह्मणोऽग्निं प्रणयेत् । बहुविदितिवचनाद्बहुविदेव प्रणयति नाध्वर्युः । ब्राह्मण इतिवचनान्न क्षत्रियो बहुविदपि प्रणयति । न च वैश्यः । दर्भैर्हिरण्येऽग्रतो ह्रियमाणे पुरस्तान्नीयमाने हिरण्ये ब्राह्मणोऽग्निं प्रणयति ज्योतिर्वै हिरण्यमिति श्रुतिः ।

ना० वृ०—अग्निहोत्रार्थं विधिनाऽनुद्धृतमाहवनीयं यद्यभ्यस्तमियात्तदा तदानीमेवाऽऽनेतुं शक्येषु ब्राह्मणेषु यो बहु वेत्ति तमानीय तेनोद्धरणादि निधानान्तमाहवनीयस्य कारयेत् । अग्नेः प्रणीयमानस्याग्रतो हिरण्यं दर्भैरेव नयेत् । ब्राह्मणग्रहणं बहुवित्त्वेऽपि जात्यन्तरनिवृत्त्यर्थम् ।

अभ्युदिते चतुर्गृहीतमाज्यं रजतं च हिरण्यवदग्रतो हरेयुः ।

दे० भा०—अभ्युदिते यद्याहवनीयमप्रणीतमभ्युदियादादित्यस्तस्मिन्नभ्युदित आज्यं चतुर्गृहीतमाज्यं जुह्वां गृहीत्वा रजतरूपमाज्यं रजतं च हिरण्यवद्दर्भैः परिगृह्याग्नेः प्रणीयमानस्याग्रतो हरेयुर्नयेयुस्तस्मिन्नग्रतो ह्रियमाणे बहुविद्ब्राह्मणोऽग्निंप्रणयेत् । प्रकृतमाज्यं न विद्यते तस्मादाज्यमित्याह । यत्र प्रकृतमस्ति तत्र जुहुयादित्येव ब्रूयात् । यथा "आग्नीध्रीय आहुती जुहोति" ( आश्वलायनश्रौ० सू० ५ । १३ । ) चशब्दः समुच्चयार्थः ।

आज्यं रजतं चेति हिरण्यवदिति वचनाच्छेषमभ्यस्तमितविहितेन समानम् । बहुविद्ब्राह्मण इत्येवमादि पुनरग्रतो वचनाच्छेषमभ्यस्तमितविहितेन समानम् । बहुविद्ब्राह्मण इत्येवमादि पुनरग्रतो वचनादाज्यस्याप्यग्रतो गमनं विधीयते । बहुवचनं कर्तृबहुत्वादाज्यं लौकिकः प्रणयति ।

**ना० वृ०**—अनुद्धृतमभ्युदिते सति बहुविदग्निं प्रणयेत् । तस्याग्रतश्चतुर्गृहीतमाज्यं नेतव्यं रजतं च । यदि हिरण्यवद्वचनेन रजतस्याग्रतो हरणं प्राप्येत तदा दर्भैर्हरणमपि प्राप्नुयादाज्यस्याग्रतो हरणं च न प्राप्नुयात् । अतो दर्भनिवृत्त्यर्थमाज्यस्य प्रापणार्थं चाग्रत इति वचनम् । एवं चेद्धिरण्यवद्वचनं पूर्वोक्तस्य बहुविद्ब्राह्मणाग्न्युद्धरणस्य प्रापणार्थम् ।

**अथैतदाज्यं जुहुयात्पुरस्तात्प्रत्यङ्मुख**
**उपविश्योषाः केतुना जुषतां स्वाहेति ।**

**दे० भा०**—अथानन्तरं प्रणयनादनन्तरमेतदाज्यमेतच्चतुर्गृहीतमाज्यमध्वर्युर्जुहुयात् । पुरस्तादाहवनीयस्य पूर्वदेशे प्रत्यङ्मुख उपविश्योषाः केतुना जुषतां स्वाहेत्यनेन मन्त्रेण । एतदितिवचनादविकृतं चतुर्गृहीतं भवति । अन्यथा ह्यन्यदाज्यं प्राप्नोति । चतुर्गृहीतं प्रणयनार्थमेव स्याद्रजतवत्स्यात् । सर्वाः प्राङ्मुख इति प्राप्ते प्रत्यङ्मुख इत्याह । प्रणयनाधिकाराद्यथा गतस्तथैव स्थित्वा जुहुयादिति प्राप्त उपविश्योषा इत्युच्यते । ब्राह्मणोऽग्निं प्रणयेदिति वचनात्प्रणयनादन्यत्सर्वमध्वर्युः ।

**ना० वृ०**—हिरण्यरजतयोरग्रतो हरणमेव कार्यम् । आज्यस्य कार्यान्तरमुच्यते—निहितेऽग्नावाहवनीयस्य पुरस्तात्प्रत्यङ्मुख उपविश्य 'उषाः केतुना' इति तदाज्यं जुहुयात् ।

## कालात्ययेन शेषः ।

**दे० भा०**—प्रदोषान्तो होमकाल इत्येवमादिविधिना शेषो विधिर्व्याख्यातः । अभ्युदिते ह्यस्तमिते चोभयत्रापि शेषो विधिः कालात्ययेन व्याख्यातः । उभयोरधिकारात् । यद्यभ्यस्तमिताधिकारो निवृत्तो बहुविद्ब्राह्मणोऽग्निं प्रणयेदित्येतदभ्युदिते न प्राप्नोति तस्मादुभयोरधिकारः । अभ्यस्तमितेऽग्निं प्रणीय चतुर्गृहीतं हुत्वाऽग्निहोत्रमुपसाद्य जपित्वा जुहुयादिष्टिश्च वारुणी । अभ्युदिते प्रणीयाऽऽज्यं हुत्वा पुनश्चतुर्गृहीतं हुत्वोपसाद्य व्याहृतीर्जपित्वाऽनुगमनमन्त्रः प्रतिषिद्धम् । तत इष्टिरित्येवमाद्या प्रायश्चित्तसमाप्तेः सर्वं समानम् ।

**ना० वृ०**—उभयोः कालयोरनुद्धृतप्रायश्चित्तशेषः कालात्ययप्रायश्चित्ताभ्यामेवोक्तः

स्वेन स्वेन कालात्ययप्रायश्चित्तेनाग्निहोत्रमुपसाद्येत्यादि वारुणीष्ट्यन्तं सायंकाले भवति। प्रातःकालेऽपि तदाद्येव व्रातभृतीष्ट्यन्तं भवति।

**न त्विहाग्निरनुगम्यः।**

**दे० भा०**—कालात्ययेन शेष इति वचनादनुगमयित्वा चाऽऽहवनीयमित्यनुगमनं प्राप्तं तत्प्रतिषिध्यते। इह त्वभ्युदितेऽग्निर्नानुगमयितव्यः। तुशब्दो व्यावृत्त्यर्थः। इहवचनात्कालात्ययेऽनुगमनमेवान्यथा तत्रापि प्रतिषेधः स्यात्। आरभ्य प्रतिषेधे विकल्पो भवति।

**ना० वृ०**—प्रातःकालेऽयं विशेषः—अनुगमयित्वा चाऽऽहवनीयमित्येतन्न भवति। तेनाग्निहोत्रार्थेष्वेवाग्निषु सायंहोमान्तं भवति।

**आहवनीये चेद्ध्रियमाणे गार्हपत्योऽनुगच्छेत्स्वेभ्य एनमवक्षामेभ्यो मन्थेयुरनुगमयेत्त्वितरम्।**

**दे० भा०**—आहवनीये ध्रियमाणेऽनुपशान्ते चेद्यदि गार्हपत्योऽनुगच्छेदुपशमे (शाम्येत्) ततस्तेभ्य एनं गार्हपत्यमवक्षामेभ्य उल्मुकेभ्यो मन्थेयुः। अनुगमयेत्त्वितरम्। गार्हपत्यादितरमाहवनीयमनुगमयेदुपशमयेदिति। अन्वित्यभावे स्वेभ्य इत्यनुच्यमानेऽन्यस्याग्नेरवक्षामारम्भात्पूर्वमाहवनीयमनुगमयित्वा गार्हपत्यं मन्थेदिति दर्शितं भवति। तस्मादुभयोरनुगतयोरुत्तरेणोपपद्यते। एनं गार्हपत्यं मन्थयेन्नाऽऽहवनीयमिति। तुशब्दोऽवधारणार्थः। अनुगमयेदेवेतरं वक्ष्यमाणेषु सर्वेषु मन्थनकल्पेषु।

**ना० वृ०**—विद्यमान आहवनीये गार्हपत्यो यद्यनुगच्छेत्तदा स्वेभ्योऽवक्षामेभ्य एनं गार्हपत्यं मन्थेयुः। तत इतरमनुगमयेत्। आहवनीयमित्यर्थः। गार्हपत्यशब्दादेव गार्हपत्यप्रत्यये सिद्धे तत्प्रत्ययार्थमेनमिति वचनं सर्वावस्थस्य गार्हपत्यस्यानुगमने मन्थनेनैवोत्पत्तिरेवंरूपा च सेतिज्ञापनार्थम्। तुशब्दादप्ययमर्थो द्योत्यते। गार्हपत्यमनुगतं मन्थनेनैवोत्पादयेत्। ध्रियमाण आहवनीयेऽयं विशेषस्तं चानुगमयेदिति। अवक्षामाणि मन्थनसमर्थानि काष्ठानि।

**क्षामाभावे भस्मनाऽरणी संस्पृश्य मन्थयेदितो जज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः। स गायत्र्या त्रिष्टुभा जगत्याऽनुष्टुभा च देवेभ्यो हव्यं वह नः प्रजानन्निति।**

**दे० भा०**—अन्यथा क्षाममन्थन उभावरणी संस्पृश्य मन्थयेत् "इतो जज्ञे" इति मन्त्रं जपित्वा मन्थयेत्। अथ मन्त्रो (इमं मन्त्रं) यावन्मन्थयेत्तावज्जपेत्।

ना० वृ०—मन्थनसमर्थक्षामाभावे भस्मनाऽरणीं संस्पृश्य लेपयित्वा ततो मन्थयेत् 'इतो जज्ञे' इति मन्त्रेण। मन्थयेदिति णिचः प्रयोगात्प्रकृते कर्मणि यः कर्ता स एव मन्त्रं ब्रूयात्। ये केचन समर्था मन्थयेयुरित्येवमवगम्यते। अरणीमन्थन एवायं मन्त्रो नावक्षामन्थने। यद्युभयोरभिप्रेतः स्यात्पूर्वत्रैव मन्त्रं ब्रूयादनुगमयेदित्वितरमितिवत्। तथा च न कृतम्। तेन पूर्वस्मिन्मन्थने मन्त्रो नास्तीति सिद्धम्। अवरोहणमन्त्रस्तूभयोरपि भवति। अरणीगतावरोहणस्यापि तस्मिन्नेव सूत्रे विधातुमिष्टत्वात्।

**मथित्वा प्रणीयाऽऽहवनीयमुपतिष्ठेताग्ने सम्राळिषे राये रमस्व सहसे द्युम्नायोर्जेऽपत्याय। सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावतामन्नादं त्वान्नपत्यायाऽऽदध इति।**

दे० भा०—उभौ कल्पावधिकृत्य विधानान्मथित्वाऽन्यतमेन कल्पेन तदनन्तरं प्रणीयाऽऽहवनीयमुपतिष्ठेत—अग्ने सम्राळिष इत्यनेन मन्त्रेण। मथित्वा प्रणीयेति संबन्धवचनादाहवनीयमनुगमय्य मन्थनं भवति। मन्थनादनन्तरमेतत्प्रणयनम्। आहवनीयग्रहणं गार्हपत्याधिकारात्।

ना० वृ०—मथित्वेति वचनम् 'इतो जज्ञे' इत्यस्य प्रणयनमन्त्रत्वशङ्कानिवृत्त्यर्थम्।

**अत एवैके प्रणयन्त्यन्वाहृत्य दक्षिणम्।**

दे० भा०—अत आहवनीयादेवैके शाखिनोऽन्यमाहवनीयं प्रणयन्ति। दक्षिणमग्निमाहवनीयसमीपं नीत्वा प्रत्यग्दक्षिणमाहृत्यानन्तरमाहवनीयं प्रणयेत्। आहवनीये चेद्ध्रियमाण इत्यधिकारादत एवेत्यनेनाऽऽहवनीयोऽभिसंबध्यते। एवशब्दोऽवधारणार्थः। आहवनीयादेव प्रणयन्ति। एक इतिवचनाद्विकल्पः। अन्वाहृत्येति साकाङ्क्षवचनाद्दक्षिणाग्निमाहृत्य प्रणयेत्।

ना० वृ० अत्रैव विषयेऽयं द्वितीयः कल्पः। ध्रियमाण आहवनीये गार्हपत्यानुगमने सत्यत एवाऽऽहवनीयाद्गार्हपत्यभूतादन्यमाहवनीयं प्रणयन्त्येके। तथा सति दक्षिणाग्निरप्यनुहर्तव्यः।

**सहभस्मानं वा गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत्।**

दे० भा०—अयं वा कल्पो भवति भस्मना सहाऽऽहवनीयमुद्धृत्य दक्षिणेन विहारं हृत्वा गार्हपत्यायतने निधाय स्थापयित्वाऽथानन्तरं प्राञ्चं पूर्वस्यां दिश्याहवनीयमुद्धरेत्। प्राञ्चमितिवचनाद्दक्षिणेन विहारमाहृत इति सिद्धम्। दक्षिणेन विहारं हृत्वेति ब्राह्मणवच-

नादाहवनीयश्रवणात्तस्य गार्हपत्यसंज्ञा सिद्धा । अन्यथाऽऽहवनीय एवायमेव कल्पो ब्राह्मणे दृष्टः । इतरे प्रतिषिद्धाः । यदि मन्थेदश्रुतृव्यं यजमानस्य जनयेत् । यदि प्राञ्चमायतनाच्च्यवेत यदि प्रत्यञ्चमसुरवच्चद्यं तन्वीत सहभस्मानं दक्षिणेन विहारं कृत्वागार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत् । एतदेव प्रशस्तमितरे विकल्पाः श्रुत्यन्तरेऽपि प्रशस्ताः सर्व एव कल्पाः ।

**ना० वृ०**—इदमपि कल्पान्तरम् । आहवनीयमुद्धरेदित्येतावतैव सिद्धे प्राञ्चमितिवचनमाहवनीयात्प्रत्यञ्चं गार्हपत्यं प्रणीयापि विहारसिद्धिरितीदमपि कल्पान्तरमिति ज्ञापनार्थम् । एते चत्वारः पक्षा ब्राह्मणे समुद्दिष्टाः । तत्र निन्दा विध्यन्तरस्तुत्यर्था । अतः सर्वेषां क्वचिच्छास्त्रान्तरे विधानमस्तीति तान्सर्वान्कर्तव्यतया सूचितवानाचार्यः । सहभस्मानमित्यस्मिन्पक्षे दक्षिणेन विहारं नीत्वा गार्हपत्यायतने निधानम् ।

**तत इष्टिरग्निस्तपस्वाञ्जनद्वान्पावकवान् ।**

**दे० भा०**—तत इष्टिस्तस्मान्मन्थनाद्विहारणानन्तरमिष्टिर्भवति सा वक्ष्यते । अधिकारे पुनस्तत इति वचनात्ततस्ततस्तस्मात्कल्पादियमिष्टिर्भवति । अन्यथाऽन्त्यादेव कल्पादिष्टिः स्यात् । अग्निस्तपस्वाञ्जनद्वान्पावकवानिति देवता ।

**ना० वृ०**—एकाऽत्र देवता स चाग्निस्त्रिभिर्गुणैर्युक्तः ।

**आयाहि तपसा जनेष्वग्ने पावको अर्चिषा । उपेमां सुष्टुतिं मम । आ नो याहि तपसा जनेष्वग्ने पावक दीद्यत् । हव्या देवेषु नो दधदिति ॥**

**दे० भा०**—आयाहीति यथासमाम्नाते याज्यानुवाक्ये । एषाऽनुगमनेष्टिरित्युक्तमध्वर्यूणामस्माकमप्युक्तं तत इष्टिरिति । तस्मात्सर्वेष्वनुगतेष्वप्येषेष्टिस्तत इष्टिरिति योक्ता सा सर्वेषामनुगमन इष्टा ।

**प्रणीतेऽनुगते प्राग्घोमादिष्टिः ।**

**दे० भा०**—प्रणीत आहवनीये होमात्प्रागनुगते होमात्पूर्वमुपशान्त इष्टिर्भवति । तस्मात्प्रणीत इत्याहवनीयस्याधिकारः क्रियते । प्राग्घोमादितिवचनाद्धोमादूर्ध्वमनुगमनेऽन्यत्प्रायश्चित्तं वक्ष्यति—अग्नावनुगतेऽन्तराऽऽहुती हिरण्य उत्तरां जुहुयादिति । ततो हिरण्य एव होमशेषं समापयेन्न पुनर्विहरेत् । आ प्राग्घोमादनुगते विहृत्येष्टिं कुर्यात्सा वक्ष्यते ।

**ना० वृ०**—अग्निहोत्रार्थं प्रणीत आहवनीयेऽनुगतप्रायश्चित्तत्वेनेयमिष्टिः कर्तव्या ।

प्राक्पूर्वाहुतिप्रक्षेपादेषैवेष्टिः प्रायश्चित्तिर्भवति । उत्पत्तिस्तु ब्राह्मणोक्ता भवति 'तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येदित्यादि हिरण्यं पुरस्कृत्य सायमुद्धरेद्रजतमन्तर्धाय प्रातरुद्धरेत्' इत्यत्रोक्ता । इयमेवोत्पत्तिरस्मिन्नवसरे 'प्रणीतो वा प्राग्घोमादुपशाम्येत्' इति वचनात् । अग्नावनुगतेऽन्तराहुती इति वक्ष्यति। उत्तराहुत्यां हुतायामग्न्युत्पत्तेः प्रयोजनं नास्ति । एवमग्निहोत्रे निर्वाह इत्यस्मत्सूत्रानुसारेण मन्यामहे ।

## अग्निर्ज्योतिष्मान्वरुणः ।

**दे० भा०**—अग्निर्ज्योतिष्मान्देवता वरुणो द्वितीया देवता ।

**ना० वृ०**—द्वे देवते । ज्योतिष्मानित्यग्नेर्गुणः ।

**उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थादिति । सर्वांश्चेदनुगतानादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वाऽग्न्याधेयं पुनराधेयं वा ।**

**दे० भा०**—उदग्ने बृहन्निति अग्नेर्ज्योतिष्मतो याज्यानुवाक्ये वरुणस्योक्ते वरुणप्रघासेषु । शेषं पौर्णमासेन । सर्वांश्चेदनुगतान्सर्वांश्चेदुपशान्तानग्नीनादित्योऽभ्युदियाद्वाऽस्तमियाद्वा तदाऽग्न्याधेयं प्रायश्चित्तं भवति । पुनराधेयं वा भवति । सर्वेष्वनुगतेषु मथित्वा प्रणयने प्राप्त इदमुच्यते । अन्येषामध्वर्यूणां यजमान एवाग्नयो भवन्तीति वचनादभ्युदितेऽस्तमितेऽपि अरण्योः प्रत्यवरोहणं कृत्वा पृथक्कृत्य जुहुयुः ।

**ना० वृ०**—यदि सर्वेष्वग्निष्वनुगतेष्वादित्योऽस्तमुदयं वा गच्छेत्तदाऽग्न्याधेयं पुनराधेयं वा प्रायश्चित्तं भवेत् । अनयोरेव कालयोः शास्त्रान्तरे गार्हपत्याहवनीययोर्द्वयोरेवानुगतावेतत्प्रायश्चित्तमुक्तम् । तस्मिञ्शास्त्रे दक्षिणाग्निर्भिन्नयोनिः । अत एवं विनिवेशः । एकयोनित्वे सर्वानुगमने भवति भिन्नयोनित्वे द्वयोरेवानुगमन इति । अत्राग्न्याधेयपुनराधेयाभ्यां सेष्टिके ते गृह्येते अग्न्युत्पादकत्वसामान्यात् । एतदर्थमेवाऽऽधानाद्द्वादशरात्रमित्यत्र सेष्टिकेऽग्न्याधान आधानशब्दप्रयोगः संव्यवहारार्थं कृतः । तस्मिन्काले सर्वदा सर्व एवाग्नयो विहृता एव प्रायेणाऽऽसते । तत्र केवलगार्हपत्यानुगमने मन्थनेनोत्पाद्य तपस्वतीष्टिः कार्येत्युक्तम् । दक्षिणाग्न्यनुगमनेऽपि स्वयोनितो विहृत्य सैवेष्टिः कार्या । आहवनीयानुगमनेऽपि प्रायश्चित्तविशेष उक्तः । द्वयोर्द्वयोरनुगमने तान्येव यथासंभवं कर्तव्यानि । अतः सर्वानुगमन इयमवशिष्यते । अतः सर्वशब्दाविवक्षायामपि नैमित्तिकस्य स्वभावपर्यालोचनया सर्वानुगतावेवैतद्भवतीति मन्तव्यम् । एकयोनित्वे भिन्नयोनित्व उक्तो विनिवेशः । उभयोरनुगमनेऽपि विधीयमानस्याग्न्याधेयस्य सर्वोत्पादकस्वभावात्यागात्तद्विधानसामर्थ्यादेवानष्टोऽपि दक्षिणाग्निर्नष्ट इति गम्यते । विहृतेष्वेवं भवति । अविहृतेष्वपि किं गार्हपत्यानुगमने सर्वानुगमोऽस्ति न वा । अस्तीति ब्रूयात् ।

तत्र हि सर्वेऽग्नयः समवेता इति गम्यते। ततो विहरणदर्शनात्। कथं तत्र समवायः। अङ्गारसमवायस्तावन्नास्ति। कर्मार्थं पृथक्कृतानां कर्मसमाप्तौ तत्रैवानुगमनदर्शनात्। अथायमभिप्रायः—अङ्गाराश्रयो यो दक्षिणाग्न्याहवनीयाख्यः शास्त्रगम्यः स कर्मसमाप्तौ गार्हपत्याङ्गारानुप्रविशति। अन्यथा तत्र उद्धरणविधानं नोपपद्यते। तत्संसर्गे संसर्गदोषश्च नास्ति। अङ्गारसंसर्गो हि सः। तथा च शास्त्रान्तरे वचनम्। यदि पूर्वोऽनुगतः संवर्ध्य पश्चाद्धि स तर्हि गतः इत्यत्रमपि न युज्यते। अविहृतावस्थायां गार्हपत्ये "गार्हपत्यं प्रज्वल्य" इति सूत्रप्रयोगात्। तथा च शास्त्रान्तरे सूत्रकारप्रयोगो मन्त्रवर्णश्च दृश्यते—"गार्हपत्यमभिमन्त्रयते सुगार्हपत्यमभिमन्त्रयते सुगार्हपत्यः" इति। तेनावगम्यते तत्रानुप्रवेशोऽन्यन्तरस्य नास्तीति। यत्पुनः "पश्चाद्धि स तर्हि गतः" इति तदप्यन्यपरम्। यदि हि सर्वदाऽनुगतस्याऽऽहवनीयस्य गार्हपत्यात्प्रणयनेनैवोत्पत्तिः स्यात्तदैवैतल्लिङ्गमनुप्रवेशस्य तत्र हि शास्त्रे मन्थनादप्युत्पत्तिरुक्ता। अतोऽस्यायमर्थः—यस्मिन्ननुगमने गार्हपत्यात्प्रणयनेनोत्पत्तिरुक्ता तदाऽनुगतेऽन्तरा संचरणमविरुद्धं मन्थनोत्पाद्येऽनुगतेऽप्यन्तरा न संचरितव्यमिति। अतोऽन्यपरत्वादेवास्य वाक्यस्यानुप्रवेशो लिङ्गं न भवितुमर्हति। अतस्तत्र समवायः प्रत्यक्षेण शास्त्रेण वा लक्षयितुं न शक्यते। कथं तर्हि तत्र उद्धृत आहवनीयादिर्भवति। वचनगम्यो हि सः। वचनमेवं भवति 'गार्हपत्यं प्रज्वल्य ततो दक्षिणाग्निमुद्धृत्य गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्' इति। तेनाधिकृतेन पुरुषेण तन्नियुक्तेन वाऽग्निहोत्रार्थं स्वकाले यथोक्तेन विधिना य उद्ध्रियते स एवाऽऽहवनीयादिर्भवति नान्यथा। अन्यथा चेदुद्ध्रियते तदा समोप्य तमग्निं विक्षेपप्रायश्चित्तं कर्तव्यं नान्यत्। अभ्युदितेष्टौ तु वचनान्मध्योद्धृतोऽप्याहवनीयादिर्भवति। एवं तर्हि कर्मान्तरालकाले क्वाग्नौ तिष्ठति। वयमपि न जानीमः क्वासौ तिष्ठतीति। एतावदत्रावगन्तुं शक्यते। सर्वकर्मार्थमग्नय आहिताः। तत्र गार्हपत्यो यावज्जीवं धार्यते वचनात्। इतरौ तु कर्मणि कर्मण्युद्ध्रियेते। गतश्रियः सर्वे धार्यन्ते वचनादेव नान्यदतोऽवगन्तुं शक्यते। एवं सति कर्मापूर्ववत्तिष्ठति। यथा यागादिजनितान्यपूर्वाणि यावत्फलभोगसंबन्धं तिष्ठन्ति तथाऽऽहवनीयादिरपि तिष्ठतीति। अतोऽनुद्धृतेषु गार्हपत्यानुगमने सर्वानुगमनं नास्तीति। तत्राग्न्याधेयं पुनराधेयं वा न कर्तव्यमिति सिद्धम्।

## समारूढेषु चारणीनाशे।

दे० भा०—समारूढेषु चारण्याः समारूढेषु चाग्निषु यच्चरण्योर्नाशोऽरणीनाशस्तस्मिन्नरणीनाशेऽग्न्याधेयं वा भवति। चशब्दः समुच्चयार्थः। येषां यजमान एवाग्नयो भवन्तीति वचनाच्चे अरणी आहृत्य तयोः प्रत्यवरुह्य मन्थन्ति।

**ना० वृ**—अग्निष्वरण्योः समारूढेषु सत्स्वरण्योर्नाशेऽग्न्याधेयं पुनराधेयं वा कर्तव्यम् । अन्यतरारणीनाशेऽपि भवत्येतत्प्रायश्चित्तं तयोरेकैकस्या एव कार्यविशेषे नियमाज्जायापती संस्तुतत्वाच्च । नन्वरणीनाश इति शब्द एकस्यामप्यनष्टायां न प्रवर्तेत इति । सत्यम् । असौ शब्दो न प्रवर्तते । तथाऽपि मन्थनपदार्थो नैकया संपादयितुं शक्यत इत्यनष्टाऽपि नष्टैवेति कृत्वोक्तम् । यदि परमनष्टामेव द्विधा कृत्वा मन्थनसिद्धिरिति । तथाऽपि नैवं वक्तुं शक्यते-उपादानकालेऽरणी आहरेदिति । द्वयोरुपादानमदृष्टार्थं स्यादिति युक्तं कार्यभेददर्शनादिति । एवं सत्युर्वशीपुरूरवःसंस्तुतिरधरोत्तरयोररण्योः श्रूयमाणा चोपपन्ना भवतीति युक्तम् ।

## अथाऽऽग्नेय्य इष्टयः ।

**दे० भा०**—अथशब्दोऽधिकारार्थः । आग्नेय्य इष्टयोऽधिक्रियन्ते । यदित ऊर्ध्वमनुक्रमिष्यामस्तदाऽऽग्नेयीनामिष्टीनां विधानम् । आग्नेय्य इत्यधिकारादित ऊर्ध्वं ये गुणास्ते वक्ष्यन्ते । तेऽग्नेर्गुणा भवन्ति । व्रतपतयेऽग्नयेऽग्नये ऽग्निमत इष्टि र्भवति । इष्टिवचनादिष्टयो भवन्ति । आहुतयो भवन्ति । प्रत्याम्नाये वक्ष्यमाणाभ्यामृग्भ्यां तस्यै तस्यै देवताया आहुतिं जुहुयात् । इष्टयो वक्ष्यन्ते ।

**ना० वृ०**—अथानन्तरं या वक्ष्यन्ते ता अग्निदेवत्या इष्टय इति वेदितव्यमित्यस्य सूत्रस्यार्थः । यान्यत्र चतुर्थ्यन्तानि पदानि तान्यग्नेर्गुणवाचकानीत्यर्थः । एतेनावगम्यते सर्वत्र चोदितैव देवता चोदनायां याज्यानुवाक्यादिगम्या देवतागुणस्तु चोदनात एवावगन्तव्यः । कथं तर्हि वैश्वानरपार्जन्यायां वैश्वानरशब्दोऽग्नेर्गुणः । तयोरेव याज्यानुवाक्ययोस्तत्र प्रवेशात् । अत्र हि वैश्वानरशब्दस्याग्निगुणत्वं चोदितमेवेति ।

## साग्नावग्निप्रणयनेऽग्निवते ।

**दे० भा०**—साग्नावग्निप्रणयनेऽग्निनाऽऽयतनस्याग्निः साग्नावायतने चेदग्निः प्रणीयतेऽनुपशान्तेऽग्नावनुपशान्त इति मत्वा ह्यग्निं प्रणयति प्रणीतेऽग्नौ यदि दृश्यतेऽग्निस्तस्मिन्नग्नावग्निप्रणयने सत्यग्नयेऽग्निवत इष्टिर्भवति । तस्या वक्ष्यति याज्यानुवाक्ये । शेषं पौर्णमासेन स यद्यनुपश्येदुदुह्य पूर्वमपरं निदध्यादित्युक्तं ब्राह्मणे तथाऽपि प्रायश्चित्तं विद्यते ।

**ना० वृ०**—निवृत्तकर्मणाऽनिवृत्तकर्मणा वाऽग्निना सहित आहवनीयायतने यद्यन्योऽग्निराहवनीयार्थं उद्ध्रियेत तमग्निमनिधायैव स्मरति चेदायतनस्थमुदुह्येदानीमुहृतं निदध्यात् । तथा सतीष्टिर्न भवति । एतस्मिन्नपि पक्षे यद्यनपवृत्तकर्मोद्धृतेत तदा व्याहृतिहोमः कर्तव्यः । अपवृत्तकर्मा चेन्न किंचिदपि प्रायश्चित्तं विद्यते । यद्यस्मृत्वैव तस्मिन्पूर्वप्रणीते निदध्यात्तदेयमिष्टिः कार्या ।

क्षामायागारदाहे शुचये संसर्जनेऽग्निनाऽन्येन ।.

दे० भा०—क्षामायागारदाहे यजमानस्य गृहदाहेऽग्नये क्षामवत इष्टिर्भवति । तस्या याज्यानुवाक्ये वक्ष्यति । शेषं पौर्णमासेन । अध्वर्यूणां क्षामवत इति चोदितमिह तु क्षामायेति । तस्मादध्वर्यवोऽग्नये क्षामवत इति प्रेष्यन्ति । तैः सहाग्निं क्षामवन्तमावहेति । शुचयेऽग्नय इष्टिर्भवति । अग्निनाऽन्येन श्मशानाग्निना संसर्गे सति तस्या उक्ते याज्यानुवाक्ये आधानेष्ट्यामन्येनेति श्मशानाग्निनेत्युक्तं भवति । उत्तरत्रान्येति । उक्तं च श्रुत्यन्तरे च ।

ना० वृ०—अन्य इति शवाग्निरुच्यते ।

मिथश्चेद्विविचये ।

दे० भा०—यदि सर्वेऽग्नयो मिथो भवन्त्येकीभावं गच्छन्ति तथा सत्यग्नये विविचय इष्टिर्भवति । तस्या याज्यानुवाक्ये वक्ष्यति । शेषं पौर्णमासेन । चेदित्यनित्यभावे ।

ना० वृ०—गार्हपत्यादयः सर्वे द्वौ वा परस्परं यदि संसृज्येरंस्तदा विविचय इष्टिः कर्तव्या ।

गार्हपत्याहवनीययोर्वीतये ।

दे० भा०—गार्हपत्याहवनीययोर्मिथोभावे द्वयोरेवैकीभावे सत्यग्नये वीतय इष्टिर्भवति । तस्या याज्यानुवाक्ये वक्ष्यति । शेषं पौर्णमासेन । मिथोभूतावग्नी विभज्य स्थानेषु स्थापयित्वेष्टिं कुर्यात् ।

ना० वृ०—पूर्वस्यायमपवादः ।

ग्राम्येण संवर्गाय ।

दे० भा०—ग्राम्येणाग्निना संसर्गे सत्यग्नये संवर्गायेष्टिर्भवति । तस्या याज्यानुवाक्ये वक्ष्यति । शेषं पौर्णमासेन । इह ग्राम्येणेति वचनादारण्येनाग्निना संसर्गे इष्टिरन्या निर्मातव्या तदुक्तं ब्राह्मणे—तस्य दावाग्निना संसर्ग इति ।

ना० वृ०—ग्राम्यः पचनाग्निः ।

वैश्रुतेनाप्सुमते वैश्वानराय विमतानामन्नभोजने ।

दे० भा०—विद्युद्भवो वैद्युतस्तेनाग्निना संसर्गेऽग्नयेऽप्सुमत इष्टिर्भवति । तस्या याज्यानुवाक्ये वक्ष्यति । शेषं पौर्णमासेन । वैश्वानरायाग्नये वैश्वानरायेष्टिर्भवति । विमता नाम विद्वेषिणो वैरिणस्तेषां ,विमतानामन्नभोजने सति तेषामन्नं यजमानो यदि भुङ्क्ते । तस्या याज्यानुवाक्ये उक्ते चातुर्मास्यप्रकरणे ।

ना० वृ०—विमता विमनस्काः। शत्रव इत्यर्थः। द्विषदन्नं यद्याहिताग्निर्भुञ्जीत तदा वैश्वानरायेष्टिः कार्या।

**सुरभय एव यस्मिञ्जीवे मृतशब्दः।**

दे० भा०—सुरभय एवाग्नये सुरभय इष्टिरेव भवति न पूर्णाहुतिः। यस्मिन्यजमाने जीवे भवति मृत इतिशब्दः श्रूयते प्रवासगते यजमाने मृत इति लोके शब्द उत्पद्यते। एवशब्दोऽवधारणार्थः। इष्टिमवधारयति। अग्नये सुरभय इष्टिरेव भवति पूर्णाहुतावाहुतिरिति वक्ष्यति। इष्टिस्थाने पूर्णाहुतिर्वेति विभाषानिवृत्त्यर्थमेवकारः।

ना० वृ०—यस्मिन्नाहिताग्नौ जीवत्येव मृत इति यदि शब्दः संजायेत तदेयमिष्टिः कार्या। एवशब्दो गुणनियमार्थः। सुरभय एव न सुरभिमत इति। तेनान्यत्र गुणान्तरसंबन्धोऽप्यभ्युपगतो भवति यथा क्षामाय क्षामवते वेत्येवमादि।

**अग्निनाऽग्निः समिध्यते त्वं ह्यग्ने अग्निनाऽग्ने त्वमस्मद्युयोध्यमीवा अक्रन्ददग्निस्तनयन्निव द्यौर्वि ते विष्वग्वात जूतासो अग्ने त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये यो अग्निं देव वीतये कुवित्सु नो गविष्टये मा नो अस्मिन्महाधनेऽप्स्वग्ने सधिष्टव यदग्ने दिविजा अस्यग्निर्होता न्यसीदद्यजीयान्त्साध्वीमकर्देव वीतिं नो अद्येति।**

दे० भा०—अग्निनाऽग्निरिति नवेष्टयो नानानिमित्तेषु व्याख्याता यासामन्ते मृतशब्द आस्ते। शुचये याज्यानुवाक्ये आधानेष्ट्यामुक्ते। अग्नेर्वैश्वानरस्य चातुर्मास्यप्रकरण उक्ते याज्यानुवाक्ये। अन्या याः सप्तेष्टयस्तासामनुक्रमेण याज्यानुवाक्या वक्ष्यति। एकैकस्या द्वे द्वे ऋचौ। अग्निनाऽग्निरिति चतुर्दश प्रतीकानि।

**अपि वा प्रायश्चित्तेष्टीनां स्थाने तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते।**

दे० भा०—अपि वा प्रायश्चित्तेष्टीनां स्थानेऽपि वाऽर्थविकल्पः। प्रायश्चित्तेष्वाम्नातेषु या या इष्टयस्तासामिष्टीनां स्थाने तस्यै देवतायै तन्नाम्ना चतुर्थीविभक्त्या स्वाहाकारेण पूर्णाहुतिः। स्रुचि चतुर्गृहीतं गृह्यते। चतुर्गृहीतेन पूर्णां कृत्वा जुहुयादिति विज्ञायत इत्येवं ज्ञायते श्रूयते श्रुतिवचनादिष्टितुल्यः। अपिशब्दस्तुल्यविकल्पार्थोऽयं विधिः। अयमपीति वेति विकल्पार्थे प्रायश्चित्ताधिकारे पुनः प्रायश्चित्तग्रहणादनाम्नातेष्विष्टिषु प्राप्त्यर्थोऽन्यथाऽधिकृतानामेव स्यात्। इष्टिग्रहणादिष्टीनामेव स्थान आहुतिर्भवति यदन्यत्कर्म तन्न विद्यते। यथाऽऽम्नाते प्रायश्चित्तस्थाने वचनादिष्टिधर्मः। परिस्तीर्य ब्रह्माणं दक्षिणतो यजमानं चोपवेश्य पत्नीं च। गार्हपत्यस्योत्तरते जुहूं स्रुवमाज्य-

स्थालीं प्रोक्षणीं चाऽऽसाद्य प्रोक्षणीं संस्कृत्य पात्राणि प्रोक्ष्य गार्हपत्य आज्यं विलाप्य पवित्रान्तर्हितायां स्थाल्यामाज्यं निरुप्योत्पूय स्रुक्स्रुवौ संमृज्य स्थालीं स्रुक्स्रुवौ च गृहीत्वाऽऽहवनीयसमीपे कुशेषूपसाद्येध्ममुपसमा*धाय स्रुचि चतुर्गृहीतं गृहीत्वा देवतानाम्ना चतुर्थ्यन्तेन स्वाहाकारान्तेन यजमानेऽन्वारब्धे जान्वाच्याऽऽहुतिं जुहुयात् । ऐष्टिके कर्मणि देवतायै हविश्चतुरवत्तं गृह्यते । तद्धर्मत्वादिहापि चतुर्गृहीतं गृह्यते । अवषट्कारप्रदानेष्वध्वर्युरासीनो जुहोति तस्यै तस्या इतिवचनाद्देवतानेकत्वे प्रतिदैवतं जुहुयात् । देवतावचनाद्देवताया नाम्ना जुहुयात् । श्रुत्यन्तरे तु याज्यानुवाक्याभ्यां श्रूयते । देवताया इति चतुर्थ्या निर्दिष्टत्वाच्चतुर्थ्या विभक्त्या हूयते । यथाऽग्नये पथिकृते स्वाहेति । पूर्णाहुतिमिति वचनाच्चतुर्गृहीतेनाऽऽपूर्य हूयते । जुहुयादिति चोदिते स्वाहाकारो भवति । श्रुतिप्रमाणाद्धि प्रमाणं भवति ।

**ना० वृ०**—प्रायश्चित्तप्रकरणे या इष्टय इष्टिशब्देनैव चोद्यन्ते याश्च ब्राह्मणोक्तास्तासामयं वैकल्पिको विधिरुच्यते । यास्तासामिष्टीनां देवतास्तासामेकैकस्यै देवताया एकैकां पूर्णाहुतिं जुहुयात् । द्वादशगृहीतेन स्रुचं पूरयित्वा यद्धूयते सा पूर्णाहुतिरित्युच्यते । अयं पुनरनुपक्रान्तदर्शपूर्णमासस्य भवति दर्विहोममध्ये च नान्यत्र भवति ।

**अप एवान्यानि मृन्मयानि । भूमिर्भूमिमगान्माता मातरमप्यगात् ।**
**भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥**

**दे० भा०**—अप एवान्यानि मृन्म+यानि पात्राणि अप एवाप्स्वेव प्रक्षिपेयुर्भूमिरित्येतेन मन्त्रेण ।

**ना० वृ०**—कपालेभ्योऽन्यानि मृन्मयानि भिन्नान्यभिन्नानि च । 'भूमिर्भूमिम्' इति मन्त्रेणाप एवाभ्यवहरेन्न संदध्यादित्यर्थः ।

**अग्निहोत्राय कालेऽग्नावजायमानेऽप्यन्यमानीय जुहुयुः ।**

**दे० भा०**—अग्निहोत्राय कालेऽग्निहोत्रमिति च कर्मनामधेयम् । अग्निहोत्रार्थेऽपराह्णे गार्हपत्यं प्रज्वलयेति तस्मिन्काले यद्यनुगतो भवति गार्हपत्यस्ततः स्तेभ्य एनमवक्षामेभ्यो मन्थेयुः क्षामाभावे भस्मनाऽरणी संस्पृश्य मन्थयेत् । तमेव मन्त्रं जपित्वा यदि मथ्यमानो न जायत आदित्यश्चाभ्यस्तमेत्यभ्युदेति तमन्वग्न्याधेयं पुनराधेयं वेत्युक्तं तस्मादिदमुच्यते । कालेऽग्नावजायमाने प्रागस्तमयादन्यमनधिकृते लौकिकेऽग्नावग्निहोत्रं

---

* आहवनीयं यज्ञियैः काष्ठैः प्रज्वलयेत्यर्थः । + अग्निहोत्रस्थाली मृन्मयी सा भिन्ना चेदेतेन मन्त्रेणापोऽभ्यवहरेत् । श्वादिदशनाभिक्षितायां स्थाल्यामेतदेव प्रायश्चित्तम् ।

जुहुयुः। यथोक्तेन विधानेनानस्तमिते लौकिकमग्निमानीय मन्त्रेण विहृत्यास्तमिते जुहुयात्। अपिशब्दं कुर्वन्कालः प्रधानमिति दर्शयति। अप्यन्यमानीय जुहुयात्। न च कालातिक्रम इति। अग्नावजायमानेऽप्यन्यमानीयेति वचनादन्योऽग्निर्नित्यस्य स्थाने चोदितः। नित्यस्याग्नेर्ये धर्मा विहारोपदिष्टास्ते लौकिकस्यापि भवन्ति। समानजातिन्यायात्। ब्राह्मणपाण्यादिष्वनग्निहोमेषु विहारोपदिष्टा धर्मा न भवन्ति गार्हपत्यावेक्षणमपरयोर्होमोऽग्रेणाऽऽहवनीयं गत्वा समिध आदध्यादित्येवमादयः।

ना० वृ०—अग्निहोत्रहोमार्थं प्रणयनकाले समारूढोऽग्निर्मथ्यमानो यदि न जायेत तदाऽन्यं लौकिकमग्निमानीय प्रणीय तत्रैव होमः कार्यः। एतदनुगते न भवति। अनुगते तु मन्थनादि तपस्वतीष्ट्यन्तं तत्र प्रायश्चित्तम्। तत्राग्निसंधानमेव मन्थनप्रवृत्तौ निमित्तं नाग्निहोत्रहोमः। समारूढे तु नैमित्तिकस्याभावादग्निहोत्रायैव मन्थनस्य निमित्तं नान्यत्। अतः समारूढ एवेति युक्तमुक्तम्। तेनानुगतावजायमानेऽपि यावज्जन्म तावन्मथितव्यमेवेति। ततस्तपस्वतीष्टिः। तत्राग्निहोत्रहोमोऽनुद्धृतप्रायश्चितेन सह यदि होमकालोऽतिपन्नस्तदा मनस्वतीहोमश्च कार्यः। अप्यन्यमित्यन्यशब्दाल्लौकिकमग्निमानीय जुहुयुः। अपिशब्दाद्ब्राह्मणपाण्यादि वक्ष्यमाणमपि गम्यते।

## पूर्वालाभ उत्तरोत्तरम्।

दे० भा०—लौकिकमग्निमादिं कृत्वा सप्तसु द्रव्येषु होमो विधीयते। लाभे सति पूर्वस्मिन्नेव हूयमाने नोत्तरे हूयते।

ना० वृ०—अग्न्यादीनां पृथिव्यन्तानां पूर्वपूर्वालाभ उत्तरोत्तरं गृह्णीयुः। पूर्वालाभ इत्यलाभवचनादलाभे वचनान्तरविधिरयं न प्रतिनिधिनियम इत्यध्यवसीयते। तेन दृष्टार्थानामग्न्यादीनां मध्ये यस्य कार्यमस्ति तदेव कार्यं नान्यत्।

## ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु काष्ठेषु पृथिव्याम्।

दे० भा०—लौकिकस्यालाभे ब्राह्मणपाणौ पाण्यभावेऽजकर्णेऽजकर्णस्याभावे दर्भस्तम्बे दर्भस्तम्बाभावेऽप्सु यस्मिन्कस्मिन्होमः प्राप्नोति। ब्राह्मणपाणाविति वचनाद्दक्षिणपाणौ भवति न वा दर्भस्तम्बेऽप्स्वित्येषामुत्तरे। तत्र पाणौ चेद्वासेऽनवरोध इति वचनादेकस्मिन्पाणौ होमो भवति न पाण्योः। अनस्तमित एवं संनिहितं कृत्वाऽस्तमिते जुहुयात्। परिसमूहनपर्युक्षणे भवतः। अग्निसंस्कारत्वात्। अयमपि परोक्षाग्निर्होमविधानात्। "अग्निर्वा एष वैश्वानरो यत्पुरोहितः" इति श्रुतिः। उदकधारा न विद्यते विहाराभावादधिश्रयणं न विद्यतेऽङ्गाराभावात्। अग्नेरभावात्प्रतितपनं न विद्यते। पाणेरुत्तरतः कुशेषु सादयित्वोन्नयानीत्युक्त्वोन्नीय स्थालीमभिमृश्य समिधं स्रुचं चापरस्यां

दिशि कुशेषूपसाद्य जान्वाच्य समिधमाधायाप उपस्पृश्य हुत्वाऽवेक्षणं न विद्यते गार्हपत्याभावात् । अथोत्तरां हुत्वाऽनुप्रकम्प्य कुशमूलेषु निमृज्य पितृभ्योऽवनीयाप उपस्पृश्योदङ्ङावृत्य भक्षयेत् । भक्षयित्वाऽभ्यात्ममपः स्रुचोऽभिसंबन्धादपां सेचनं भवति । षष्ठी लुप्यते गार्हपत्याभावात् । प्रतितपनं न विद्यतेऽग्न्यभावाद्द्वयभावात्परिकर्मिण एव प्रयच्छेत् । गार्हपत्यदक्षिणाग्न्योरभावात्तयोर्होमो न विद्यते । अग्न्यभावात्समिदाधानं न विद्यते । इन्धनत्वादीदिहीति लिङ्गदर्शनादिन्धनाय पर्युक्षणपरिसमूहने तु भवतः पूर्वत्रैव । उत्तरेष्वपि द्रव्येषु च चतुर्णामेव द्रव्याणां समासेन वचनतुल्यत्वात् । तुल्यं हि व्रतविधानम् । इतरेषु व्रताभावादसमासः । काष्ठेष्वेषामभावे काष्ठेषु जुहुयात् । अग्नेरुक्तो विहारः । काष्ठे विहरणं न प्राप्नोति । विहाराभावाद्विहारोपदिष्टानि कर्माणि लुप्यन्ते । यथा पाणिहोमे । काष्ठाभावे पृथिव्यां जुहुयात् । पृथिव्या एकत्वाद्विहरणं न संभवति । विहाराभावाद्विहारोपदिष्टानि न विद्यन्ते यथा पाणिहोमे तथा पृथिव्यामेवमप्सु होमेऽपि तुल्यम् ।

ना० वृ०—अग्नौ सर्वधर्मसंभवात्तस्य पृथग्योगभावः । पाण्यादीनां चतुर्णामिन्धनादि श्रपणादि वर्जयित्वाऽन्यत्सर्वं संभवतीति पृथग्भावः । काष्ठानामबभावे विधानादुदककार्याण्यपि काष्ठेषु न स्युरिति तेषां पृथग्भावः । पाण्यादिषु पञ्चस्वाहुतिधारणार्था समिद्वतीन्धनार्थास्तु न भवन्त्येव समिधः । पृथिव्यां तु धारणार्थाऽपि समिन्न भवति काष्ठाभावे तस्या विधानात् । एवमन्यदपि विचार्य कर्तव्यम् ।

## हुत्वा त्वपि मन्थनम् ।

दे० भा०—एवमन्तेऽभावेन यद्यन्यत्स्याल्लभेत तस्मिन्हुत्वा तदानीमेव मन्थनं च प्रायश्चित्तेष्टिं कुर्यात् । तुशब्दोऽवधारणार्थो भवति । हुत्वा तदानीमेव मन्थनमिति । गार्हपत्यो नित्योऽजस्रः । तस्याननुगम्यस्य मुहूर्तमप्युपेक्षणमन्याय्यम् । पूर्वमन्थनं तु येन प्रारब्धं तेनैव कर्म कर्तव्यम् । यदि क्षामेभ्यः प्रारब्धं तेभ्य एव मन्थेयुः । यद्यरणीभ्यां प्रारब्धं ताभ्यामेव । अपिशब्दः समुच्चयार्थः । मन्थनं कृत्वाऽनुगतेष्टिं कुर्यादित्यर्थः । तत इष्टिरग्निस्तपस्वानिति । तदानीमेवेष्टिं पूर्णाहुतिं वा जुहुयात् ।

ना० वृ०—होमं कृत्वाऽनन्तरमेव मन्थनमपि भवति । अपिशब्दात्कालान्तरेऽपि मन्थनं भवति । अत्र विनिवेशः । यदा प्रयाणकाले प्रयाणं परिसमाप्तं तदा होमानन्तरमेव मन्थनं भवति । यदा त्वपरिसमाप्तं प्रयाणं तदा पुनरपि होमकाल एव मन्थनमिति । तुशब्दोऽवधारणार्थः । हुत्वा मन्थनमेव भवति न पुनर्होम इति ।

पाणौ चेद्वासेऽनवरोधः ।

दे० भा०—पाणौ यदि पूर्वं हुतमग्निहोत्रं वासेऽनवरोधः । अभ्यागतस्य ब्राह्मणस्यावरोधो न कर्तव्यः । प्रत्याख्यानं न कर्तव्यम् । आसनशयनभोजनादिभिर्यथाशक्ति यजेत् । एतदुक्तं भवति । ब्राह्मणमेव नान्यम् । एतस्य हि पाणौ कृतत्वात् ।

ना० वृ०—यदि पाणौ जुहुयात्तदा ब्राह्मणस्य वासार्थिनो नावरोधः कार्यः ।

कर्णे चेन्मांसवर्जनम् ।

दे० भा०—नान्यस्य । तस्य कर्णे हुतत्वात् । एवमाध्वर्यव उक्तम् ।

ना० वृ०—अत्राजमांसवर्जनं भवति ।

स्तम्बे चेन्नाधिशयीत ।

दे० भा०—स्तम्बे चेद्धुतं भवति । दर्भस्तम्ब एव प्रस्तरे न शयीत । एवमाध्वर्यवेऽप्युक्तम् ।

ना० वृ०—अत्र दर्भाणामनधिशयनम् ।

अप्सु चेदविवेकः ।

दे० भा०—अप्सु चेद्धुतं भवतीमा आपः शोभना इमा आपोऽशोभना इति पृथक्त्वेन विशेषकरणम् । विशेषप्रतिषिद्धास्तु न कर्तव्या एव न वर्णसंदुष्टाद्विजुष्टाः स्युरशुभागमा इति ।

ना० वृ०—अत्राविवेकोऽपामिमा भोजनीया इमा अभोजनीया इत्येवं रूपः ।

एतत्सांवत्सरं व्रतं यावज्जीविकं वा ।

दे० भा०—एतदुक्तं व्रतं सांवत्सरं भवति । संवत्सरे भवं सांवत्सरम् । संवत्सरमेतद्व्रतं भवति । व्रतकालस्यानियमे प्राप्ते कालनियमः क्रियते संवत्सरमिति । यावज्जीविकं वा । यावज्जीवति तावत्काले भवं यावज्जीविकं वा भवतीति विकल्पः ।

अग्नावनुगतेऽन्तराऽऽहुती हिरण्य उत्तरां जुहुयाद्धिरण्य उत्तरां जुहुयात् ।

दे० भा०—अग्नावनुगत उपशान्तेऽन्तरा । आहुतिश्चाऽऽहुतिश्चाऽऽहुती । अन्तरा मध्ये द्वयोराहुत्योर्मध्ये चेदग्निरनुगच्छेदुत्तरस्या आहुत्या अथ पुनः प्रणयने प्राप्त इदमुच्यते । हिरण्य उत्तरां जुहुयात् । तत्स्थाने हिरण्यमाधाय तस्मिन्हिरण्य उत्तरामाहुतिं जुहुयात् । होमसमाप्तौ हिरण्यमेव भवति न पुनरग्निः । अग्नेः प्रयातं परीयद्धिरण्यमिति मन्त्रैर्हिरण्य उत्तरां जुहुयादित्यध्यायान्तलक्षणोऽभ्यासः । यथा ब्राह्मणे ।

ना० वृ०—आहुत्योरन्तराऽग्नावनुगते सति हिरण्यं निधाय तस्मिन्द्वितीयामाहुतिं जुहुयात् । हिरण्य एव यथासंभवं शेषकार्याणि कुर्यात् । न पुनरग्निरुद्धर्तव्यः । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ।

**इत्यग्निहोत्रप्रायश्चित्तसूत्रं देवत्रातकृतभाष्यसहितं नारायणवृत्तिसमेतं च ।**

---

## अथ प्रायश्चित्तप्रयोगः ।

**यजमानः**—अग्निहोत्रकाल उद्धरणमारभ्याऽऽहोमं दुःखाश्रुपात आचम्य

**अग्निहोत्रकर्ममध्ये दुःखाश्रुपातजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं व्रातभृतीष्टिस्थाने पूर्णाहुतिं होष्यामि ।**

**अध्वर्युः**—अग्निहोत्रहोमोत्तरं तस्मिन्नेवाऽऽहवनीये पूर्णाहुतिं जुहुयात् ।

**अग्नये व्रतभृते स्वाहा ।**

**यजमानः—अग्नये व्रतभृत इदं न मम ।** शेषं पूर्वोक्तपूर्णाहुतिप्रयोगेण समानम् । अनेन पूर्णाहुतिहोमेन भगवाञ्छ्रीपरमेश्वरः प्रीयताम् । आचामेत् ।

**श्रीः ।**

**यजमानः**—आचम्य पत्न्या सह तीर्थेन प्रविश्य गार्हपत्यस्य पश्चादुपविश्य

**सायमनुद्धरणप्रायश्चित्तपूर्वकं पयसा सायमग्निहोत्रं होष्यामि ।**

इति संकल्याग्निहोत्रं जुहुधीत्यध्वर्युं वृत्वा प्रणयनार्थं बहुविदं ब्राह्मणं वृत्वा स्वासन उपविशेत् । ततोऽध्वर्युर्दक्षिणाग्निं प्रणयेत् । ततो यजमानेनोद्धराऽऽहवनीयमिति प्रेषितो बहुविदेवं त्वा देवेभ्य इत्युद्धृत्य परिकर्मिणा हिरण्ये दर्भेरग्रतो ह्रियमाण उद्ध्रियमाण उद्धर पाप्मन इत्यादिनित्यविधिना प्रणीय हिरण्यमादित्यत्वेन परिकल्प्यामृताहुतिमित्यादिना निदध्यात् ।

**अध्वर्युः**—परिसमूहनादि कुशोपसादनान्तं कृत्वा पूर्णाहुत्युक्तप्रकारेणाऽऽज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा भूर्भुवः स्वरिति जपित्वा यजमानेन वरे दत्ते जुहुयात् । तत्र मन्त्रः—

**द्रोणावस्तनेमः स्वाहा ।**

**यजमानः—राज्या इदं न मम ।**

**अध्वर्युः**—रजतां त्वेत्याद्यग्निहोत्रं नित्यवत्कुर्यात् ।

ततो वारुणीष्टिस्थाने पूर्णाहुतिः कार्या । प्रयोगस्तु प्रागुक्त एव ।

**वारुणीष्टिस्थाने पूर्णाहुतिं होष्यामि । वरुणाय स्वाहा ।**

**यजमानः—वरुणायेदं न मम ।** इत्यादि सर्वं पूर्वं कालात्ययप्रायश्चित्ते प्रपञ्चितं तत एवानुसंधेयम् । इति सायमनुद्धरणप्रायश्चित्तप्रयोगः ।

**श्रीः ।**

**यजमानः**—आचम्य पत्न्या सह तीर्थेन प्रविश्य गार्हपत्यस्य पश्चादुपविश्य

**प्रातरनुद्धरणप्रायश्चित्तपूर्वकं प्रातरग्निहोत्रं पयसा होष्यामि ।**

अग्निहोत्रं जुहुधीत्यध्वर्युं वृत्वा प्रणयनार्थं बहुविदं ब्राह्मणं च वृत्वा स्वासन उपविशेत् । ततोऽध्वर्युर्दक्षिणाग्निं प्रणयेत् । ततो यजमानेनोद्धराऽऽहवनीयमिति प्रेषितो बहुविद्गार्हपत्य आज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा परिकर्मिणा रजतेन सह तदाज्यं परिकर्मिहस्ते दत्त्वा तेनाऽऽज्ये रजते चाग्रतो ह्रियमाणे बहुविदेवं त्वा देवेभ्य इत्युद्धृत्योद्ध्रियमाण इति प्रणीयामृताहुतिमित्यायतने निदध्यात् । ततः—

**अध्वर्युः**—आहवनीयस्य पुरस्तात्प्रत्यङ्मुख उपविश्य चतुर्गृहीतमाज्यं जुहुयात् । तत्र मन्त्रः—

**उषाः केतुना जुषतां स्वाहा ।**

**यजमानः—उषस इदं न मम ।**

ततः—

**अध्वर्युः**—परिसमूहनाद्यग्निहोत्राङ्ग्कुशेपूपसादनान्तं कृत्वा पूर्वमानीतं चतुर्गृहीतं गृहीत्वा जुहुयात् । तत्र मन्त्रः—

**प्रातर्वस्तर्नमः स्वाहा ।**

**यजमानः—अह्ने ( ह्न ) इदं न मम ।**

**अध्वर्युः** । भूर्भुवः स्वरिति जपित्वा समिदाधानादि तृष्ण्यन्तं कुर्यात् । ततो यजमानेन वरे दत्ते शेषमग्निहोत्राङ्गजातं समापयेत् । ततः—

**यजमानः—मित्रसूर्येष्टिस्थाने पूर्णाहुतिं होष्यामि ।**

**अध्वर्युः**—आग्निहोत्रिकेष्वेवाग्निषु **मित्राय स्वाहा ।**

**यजमानः—मित्रायेदं न मम ।**

**अध्वर्युः—सूर्याय स्वाहा ।**

**यजमानः—सूर्यायेदं न मम** । इति हुत्वा शेषं पूर्वोक्तपूर्णाहुतिप्रयोगेण समानम् । पूर्णाहुतौ हुतायां पत्नीयजमानौ यतवाचौ भूत्वा तानेवाग्नीञ्ज्वलयन्तावनश्नन्तावहःशेषमुपासीयाताम् । नास्त्यत्रानुगमनमाहवनीयस्य कालात्ययप्रायश्चित्तवत् ।

सायमग्निहोत्रकाल एकस्या गोः पयोऽधिश्रित्य तस्मिन्नेव पयसि द्वितीयगोः पयोऽवनीय तेन पयसाऽग्निहोत्रं समापयेत् । तत आहवनीयदाक्षिणाग्न्योरपवर्गः । श्वोभूते पूर्वाह्णे—

**यजमानः—व्रातभृतीष्टिस्थाने पूर्णाहुतिं होष्यामि ।**

**अध्वर्युः—अग्नये व्रतभृते स्वाहा ।**

**यजमानः—अग्नये व्रतभृत इदं न मम ।**

शेषं पूर्वोक्तपूर्णाहुतिप्रयोगेण समानम् । इति प्रातरनुद्धरणप्रायश्चित्तप्रयोगः ।

श्रीः ।

( १ ) ***यजमानः**—आहवनीये ध्रियमाणे गार्हपत्यानुगमने गार्हपत्यीयावक्षामेभ्यो गार्हपत्यं मथित्वाऽऽहवनीयं विद्यमानमनुगमयेत् । तत आहवनीयं तूष्णीं गार्हपत्यादुद्धृत्य प्रणीय निधाय तमुपतिष्ठेत ।

तत्र मन्त्रः—

**अग्ने सम्राळिषे राये रमस्व सहसे द्युम्नायोर्जेऽपत्याय। सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ प्रावतामन्नादं त्वान्नपत्यायाऽऽदधे ॥ इति ।**

**गार्हपत्यानुगमनजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं तपस्वज्जनद्वत्पावकवदग्नीष्टिस्थाने पूर्णाहुतिं होष्यामि ।**

इति संकल्प्य पूर्वोक्तपूर्णाहुतिप्रयोगरीत्या सर्वमध्वर्युणा कार्यम् । तत्रायं विशेषः—

**अध्वर्युः—अग्नये तपस्वते जनद्वते पावकवते स्वाहा ।**

**यजमानः—अग्नये तपस्वते जनद्वते पावकवत इदं न मम ।**

शेषं पूर्वोक्तपूर्णाहुतिवत् । अनेन पूर्णाहुतिहोमेन भगवाञ्छ्रीपरमेश्वरः प्रीयताम् । आचामेत् ।

**( २ )** मन्थनसमर्थक्षामाभावे गार्हपत्यभस्मनाऽरणी लेपयित्वा मन्थेत् । तत्र मन्त्रः—

**इतो जज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः ।**

---

* अन्येऽपि मन्थेयुः ।

**स गायत्र्या त्रिष्टुभा जगत्याऽनुष्टुभा च देवेभ्यो हव्यं वह नः प्रजानन्॥ इति।**

ततो गार्हपत्यादाहवनीयं तूष्णीमुद्धृत्य प्रणीय निधाय तमुपतिष्ठेत। उपस्थानमन्त्रः प्रागुक्तः स एव। अग्ने सम्राळिषे०। संकल्पादिपूर्णाहुत्यन्तं प्राग्वदेवानुष्ठेयम्।

(३) आहवनीये ध्रियमाणे गार्हपत्यानुगमने सति दक्षिणाग्निमन्त्राहृत्य गार्हपत्यभूतादाहवनीयादन्यमाहवनीयं प्रणयेत्। "यतः प्रणयति स गार्हपत्यः" (आ० श्रौ० सू० ७। ७। ३) इति सूत्राद्गार्हपत्यभूतादिति लब्धम्। अतो ध्रियमाणाहवनीयादेवाग्रेऽष्टासु प्रक्रमेष्वाहवनीयं प्रणयेत्। ततः प्रभृति स एव विहारः संपद्यते। अतोऽग्निहोत्रादिकं तस्मिन्नेव विहारे भवति। ततोऽनन्तरोक्तप्रकारेण पूर्णाहुतिरनुष्ठेया।

(४) आहवनीये ध्रियमाणे गार्हपत्यानुगनमने सहभस्मानमाहवनीयं दक्षिणेन विहारं नीत्वा गार्हपत्यायतने निधाय ततः पूर्वस्यां दिश्याहवनीयमुद्धरेत्। ततोऽनन्तरोक्तप्रकारेण पूर्णाहुतिरनुष्ठेयेति प्रयोगशास्त्रकृतः।

श्रीः।

**यजमानः—अग्निहोत्रार्थप्रणीताहवनीयस्य प्राग्घोमादनुगमननिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमग्न्युत्पत्तिपूर्वकपूर्णाहुतिं होष्यामि।**

इति संकल्प्य बहुविद्ब्राह्मणं वृणुयात्। वृतो बहुविद्ब्राह्मणः सायं गार्हपत्यादाहवनीयं देवं त्वेति मन्त्रेणोद्धृत्य परिकर्मिणा दर्भैर्हिरण्येऽग्रतो ह्रियमाण उद्ध्रियमाण इत्यनेन मन्त्रेण प्रणीयामृताहुतिमित्यनेन निदध्यात्। ततः कर्ता प्रक्रान्तं कर्म समाप्य तस्मिन्नेवाऽऽग्निहोत्रिकाहवनीये पूर्वोक्तप्रकारेण पूर्णाहुतिं जुहुयात्। तत्र देवते—

**अध्वर्युः—अग्नये ज्योतिष्मते स्वाहा।**

**यजमानः—अग्नये ज्योतिष्मत इदं न मम।**

**अध्वर्युः—वरुणाय स्वाहा।**

**यजमानः—वरुणायेदं न मम।**

शेषं पूर्वोक्तपूर्णाहुतिप्रयोगेण समानम्।

प्रातस्त्वग्रतो रजते ह्रियमाण इति विशेषः। अन्यत्समानम्। नात्रानुद्धरणप्रायश्चित्तवत्प्रातराज्यस्याग्रतो हरणम्।

इत्यनया प्रणीताहवनीयस्य प्राग्घोमादनुगमननिमित्तपूर्णाहुत्या श्रीपरमेश्वरः प्रीयताम्।

श्रीः।

**यजमानः—अग्निहोत्रार्थविहृताग्नीनां गार्हपत्याहवनीययोर्वाऽस्तमयादुदयाद्वोर्ध्वमनुगमननिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमग्नीनाधास्ये। अग्नीन्पुनराधास्य इति वा।**

अग्न्याधेयप्रयोगस्त्वाधानपद्धतावुक्तः । पुनराधेयप्रयोगस्त्वग्रे वक्ष्यते । उभावपि तत्र तत्रानुसंधातव्यौ । अविद्धतयार्दक्षिणाग्न्याहवनीययोर्गार्हपत्यानुगमनेऽग्न्याधेयं पुनराधेयं वा न कार्यमिति शास्त्रीयपद्धत्या प्रादर्शि वृत्तिकृतेति न वयं तत्रापि लेखनीं व्यापारयामः। किंतु भस्मनाऽरणी संस्पृश्येतो जज्ञ इति मन्त्रेण मथित्वाऽऽयतने निधाय यथाशास्त्रमग्निहोत्रं जुहुयात्। ततः पूर्वोक्तां तपस्वत्यादींष्टिस्थानीयां पूर्णाहुतिं जुहुयात्।

श्रीः।

**यजमानः—समारूढाग्न्यरणीनाशनिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमग्नीनाधास्ये। अग्नीन्पुनराधास्य इति वा।**

अग्न्याधेयपुनराधेयप्रयोगस्तु पद्धतिपद्धतिशेषाभ्यामनुसंधातव्यः॥ इति।

श्रीः।

**यजमानः—साग्नावायतने पुनरग्निप्रणयननिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमग्निवदग्नीष्टिस्थाने पूर्णाहुतिं होष्यामि।**

पूर्णाहुतिप्रयोगस्तु प्रागुक्तोऽनुसंधेयः। अयं विशेषः—

**अध्वर्युः—अग्नयेऽग्निवते स्वाहा।**

**यजमानः—अग्नयेऽग्निवत इदं न मम।**

शेषं पूर्वोक्तेन समानम्।

श्रीः।

**यजमानः—गृहदाहनिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं क्षामवदिष्टिस्थाने पूर्णाहुतिं होष्यामि।**

प्रयोगस्तु प्रागुक्त एव।

**अध्वर्युः—अग्नये क्षामवते स्वाहा।**

**यजमानः—अग्नये क्षामवत इदं न मम।**

शेषं पूर्वोक्तपूर्णाहुत्या समानम्।

श्रीः।

**यजमानः—अग्निहोत्राग्नेः शवाग्निसंसर्गनिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुचीष्टिस्थानीयां पूर्णाहुतिं होष्यामि।**

प्रागुक्तः प्रयोगोऽवगन्तव्यः। तत्रायं विशेषः—

**अध्वर्युः—अग्नये शुचये स्वाहा।**

**यजमानः—अग्नये शुचय इदं न मम।**

अन्यत्प्रागुक्तपूर्णाहुत्या समानम्।

श्रीः।

यजमानः—गार्हपत्याद्यग्नीनां द्वयोर्वा मिथःसंसर्जननिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं विविचीष्टिस्थानीयां पूर्णाहुतिं होष्यामि।

प्रयोगः प्रागेवाभिहितः। देवतेदानीं वक्ष्यते—

अध्वर्युः—अग्नये विविचये स्वाहा।

यजमानः—अग्नये विविचय इदं न मम।

अन्यत्पूर्वोक्तपूर्णाहुत्या समानम्।

गार्हपत्याहवनीययोर्मिथः संसर्गे तु—

अध्वर्युः—अग्नये वीतये स्वाहा।

यजमानः—अग्नये वीतय इदं न मम।

शेषं पूर्वोक्तपूर्णाहुत्या समानम्।

श्रीः।

यजमानः—श्रौताग्नीनामग्नेरग्न्योर्वा लौकिकाग्निसंसर्जननिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं संवर्गेष्टिस्थाने पूर्णाहुतिं होष्यामि।

पूर्वोक्तपूर्णाहुतिप्रयोगोऽत्रानुसंधेयः। अयं विशेषः—

अध्वर्युः—अग्नये संवर्गाय स्वाहा।

यजमानः—अग्नये संवर्गायेदं न मम।

अन्यत्पूर्वोक्तपूर्णाहुत्या समानम्।

श्रीः।

यजमानः—गार्हपत्यादीनां श्रौताग्नीनां वैद्युतानलसंसर्गनिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमप्सुमदिष्टिस्थानीयां पूर्णाहुतिं होष्यामि।

अध्वर्युः—अग्नयेऽप्सुमते स्वाहा।

यजमानः—अग्नयेऽप्सुमत इदं न मम।

शेषं प्रागुक्तपूर्णाहुतिप्रयोगेण समानम्।

श्रीः।

यजमानः—द्विषदन्नभोजननिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वानरेष्टिस्थाने पूर्णाहुतिं होष्यामि।

अध्वर्युः—अग्नये वैश्वानराय स्वाहा।

यजमानः—अग्नये वैश्वानरायेदं न मम।

अन्यत्सर्वं प्रागुक्तपूर्णाहुतिप्रयोगेण समानम्।

श्रीः ।

**यजमानः—स्वमरणशब्दश्रवणजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सुरभीष्टिस्थाने पूर्णाहुतिं होष्यामि ।**

**अध्वर्युः—अग्नये सुरभये स्वाहा ।**

**यजमानः—अग्नये सुरभय इदं न मम ।**

शेषं प्रागुक्तपूर्णाहुतिप्रयोगेण समानम् ।

श्रीः ।

यजमानो होमकर्ता वा मृन्मय्यग्निहोत्रस्थाली भिन्ना चेच्छ्वादिदशनाभिक्षिप्ता चेत्तामप्सु निक्षिपेत् । तत्र मन्त्रः—

**भूमिर्भूमिमगान्माता मातरमप्यगात् ।**
**भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥ इति ।**

श्रीः ।

**यजमानः**—अपराह्णे गार्हपत्यप्रज्वलनसमये गार्हपत्यानुगतिर्दृष्टा स्याच्चेदस्तमयात्पूर्वं मन्थनेनानुत्पन्नेऽग्नौ लौकिकमग्निमानीयास्तात्पूर्वं प्रणीय नित्याग्निहोत्रवदेवाग्निहोत्रं हुत्वा यावदग्न्युत्पत्ति पुनर्मन्थनेनाग्निमुत्पाद्य गार्हपत्यायतनस्थं लौकिकमग्निमायतनाद्बहिर्निक्षिप्य तस्मिन्नायतने मथितमग्निं निधाय तूष्णीं गार्हपत्यायतनादाहवनीयमुद्धृत्य प्रणीय निधाय पूर्वोक्तप्रकारेण तपस्वतीष्टिस्थाने पूर्णाहुतिं जुहुयात् । समारूढाग्निमन्थने प्रायश्चित्तिर्नास्तीत्युक्तत्राप्यनुसंधेयम् । प्रातरुदयात्पूर्वमिति विशेषः ।

श्रीः ।

**यजमानः—ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं मन्थनेनाग्नेरनुत्पत्तिनिमित्तहोमकालातिपातभिया ब्राह्मणपाणौ सायमग्निहोत्रं पयसा होष्यामि ।**

ब्राह्मणमाहवनीयत्वेन परिकल्प्य तस्य दक्षिणपाणिं नित्याग्निहोत्रमन्त्रेण परिसमुह्य पर्युक्ष्य पाणेरुत्तरतः कुशेषु पयसः स्थालीं सादयित्वोन्नयानीत्युक्त्वोन्नीय स्थालीमभिमृश्य समिधं स्रुचं चापरस्यां दिशि कुशेषूपसाद्य जान्वाच्य रजतां त्वेति पाणौ समिधमाधाय विद्युदसीत्यप उपस्पृश्य नित्याग्निहोत्रवत्प्रधानहोमं हुत्वाऽथोत्तरामाहुतिं हुत्वाऽनुप्रकम्प्य कुशमूलेषु निमृज्य स्वधा पितृभ्य इत्यपोऽवनिनीयाप उपस्पृश्योदङ्ङावृत्य भक्षयेत् । ततोऽभ्यात्ममपो निनीय स्रुचं प्रक्षाल्य पञ्च पूर्णाः स्रुचो नित्यवद्धुत्वा स्रुचं परिकर्मिणे प्रयच्छेत् । पुनः पूर्ववत्परिसमूहनपर्युक्षणादि नित्याग्निहोत्रवत्सर्वं कुर्यात् । एवमजकर्णे दर्भस्तम्बेऽप्सु च यथासंभवं प्रयोगः । एवमेव काष्ठे पृथिव्यां चानुष्ठेयम् । विहारधर्मलोपादि भाष्यवृत्तिभ्यां समालोच्यानुष्ठातव्यम् । एवमेव ब्राह्मणपाण्यादिहोम आसंवत्सरं

यावज्जीविकं वा यद्व्रतादुक्तं सूत्रकारेण तदपि भाष्यवृत्तिकृद्भ्यां प्रपञ्चितत्वान्न तदर्थं वयं पृथग्यत्नं विधास्यामः। एवमग्निहोत्रं हुत्वा मन्थनेनाग्न्युत्पत्तिः। ततस्तपस्वतीष्टि-स्थानीयां पूर्णाहुतिं पूर्वोक्तप्रकारेण जुहुयात्।

श्रीः।

**यजमानः**—अग्निहोत्रमध्ये पूर्वाहुत्यनन्तरमुत्तराहुतेः पूर्वमाहवनीयानुगमन-निमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमाहवनीयत्वेन हिरण्यं प्रकल्प्य हिरण्य उत्तराहुतिं होष्यामि।

**अध्वर्युः**—आहवनीयायतनेऽपराजितायां दिशि हिरण्यं निधाय तस्मिन्नुत्तरामाहुतिं हुत्वाऽनुप्रकम्पनादि पर्युक्षणान्तं कुर्यात्। दीदिहीत्यादेर्लोपः।

**यजमानः**—द्वावाग्निना गार्हपत्याद्यग्निसंसर्गनिमित्तजनितप्रत्यवायपरिहार-द्वारा श्रीपरमेश्वरप्रीत्यर्थं संवर्गेष्टिस्थानीयां पूर्णाहुतिं होष्यामि।

ततोऽध्वर्युयजमानौ ग्राम्याग्निसंसर्गप्रायश्चित्तिवत्पूर्णाहुतिं कुर्याताम्।

श्रीः।

अग्निहोत्रहविःपाकार्थमुद्धृतेऽग्नावनुगते गार्हपत्यादुत्पाद्य पुनस्तत्र हविः पचेत्। ततः कुशेषूपसादनान्तं कृत्वा—

**यजमानः**—हविःपाकार्थमुद्धृताग्न्यनुगतिनिमित्तजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं व्याहृतिहोमं होष्यामि।

**अध्वर्युः**—लौकिकमाज्यं तूष्णीमुत्पूय स्रुवेणाऽऽदाय—

**भूर्भुवः स्वः स्वाहा।**

**यजमानः**—प्रजापतय इदं न मम।

ततोऽध्वर्युरग्निहोत्रं समापयेत्।

श्रीः।

अपोढाग्नेर्गार्हपत्यस्य च नाशे मन्थनमारभ्य तपस्वतीष्ट्यन्तं कृत्वा ततोऽङ्गारनिर्हरणादि-होमशेषं समापयेत्। अयं प्रयोगस्तु प्रागुक्तः।

श्रीः।

**होमकर्ता**—अपोढे वर्तमाने गार्हपत्यानुगमने स्वपोढैकदेशं गार्हपत्ये तूष्णीं निधाय तत्रैव लौकिकाज्यमुत्पूतं स्रुवेण गृहीत्वा—

**भूर्भुवः स्वः स्वाहा।**

**यजमानः**—प्रजापतय इदं न मम।

इति हुत्वा सुहुतकृतः स्थेत्यादि सर्वं कुर्यात्।

श्रीः ।

आहवनीयहोमोत्तरं गार्हपत्यस्य दक्षिणाग्नेर्वोभयोर्वाऽनुगमने तदाहुत्योर्लोपः । तन्निमित्तं ' भूर्भुवः स्वः स्वाहा ' इति मन्त्रेणाऽऽहवनीये तूष्णीं लौकिकमाज्यमुत्पूय स्रुवेण गृहीत्वा जुहुयात् ।

**यजमानः--प्रजापतय इदं न मम ।**

ततो होमसमाप्त्यनन्तरं गार्हपत्यस्य पूर्वोक्तप्रकारेण नाम गार्हपत्यानुगतप्रायश्चित्तोक्तप्रकारेण गार्हपत्यमुत्पाद्य तपस्वतीष्ट्यादि कार्यम् ।

श्रीः ।

**अध्वर्युः**--अग्निहोत्रे विहृतेष्वग्निषु प्रयत्नं विना ज्वलितेषु समिधावादध्यात् ।

तत्र मन्त्रः—

**उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।**

**पशूꣳश्च मह्यमावह जीवनं च दिशो दिश स्वाहा ॥ ( नारायणोपनिषत् १० । १ )**

**यजमानः—जातवेदस इदं न मम ।**

**अध्वर्युः—मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् ।**

**अबिभ्रदग्न आगहि श्रिया मा परि पातय स्वाहा ॥ ( ना० १० । १ )**

**आभ्यां समिधावादध्यात् ।**

**यजमानः—जातवेदस इदं न मम ।**

ततो लौकिकमाज्यं तूष्णीमुत्पूय स्रुवेण गृहीत्वाऽऽहवनीये जुहुयात् । तत्र मन्त्रः—

**भूर्भुवः स्वः स्वाहा इति ।**

**यजामानः--प्रजापतय इदं न मम ।**

एवमेकस्मिन्द्वयोस्त्रिषु वा ज्वलितेषु स्रुवाहुतिरेकैव भवेत् ।

श्रीः ।

यदि दक्षिणाग्निमनुद्धृत्य प्रमादाहवनीयं प्रणयेदुक्तमन्त्रेण विना वाऽऽहवनीयं प्रणयेत्तदा तमग्निं गार्हपत्ये समोप्याग्निवहिः प्रायश्चित्तं विधाय विधिवदाहवनीयं प्रणयेत् । तमग्निं गार्हपत्ये तूष्णीं समोप्य।

**अध्वर्युः**—लौकिकमाज्यमुत्पूय स्रुवेण गृहीत्वा गार्हपत्ये ।

भूर्भुवः स्वः स्वाहा ।

यजमानः—प्रजापतय इदं न मम ।

श्रीः ।

अग्निहोत्रार्थविहरणोत्तरं दक्षिणाग्न्यनुगमनेऽपि स्वयोनेर्दक्षिणाग्निं विहृत्य तत्रैव दक्षिणाग्न्यनुगमननिमित्तं सर्वप्रायश्चित्तं कुर्यात् ।

अध्वर्युः—लौकिकमाज्यं तूष्णीमुत्पूय स्रुवेण गृहीत्वा

भूर्भुवः स्वः स्वाहा इति दक्षिणाग्नौ । यदा दक्षिणाग्निरनुगतो ज्ञातो भवति तदानीमेव प्रायश्चित्तं कृत्वा प्रक्रान्तं कर्माऽऽरभेत । आहवनीहोमोत्तरमनुगतश्चेद्दक्षिणाग्निर्नोत्पत्तिर्न च प्रायश्चित्तमिति सिद्धान्तः ।

१ उद्धरणस्य च यः कर्ता स एव होमस्य ।
२ यः सायं होमकर्ता स एव प्रातः ।
} नास्त्ययं नियमो यजमानस्य ।

३ पक्षहोमादौ कृते सति उदयास्तमयाभ्यां प्राक्प्रादुष्करणाभावेऽपि न प्रायश्चित्तम् । प्रादुष्करणस्य च होमार्थत्वात् । तथाऽपि जायापतिभ्यां तदानीं संनिधातव्यम् ।

४ येन द्रव्येण सायं हुतं तेनैव प्रातः ।

अन्यान्यप्येवंजातीयकानि प्रायश्चित्तानि पूर्वनिर्दिष्टैतरेयब्राह्मणोक्तान्यनुसंधाय तत्र प्रागुक्तप्रकारेण देवतानाम्ना पूर्णाहुतिं जुहुयात् । यथा—अस्नातोऽग्निहोत्रं जुहुयात् । सूतकान्नं प्राश्नीयादित्यादि ।

अग्निहोत्रकर्मण आरम्भादासमाप्तेर्वाग्यमलोपः स्याच्चेत्—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूहळमस्य पांसुरे ॥

इति ऋचं जपेत् । अथवा—

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ॥

इति वा जपेत् । अध्वरेषु प्रमादादिना यदि यत्किंचित्कर्म प्रच्यवेत तदा तत्साफल्याय विष्णुं स्मरेदित्यमुमर्थं श्रुतिस्मृती अपि दर्शयतः । ते आह—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ इति ।

इति प्रायश्चित्तप्रयोगः ।

## अथाऽऽधानपद्धतिशेषः ।

अथेमामग्निहोत्रचन्द्रिकां पूर्वप्रणीताधानपद्धतेरवशिष्टेन प्रकरणेन संयोज्य समापयामः ।

**देवान्वा एष उपावर्तते य आहिताग्निर्भवति । (श० ब्रा० २ । ४ । ११।)**

**विज्ञायते च देवानां वा एषोऽन्यतमो य आहिताग्निः । ( बौ० श्रौ० २।७)**

आधानमग्न्याधेयमित्यनर्थान्तरम् । उभयथा ह्याचार्याणां शैली लक्ष्यते ।

**यथाऽऽपस्तम्बः—अग्न्याधेयं व्याख्यास्यामः । ( श्रौ० सू० ५ । १ )**

**आधानाद्द्वादशरात्रमजस्राः । (आश्वलायनश्रौ० सू० २ । १ । ३५ )**

**अनन्तरमाधानादाहिताग्निव्रतानि ( आपस्तम्बश्रौ० सू० ५ । २५ । २ )**

येन कर्मणाऽग्नय आधीयन्ते तदग्न्याधेयम् । अग्न्यगारकरणादीष्ट्यन्तस्य कर्मसमुदायस्य संज्ञा । मन्थनमात्रस्य स्थापनमात्रस्य वा । तच्चाग्न्याधेयं भगवताऽविच्छिन्नाध्ययनपरम्पराप्राप्तेनापौरुषेयेणाऽऽम्नायेन विहितमतः सादरं बहुभिः संस्कारैरात्मानं संचिस्कीर्षुभिरवश्यमनुष्ठेयमित्याचार्याभिमतः पन्थाः । यतो नित्यमिदम् । नित्यानि हि कर्माण्यननुष्ठितानि सन्ति प्रत्यवायं जनयन्त्यतस्तदनुतिष्ठासद्भिरप्यवश्यं कर्मणां ज्ञानं संपादनीयम् । किमत्र प्रधानं किंचाङ्गमित्येवंरूपम् । तच्चाऽऽकरग्रन्थतो ज्ञातुं दुःशकमिति सूत्रतद्भाष्यप्रमुखान्ग्रन्थान्पुरस्कृत्य सुशकं कर्तुमुद्युक्त इति क्षम्यतां मे धाष्टर्यम् । अहो क्वायं श्रौतकर्मणां महोदधिः । यत्र शबराचार्यकुमारिलभट्टाचार्यप्रभृतयो मण्डनमिश्रादयो मत्स्यायमानाः सन्तः परिप्लवनमर्भाप्सन्ते । क्व चेयं मदीयाऽणीयसी बुद्धिर्नौका । तथाऽपि तूष्णींभाव एव न वरमिति जानानोऽहं प्रयतेऽनया पद्धत्या जनानाह्लादयितुम् । तदिदं ग्रन्थोपक्रमनिदानम् । ये चाऽऽत्मानं नित्यसंस्कारैः संचिस्कीर्षन्त ते यथाकथंचित्कर्माण्यनुष्ठायाऽऽत्मानं कृतकृत्यं मन्वते । तन्मा भूद्यथाकथंचिदनुष्ठानं किंतु यथाशास्त्रमेवानुष्ठानं श्रेयस इति मन्वानोऽहमग्न्याधेयानुष्ठानक्रमं प्रस्तावयितुमारभे । तदिदमग्न्याधेयं षड्विधमामनन्त्याम्नायाः । प्रयोगशास्त्रकृतोऽपि तथाविधमेव सूत्रयां बभूवुः । ताः षड्विधा एवम्—

| | |
|---|---|
| १ सोमपूर्वाधानम् । | ४ पूर्णाहुत्यन्तम् । |
| २ इष्टिपूर्वाधानम् । | ५ अक्षामिहोमान्तम् । |
| ३ होमपूर्वाधानम् । | ६ इष्ट्यन्तम् । इति । |

तत्र प्रथमतः सोमपूर्वाधानं प्रमाणीकृत्य तदनुष्ठानक्रममारभामहे ।

### सोमपूर्वाधानम् ।

सोमात्पूर्वमाधानं सोमपूर्वाधानम् । आधानोत्तरं यत्सोमसहितमनुष्ठीयते. तत्सत्पूर्वमित्युच्यते ।

इष्टिपूर्वं होमपूर्वं चेत्यत्राप्येवमेव ज्ञेयम् । तच्च सोमपूर्वाधानमस्ति वा न वाऽऽम्नायेन विहितमित्यत्र केचन संशेरते । तत्संशयापाकरणाय प्रमाणमुपन्यस्यते—

**" अथो खलु यदेवैनं यज्ञ उपनमेत् । अथाऽऽदधीत सैवास्यर्द्धिः " । ( तैत्तिरीयब्रा० १ । १ । २ । इति । )**

**अत्र सायणभाष्यम्**—अन्येऽभिज्ञा एवमाहुः । खलु यस्मिन्नेव काल एनं पुरुषं सोमयज्ञः प्राप्नुयात्सोमयागं करिष्याम्यहमिति बुद्धिरुदियात्तदानीमेवाऽऽदधीत । न तु नक्षत्रादिकं परीक्षितव्यम् । सैव सोमयागबुद्धिरेवास्य पुरुषस्य नक्षत्रादिकृत्स्नविहितकालसमृद्धिरिति ।

**" सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम् " । ( आपस्तम्बश्रौ० सू० ५ । ३ । २ । )**

**वृत्तिः**—य आधानानन्तरं सर्वकर्मभ्यः प्राक्सोमाय दीक्षिष्यते स सोमानुरोधेनाऽऽधानं कर्तुमृतुं नक्षत्रं च न सूर्क्षेन्नाद्रियेत ।

**" कथमु खल्वग्न्याधेये सोम इति " । ( बौ० कर्मान्तश्रौ० सू० ९ । )**

**" सोमेन वोपक्लृप्तसोम आधानस्य सोमप्राधान्यम् " । ( कात्यायनश्रौ० सू० ७ । ११ । २ । )**

**भाष्यम्**—उपक्लृप्तं सोमयागाय दक्षिणान्नघृतसोमादिकं द्रव्यं येनासावुपक्लृप्तसोमो यजमानः । आधानानन्तरं प्रथमं सोमेनेष्ट्वा ततोऽन्येन दर्शपूर्णमासादिना यजेत । कुत आधानस्य प्राधान्यात् । सोमप्रयुक्तत्वात्सोमचिकीर्षया कृतत्वात्सोमाधानयोरानन्तर्यश्रवणादित्यर्थः ।

**" सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रम् " । ( आश्वलायनश्रौ० सू० २ । १ । )**

अत्र यक्ष्यमाण इति लृडादेशः शानच् । स च सोमस्याऽऽधानानन्तर्यमाह । यतो न कश्चिदयक्ष्यमाणः सर्वस्यापि सोमयागविधानात् । तस्मादाधानानन्तरं कर्मान्तराव्यवधानेन यक्ष्यमाण इति प्रतीयते । वाशब्दो व्यवस्थितविकल्पार्थः । य उपक्लृप्तसोमस्तस्य नियमेन सोमपूर्वत्वमिति ।

**" याथाकाम्यमृतूनां सोमेन यक्ष्यमाणस्य " । ( सांख्ययानश्रौ० सू० २ । १ । ६ । )**

**भाष्यम्**—वसन्तादिष्वप्यनियमः सोमेन यक्ष्यमाणस्य ; तथा च श्रुतिः—सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम् । ( आ० श्रौ० सू० ५ । ३ । २ । ) इति ।

सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रम् इति । ( आश्वलायनश्रौ० सू० २ । १ । १५ । )

**देवत्रातभाष्यम्**—सोमेन यक्ष्यमाणो ज्योतिष्टोमेन यक्ष्यमाणो भवति स न च ऋतुं पृच्छेन्न च नक्षत्रं पृच्छेत् । यस्मिन्कस्मिंश्चिन्नक्षत्रे पर्वणि दीक्षाकाले च तदाधानं कृत्वा सोमेन यजेत । सर्ववर्णानामेतदविशेषवचनात् । श्रुत्यन्तरेऽप्येवम् । ' यदेवैनं यज्ञ उपनमेदथाऽऽदधीत सैवास्यर्द्धिः ' इति । सोमनिमित्त आधाने नर्तुं पृच्छेन्न नक्षत्रमिति-वचनादन्यत्र ऋतुनक्षत्रे पृच्छेदित्यर्थादापन्नं भवति ।

**गार्ग्यनारायणवृत्तिः**—अथैव सोमेन यक्ष्य इति संकल्प्य य आधानमिच्छेत्स आधानस्य कालं नावेक्षेत सोमोपक्रमकालमेवाऽऽदधीतेत्यर्थः । अयमप्याधानकालो मुख्य एव । ऋतुनक्षत्रनिरपेक्षवचनं पर्वणोरपि प्रदर्शनार्थम् । अस्य मूलं यदहरेवैनमिति सोमाधानस्य विधायकं न सोमस्य । तेन वसन्तसंबन्धित्वं सोमस्य न बाध्यते । इष्ट्यु-त्तरकालता तु बाध्यते सोमाधानयोरानन्तर्यविधानादिति ।

सत्याषाढोऽपि विकल्पमभिप्रैति स्वसूत्रानुयायिनाम् । एकेषामिति सूत्रणात् ।

**सोमेन यक्ष्यमाण आदधानो नर्तुं न नक्षत्रं सूर्क्षेदित्येकेषाम् । ( स० श्रौ० सू० ३ । १२ )**

अत्र वैजयन्तीकृदिदं ब्राह्मणव्यतिरिक्तविषयमिति व्याचख्यौ । तत्तु तैत्तिरीयशाखाया-मविशेषेण श्रुतत्वाच्चिन्त्यं पूर्वोक्तदेवत्रातभाष्येण विरोधात् । सत्याषाढीयानां तु सोमपूर्वा-धानं नास्ति । एवं हि तत्सूत्रम्—

**तस्य नानुपक्रान्तयोर्दर्शपूर्णमासयोराहारः** ( स० श्रौ० सू० ७ । १ । ५ ) इति ।

अत्र ज्योत्स्ना—तस्याग्निष्टोमस्यानुपक्रान्तयोरनारब्धयोः सतोराहारः प्रयोगो नेत्यर्थः । एवं ज्योत्स्नावैजयन्त्योर्विचार्यमाणे चिन्त्यमाने च तत्सूत्रे श्रुतिसूत्रविरोध इति नूनं तथाऽपि विकल्प एव श्रेयानिति युक्तमुत्पश्यामः ।

अत्र. जैमिनिराचार्यः—

**सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदन्तेनानर्थकं हि स्यात् ।** ( पू० मी० ५ । ४ । ६ । )

**शाबरभाष्यम्**—सोमश्चैषां पुरो दर्शपूर्णमासयोः स्यात्कुत अग्न्याधेयस्य ऋतुनक्षत्रातिक्रमवचनात् । यः सोमेन यक्ष्यमाणोऽग्नीनादधीत नर्तुं स प्रतीक्षेन्न नक्षत्रम् । इति । यः सोमयागं कर्तुमादधीत स न प्रतीक्षेन्नक्षत्रं नाप्यृतुम् । तावत्येवाऽऽदधीतेत्यानन्तर्यमुच्यते । इतरथ ऋतुनक्षत्रातिक्रमवचनमनर्थकं स्यादिति । अन्यदपि तत्रैव सूत्रयांबभूव—

**इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम्** । ( ५ । ४ । ९ । )

**शा० भा०**—इष्टिरयक्ष्यमाणस्य सोमेन निरभिसंधिक आधाने तदर्थत्वे तु सोमपूर्वत्वम् । सोमार्थतायां त्वाधानस्य सोमपूर्वत्वं स्यादिति । तदेतत्सूत्रस्थं सोमपूर्वत्वं पदं यदेवैनं यज्ञ उपनमेदथाऽऽदधीतेति श्रौतं पदं तदन्तर्गतानि च सर्वाणि प्रमाणभूतानि सौत्रवचांसि सोमपूर्वाधाने प्रमाणम् । तदेतत्सर्वं विचार्य सोमपूर्वाधानं नास्तीति प्रलपन्तः प्रत्युक्ता वेदितव्याः ।

ननु अन्यान्यप्येवंजातीयकानि प्रयोगशास्त्रकृतां वचांस्याकलयाम इति । तान्येवम्—

" **न दर्शपूर्णमासाभ्यामनिष्ट्वा सोमेन यजेत** " इति भरद्वाजः ।

" **तस्य नानुपक्रान्तयोर्दर्शपूर्णमासयोराहारः** " इति सत्याषाढः ।

" **दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेत** " इति कात्यायनः ।

" **दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन** " इत्याश्वलायनः ।

**यो दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत** । ( तै० ब्रा० । )

सत्यम् । परं नैतानि वचांसि पूर्वनिर्दिष्टप्रमाणजातं बाधितुमुत्सहन्ते । तुल्यबलत्वात् । तुल्यबलानां हि न ह्यस्ति विरोध इति बलाबलाधिकरणे व्याचख्यावाचार्यः । अन्यत्राप्येवं सूत्रयामास—

" **विप्रतिषेधे परम्** " । ( पू० मी० १२ । ४ । ३९ । )

अयमर्थः—विप्रतिषेधे तुल्यबलयोर्विरोधे परमिष्टं स्यात् ।

यत्र समानबलानां वचसां परस्परं विरोधः स्यात्तत्र यदिष्टं तत्कार्यम् ।

अन्यदपि तत्रैव सूत्रयां बभूवाऽऽचार्यः—

" **शास्त्रस्था वा तन्निमित्तत्वात्** " ( पू० मी० १ । ३ । ८ । )

अयमर्थः—शास्त्रस्था शास्त्रप्रतिपाद्या शास्त्रानुसारिणीत्यर्थः । विप्रतिपत्तिर्विशिष्टा प्रतिपत्तिर्ज्ञानम् । बलीयसी । कुतः । तन्निमित्तत्वात् । शास्त्रस्य तन्निश्चायकत्वात् । तस्मादुभयथाऽप्यस्ति वचनजातमिति षोडशिग्रहणवदैच्छिको विकल्प एव सोमपूर्वाधाना-

धानयोरिति मीमांसया निर्णीतं मतमेवानुकूलमिति मन्यामहे। सूत्रकारस्य तथैव प्रस्थानाच्च। न च वाच्यं भगवत आम्नायस्य तदनुसूत्रयत आपस्तम्बाचार्यस्य सोमपूर्वाधानमेव संमतमिति। न ह्याम्नानमात्रेण कश्चिदप्यर्थोऽनुष्ठातुं शक्यते। अग्रे च तेनैवाऽऽचार्येण सांनाय्यविषय एवं सूत्रितमस्ति—

"नासोमयाजी संनयेत्संनयेद्वा" इति।

तस्मादुभयथाऽप्याचार्याणां वचनशैली दृश्यत इति विकल्प एव सोमपूर्वाधानस्येति युक्ततमः शोभनः पन्थाः। प्रामाणिकविकल्पे नास्त्यष्टदोषदुष्टत्वम्। अथापि सोमपूर्वाधानमेव गरीयःपक्ष इति वयं ब्रूमः। सोमो नित्यस्त्रिभिर्ऋणवाञ्जायत इत्यृणसंस्तवात्। तथा सोमान्तान्यज्ञाननुक्रम्य नैयमिकं ह्येतदृणसंस्तुतमित्यपि वसिष्ठादयः प्रत्यभिजानन्। कल्पकृताऽप्यग्नीनाधाय कर्माण्यारभते सोमावराध्यानि यानि श्रूयन्त इति। गृहस्थस्याप्याश्रमान्तरं प्रेप्सतोऽप्यावश्यकतयोपदेशात्तथा "वसन्ते वसन्ते सोमेन यजेत" इति दर्शपूर्णमासवदभ्यासविधानात्। तथा सोमपीथविच्छेदे प्रायश्चित्तवचनात्। तथा सर्वेषु ब्राह्मणग्रन्थेषु कल्पसूत्रेषु च नित्यैः समभिव्याहाराच्च। तस्मादपि नित्य एव सोमः। एवं हि भगवतो जैमिनेः सूत्रणम्—

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्। (६। २। ३१।)**

**वृत्तिः**—सोमवेदाध्ययनप्रजोत्पत्तयो नित्या उतानित्या इति संदेहेऽनित्या नित्यबोधकप्रमाणाभावादिति बहिःपूर्वपक्षे सिद्धान्तमाह—ब्राह्मणस्येति। ब्राह्मणस्येति क्षत्रियवैश्ययोर्लक्षकम्। सोमविद्याप्रजं नित्यम्। ऋणवाक्येन ऋणशब्दघटितवाक्येन संयोगात्। अयाकरणेऽऋणी भवतीति दोषश्रवणात्।

**"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी"॥**

इति श्रुतिवाक्यम्। एवं च सोमस्याऽऽवश्यकतयाऽनुष्ठातव्यः सोमः। स चाऽऽधानानन्तरं वा भवतु दर्शपूर्णमासेष्टिपशुचातुर्मास्यानन्तरं वा भवतु। अनुष्ठेय इति तु निर्विवादम्। तदेतत्सोमनित्यत्वं श्लोकयां बभूव वार्तिककृत्। तच्च संजग्राह पार्थसारथिमिश्रः—

**वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते।**
**यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते॥**
**यावद्वसन्तमभ्यासः कामस्यैवाथ नोद्यते।**
**यजेतेतिपदेनैव प्राप्नोत्यभ्यासलक्षणा॥**

तस्माद्वसन्ते निमित्ते विधानादागत आगते वसन्ते नियमेन सोमः कर्तव्य इति नित्यः। सोमपूर्वाधानविषयाणि सर्वाणि वचांस्यालोच्य मण्डनो मण्डयामास—

इष्टिर्नित्येष्टिरथवा नित्येष्टिः सोममाहरेत्।
एवं सोमेष्टिपूर्वत्वे भवेत्तुल्यविकल्पनम्॥
व्यवस्थितविकल्पो वा कातीयवचनाद्भवेत्।
यस्तूपक्लृप्तसोमः सन्नादधीत हुताशनम्॥
स कुर्यात्सोमपूर्वत्वमन्येषामिष्टिपूर्वता।
विधिरत्नोक्तमन्यादृग्व्यवस्थितविकल्पनम्॥
त्रिपुरुषमविच्छिन्नो यस्य सोमक्रतुर्भवेत्।
तस्य स्यात्सोमपूर्वत्वमन्येषामिष्टिपूर्वता॥
विप्रेष्टिसोमपूर्वत्वे विकल्पं प्राह जैमिनिः।
राजादेरिष्टिपूर्वत्वपक्षमेव नियच्छति॥

अत्रानन्तरकारिकायां योऽर्थो जैमिनिना विकल्पित इत्युक्तं तद्विषयकं सूत्रं प्रदर्शयामः—

एकं शब्दसामर्थ्यात्प्राक्कृत्स्नविधानात्। (५।४।१८)

अवसितः सोमपूर्वाधानविचारः प्रासङ्गिकः सोमनित्यतादिविचारश्च। अथेदानीमिष्टिपूर्वाधानविचारं प्रस्तावयामः।

## इष्टिपूर्वाधानम्।

अयमर्थः—इष्टेरन्वारम्भणीयेष्टेः प्राग्यदाधानं तदिष्टिपूर्वमित्युच्यते। आधानानन्तरं यदव्यवहितमन्वारम्भणीयानुष्ठानं तदेवास्य प्रवृत्तिनिमित्तम्। तदनुष्ठाने तत्सत्त्वे च प्रमाणमुदाहरामः—

**अमावास्यायां पौर्णमास्यां वाऽऽधेयः।** (आप० श्रौ० सू० ५।३।१७)
**वसन्ते पर्वणि ब्राह्मण आदधीत।** (आश्व० श्रौ० सू० २।१।१२)
**अमावास्यायां पौर्णमास्यामापूर्यमाणपक्षे।** (सत्याषाढश्रौ० सू० २।१।१२)
**अमावास्यायां पौर्णमास्यां वाऽऽदधीत।** (सांख्यायनश्रौ० सू० २।१।७)

अत्र निर्दिष्टवचनेषु यत्पौर्णमास्यामाधानं सूत्रितं तदेवेष्टिपूर्वं भवति।

## होमपूर्वाधानम्।

होमादग्निहोत्रहोमात्पूर्वमव्यवधानेन यदाधानं तद्धोमपूर्वं भवति। तत्राग्नीनाधायान्वार-

म्भणीयेष्टेः प्रागग्निहोत्रारम्भः कृतश्चेद्धोमपूर्वं भवति । तत्र पूर्वनिर्दिष्टवचनेष्वमावास्यायां सूत्रितमाधानं होमपूर्वमिति ज्ञेयम् । तथा नक्षत्रेषु कृतमप्याधानं होमपूर्वं भवति ।

## पूर्णाहुत्यन्तमाधानम् ।

तदिदमाधानमस्ति वा नवेति संशयः । सर्वैरपि सूत्रकारैः पूर्णाहुत्यनन्तरं पवमान-हवींषि समाम्नातानि विद्यन्ते । अतः संशयस्तदपाकरणाय श्रुतिमेव पुरस्कुर्मः ।

**" पूर्णाहुतिं जुहोति तद्यत्पूर्णाहुतिं जुहोत्यन्नादं वा एतमात्मनो जनयते यदग्निं तस्मा एतदन्नाद्यमपिदधाति । यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यादेवमस्या एतदन्नाद्यमपिदधाति । स एतेनान्नेन शान्त उत्तराणि हवींषि श्रप्यमाणान्युपरमति तदाहुः । एतामेवाऽऽहुतिं हुत्वाऽथोत्तराणि हवींषि नाऽऽद्रियेतैतयैव तं काममाप्नोति यमभिकाम उत्तराणि हवींषि निर्वपतीति " । (शतपथ ब्रा० २ । ५ । ९ )**

इत्यत्रार्थवादेनोत्तराणि पवमानादीनि हवींषि न निर्वपेदित्युक्तम् । न चायं काम्यः पूर्णाहुतेर्विषय इति वाच्यम् । तथा चेत्पवमानहविषामपि काम्यत्वं नान्तरीयकम् । यम-भिकाममुत्तराणीत्याम्नानात् । अग्रे उत्तरहविर्विधानं यथा—

**" तदु निर्वपेदेवोत्तराणि हवींषि परोक्षमिव वा एतद्यददस्तदिदमितीव " ( शतपथ ब्रा० २ । ५ । ९ )**

न च वाच्यं पवमानहविर्निर्वाप एव श्रुत्यभिप्रायो लक्ष्यत एवावधारणादिति । पूर्वत्राप्येवकारस्य सत्त्वात् । ब्राह्मण एवकारे सत्यपि विकल्पमेवाभिप्रयन्ति प्रयोगशास्त्रकृत आपस्तम्बप्रभृतयः । यथा तैत्तिरीयब्राह्मणे १ । ३ । १ । इत्यत्र ।

**" न संभृत्याः संभाराः । न यजुः कार्यमिति " ।**

इत्येवं पूर्वमुक्त्वा

**" अथो खलु । संभृत्या एव संभाराः । कार्यं यजुः । पुनराधेयस्य समृद्ध्यै " ॥ इति ।**

**सा० भा०**—सिद्धान्तमाह । अथोशब्देन पूर्वपक्षो निवर्त्यते । एवं ब्राह्मण आम्नातेऽपि प्रयोगशास्त्रकृदापस्तम्बः—" कृताकृताः संभारा यजूंषि च भवन्तीति " तथा प्रकृतमिदमिति ज्ञेयम् । इति प्रयोगशास्त्रकृतां मते पवमाहवींषि सर्वेषां विकल्पेन भवन्तीति ज्ञेयम् । मीमांसकानां मतेन तु सर्वेषामपि पवमानहवींषि नित्यानीत्यलमनया मीमांसाप्रयोगशास्त्रकृतोः सूक्ष्मेक्षिकया । अन्यच्चाऽऽहुर्गुरुचरणाः—यत्र प्रयोगशास्त्रकृतां

मीमांसकानां विरोधः समायाति तत्र प्रयोगशास्त्रमेव बलीय इति । तदप्यत्रानुसंधातव्यम् ।

अथवा काम्यत्वेन पवमानहविषां निर्वापश्चेत्पूर्णाहुत्यैव तं काममवाप्नुयादिति काम्यपरत्वं न्यषेधि पूर्वप्रपञ्चितेन ब्राह्मणेन । नित्यानि त्वपेक्षन्त एवेति वा । शतपथीयभाष्ये तु पवमानहविषामावश्यकतोक्ता परमुभयथाश्रुतिदर्शनाद्विकल्प एवात्राभ्युपगन्तव्यः । ननु विकल्पोऽष्टदोषदुष्ट इति । षोडशिग्रहग्रहणे या गतिस्तां स्मर । तत्राप्यसमाहितो भवांश्चेद्व्यवस्थितविकल्पं विभावयतु । यथा—उदितानुदितहोमयोः । अव्यवस्थितश्चेत्सर्वेषां प्राप्नोति । व्यवस्थितश्चेत्कातीयानामेव विकल्पोऽन्येषां नित्यत्वं नान्तरीयकतया समापतितम् । कातीयानां तु भगवान्कात्यायन एव विकल्पयामास—

"**द्वादशाहान्ते तनूहवींषि निर्वपति मासे द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा नवेति**" ( कात्यायनश्रौ० सू० ४ । २ । ४९ । )

अत्रायमर्थः—आधानदिवसाद्द्वादशेऽहनि तनूहवींषि अग्नये पवमानायेत्यादीनि सद्यो वा पूर्णाहुत्यनन्तरं तस्मिन्नेवाहन्येते सर्वे विकल्पाः । न वा निर्वपति । शाखान्तरेऽप्येते विकल्पाः सर्वथा निषेधं विना कालमात्रस्य स्मर्यन्ते । यथाऽऽपस्तम्बसूत्रे—

"**द्वादशाहे त्र्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा**" ( आप० श्रौ० सू० ५ । २१ । २ ) इति ।

द्वादशाहान्त इत्यत्रान्तग्रहणात्सर्वत्रान्तग्रहणं संबध्यते । तेन द्व्यहान्ते त्र्यहान्त इत्यादि ज्ञेयम् । न्यायस्य समत्वात् । एतेनाऽऽपस्तम्बोक्तविकल्पोक्तद्व्यहादिशब्देष्वप्ययमेव न्यायोऽनुवर्तनीयः । प्रकृते तु नवेत्यस्यायमर्थः । अथवा तनूहवींषि न निर्वपति पूर्णाहुत्यन्तमेव करोति । 'तनूहवींषि' इति अग्नये पवमानायाग्नये पावकायाग्नये शुचय इत्येषां संज्ञा । प्रवृत्तिनिमित्तं तु तैत्तिरीयैरेवं समाम्नातमस्ति । तत्रार्थवादे श्रूयते—

"**ब्रह्मवादिनो वदन्ति । तनुवो वा एता अग्न्याधेयस्य**" ( तै० ब्रा० १ । १ । ६ । )

एतावता तनूहविषां विकल्प एव युक्त इति । यथा वा पशोरपि द्व्यहकालता वाचनिकी सद्यस्त्वमपि वाचनिकम् । अत उभयोरप्यौपदेशिकत्वादविरोधाच्च विकल्प एवाभ्युपगन्तव्य इति निर्विवादम् । तथाऽत्राप्यनुसंधेयम् । अत्राप्यस्ति सद्यो वा नवेति वाचनिकमेवेति नोक्तो दोषो विकल्पाभ्युपगमे । बौधायनस्तु द्वादशसु व्युष्टासु गतासु तनूहविषां निर्वापकालं सूत्रयां बभूव । ब्राह्मणे तु सद्यस्कालं निन्दित्वा संवत्सरप्रतिमासु रात्रिष्वतीतासु निर्वापं विधत्ते । तदेतद्बौधायनैरादर्तव्यम् । तेषां पवमानहविर्निर्वापः सोमपूर्वाधान एव कर्मान्तसूत्रे सद्यो वेत्यनेनोक्तो नान्यदाऽऽप्तेः सद्यो निर्वापो विना

सोमपूर्वाधानाम कर्तव्यः। स्वसूत्रविरोधात् । अन्यत्र प्रायो बौधायनस्तैत्तिरीयं ब्राह्मणमतिक्रम्य न सूत्रयति तस्मादत्रापि यथाब्राह्मणं सूत्रितं सूत्रं तेनातिक्रमितव्यम् । एवं हि श्रूयते तैत्तिरीयब्राह्मणम्—

**"पशवो वा एतानि हवीꣳषि। एष रुद्रः। यदग्निः। यत्सद्य एतानि हवीꣳषि निर्वपेत् । रुद्राय पशूनपिदध्यात् । दपशुर्यजमानः स्यात्। यन्नानुनिर्वपेत् । दनवरुद्धा अस्य पशवः स्युः । द्वादशसु रात्रिष्वनुनिर्वपेत् । संवत्सरप्रतिमा वै द्वादश रात्रयः। संवत्सरेणैवास्मै रुद्रꣳ शमयित्वा। पशूनवरुन्धे " इति ।**

स्पष्टमिति भाष्यं नात्र संगृह्यते तत्रैतत्सर्वमालोच्यैव सूत्रयामास भगवानाचार्यः पूर्णाहुत्यन्तमग्न्याधेयमिति । वयमप्येतत्सर्वमालोच्य निर्णयं कुर्मः। षोडशिग्रहग्रहणवद्विकल्प एव शातपथीयश्रुतिगोचरः । अन्यच्चाऽऽचार्यसूत्रम्—"यदि लिप्सेयुस्तनुयुः" इति च सूत्रम् । तेन ज्ञायत आश्वलायनाभिप्रायः पूर्णाहुतिं हुत्वेष्ट्यकरणेऽप्यग्निहोत्रारम्भ इति । अत्र पराक्रान्तं वृत्तिकृता परं तत्सर्वं मीमांसाशास्त्रगोचरमिति ज्ञेयम् । न प्रयोगशास्त्रकृतस्तदभिप्रयन्ति ।

**अक्षाभिहोमान्तमिति पञ्चमः प्रकारः ।**

तदेतदक्षाभिहोमान्तमाधानं लट्यायनाचार्येण सामवेदीयसूत्रकारेण सूत्रितं चतुर्थाध्याये—

**" हुतायां पूर्णाहुतौ यथार्थꣳ स्यात् । अक्षाꣳश्चेदभिजुहुयुस्तत्र गत्वा तूष्णीमुपविशेत् " । ( ४ । १० । २२ )**

अयं च ब्रह्मण उपदेशस्तूष्णीमुपविशेदिति ।

अत्र भाष्यम्—क्वचिदध्वर्यवोऽक्षाभिहोमं कुर्वन्ति । अक्षा नाम विभीतकफलानि तद्यद्यक्षानभिजुहुयुः । तत्र तस्मिन्गत्वा तूष्णीमुपविशेदिति । इत्यवसितः पूर्णाहुत्यन्ताधानविचारः ।

**इष्ट्यन्तम्—"पवमानहवीꣳषि सद्यो निर्वपेत् " । ( आप० श्रौ० सू० ( ५ । २१ । १ )**

**वृत्तिः**—पवमानहवींषि नाम त्रीण्यनन्तरं वक्ष्यमाणानि तानि सद्यः समानेऽहनि यस्मिन्नाधानं तस्मिन्नेव निर्वपेदिति । तानि त्रीण्येवम्—अग्नये पवमानायाग्नये पावकायाग्नये शुचय इति । इति प्रयोगशास्त्रकृदापस्तम्बः । अस्त्यत्र मीमांसकानामपि विचारसरणिः सा चैवम्—

"संस्कृते कर्म संस्काराणां तदर्थत्वात्" (पू० मी० ५। ३। २१)।

**भाष्यम्**—पवमानेष्टिभिः संस्कृतेष्वग्निषु कर्माणि वर्तेरन्। कुतः—संस्काराणां तदर्थत्वात्। संस्कारशब्दा एत आहवनीयादयः। संस्कारस्य कस्यचिदभावे नाऽऽहवनीयादिषु प्रतिपत्तिः स्यात्। तस्मात्संस्कृतेष्वग्निषु कर्माणीति। सूत्रार्थस्तु—संस्कृते पवमानेष्टिसंस्कृतेऽग्नौ कर्माग्निहोत्रादिकर्म। आहवनीयशब्दस्य संस्कारवाचितया संस्काराणां पवमानसंस्काराणां तदर्थत्वादग्निहोत्राद्यर्थत्वादिति। ननु तर्हि पूर्णाहुतेः पूर्वं हूयमानं तूष्णीमग्निहोत्रमपि मीमांसकानां मते न स्यात्। मैवम्। तत्तु साक्षादेवाऽऽम्नायेनैव मीमांस्य निरणायि—

**ब्रह्मवादिनो वदन्ति होतव्यमग्निहोत्रां ३ इति न होतव्या ३ मिति यद्यजुषा जुहुयात्। अयथापूर्वमाहुती जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। तूष्णीमेव होतव्यं यथापूर्वमाहुती जुहोति। नाग्निः पराभवति। इति।**

तस्मात्तूष्णीमग्निहोत्रं होतव्यमिति सिद्धम्। एतदाम्नायसिद्धम्। मीमांसकानां मते पूर्वोक्तरीत्या न होतव्यमित्यापन्नं तत्र का गतिः। ब्रूमहे। न ह्याम्नायविरुद्धं मीमांसकमतं भवति। सूत्रयामास हि जैमिनिस्तत्तूष्णीमग्निहोत्र होतव्य मिति। यथा—

"**अर्थवादो वाऽर्थस्य विद्यमानत्वात्**"। (जै० सू० ५। ३। २४।)

**भाष्यम्**—अर्थवादो वा "अग्निं वै सृष्टम्। अग्निहोत्रेणानुद्रवन्ति" इति। अर्थवाद एव कुतः—अर्थस्य विद्यमानत्वात्। विद्यमानो हि तत्रान्य एवाग्निहोत्रहोमः। कथं होतव्यमग्निहोत्रं न होतव्यम्। इति मीमांसा प्राङ्निर्दिष्टैव। तस्य तूष्णींहोमस्य प्रशंसार्थोऽयमर्थवाद इति। तस्मात्तूष्णीमग्निहोत्रानुष्ठानविरोधिनी जैमिनीयमीमांसा नास्त्येवेति विभावनीयं बहुविद्भिः। अपि तु नित्याग्निहोत्रं पवमानेष्टीः कृत्वा होतव्यम्। इति जैमिनिमतं कैश्चित्कल्पकारैरपि सूत्रितम्। तदेतदिष्ट्यन्तमाधानमिति जोघुष्यते मीमांसाप्रयोगशास्त्रचणैरिति। तदेतत्सर्वं "यदि त्विष्टयस्तनुयुः" इत्यत्र व्याचख्यौ वृत्तिकृत्। तत्र मीमांसामतमभ्युपगम्यस्याऽऽश्वलायनाचार्यमतमब्रीवृतत्तदेवानुमन्यते वृत्तिकृत्। वयं तूभयथाऽभ्युपगच्छामः। भगवत आचार्यस्य सूत्रप्रणयनादेव। तथा च शतपथश्रुतिकात्यायनसूत्राभ्यामप्ययमर्थोऽवसीयते। ताश्चाऽऽधानस्य तिस्रो विधाः सामवेदीयसूत्रकारेण लाट्यायनाचार्येण सूत्रिताः—

"**अग्न्याधेयानन्तान्कुर्वते पूर्णाहुतिमग्निहोममिष्टीरिति**" (४। १२। १३)

द्राह्यायणोऽपीममर्थमेवानुमन्यते।

भाष्यम्—अग्न्याधेयस्यान्तान्कुर्वतेऽध्वर्यवे पूर्णाहुत्यादि। केषांचित्पूर्णाहुत्यन्तम्।

केषांचिदक्षाभिहोमान्तम् । केषांचिदिष्ट्यन्तम् । इति । तदेतदाधानं षड्विधं विचारेण प्रमाणपदवीं प्रापितम् ।

एवं षड्विधास्वाधानस्य सिद्धास्विदानीं तासां क्रमशोऽनुष्ठानपद्धतिं विचारयामः—

## अथ सोमपूर्वाधानानुष्ठानक्रमः ।

आपस्तम्बस्त्वेवं सूत्रयां बभूव —

**न सोमेनायक्ष्यमाणः पुरा संवत्सरान्निर्वपेत् ।** ( ५ । २१ । ३ । )

**निर्वपेदित्येके ।** ५ । २१ । ४ । )

**यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय इति तिस्र आज्याहुतीः सोमदेवताभ्यो वा हुत्वा निर्वपेत् ।** ( ५ । २१ । ५ । )

अयमर्थः—तत्रैवं संकल्पः—सोमेन यक्ष्यमाणोऽग्नीनाधास्य इति । तत्राऽऽधाननिमित्तकालानियमः । अग्नीनाधाय तस्मिन्नेवाऽऽहवनीये सोमस्याऽऽरम्भः—सोमेन यक्ष्य इत्यादि । तस्मिन्नेवाऽऽहवनीये नियमो नास्तीति केचित् । नियमोऽस्तीति मीमांसकाः । रामाण्डारधूर्तस्वामिप्रभृतयोऽप्यमुमेवार्थमेवानुसंदधते । इष्ट्यन्तमाधानं समाप्याग्नीनरण्योः समारोप्य सोमशालां गत्वा सोमेन यक्ष्य इति संकल्पयन्ति ।

बौधायनस्त्वेवं सूत्रयामास—

**कथमु खल्वग्न्याधेये सोम इति पूर्णाहुत्यन्तं कर्म कृत्वा शालामध्यवस्येद्दीक्षणीयामाग्नेयोऽष्टाकपालोऽनुवर्तेत प्रायणीयामैन्द्राग्नश्चाऽऽदित्यश्च चरुरातिथ्यामग्नये पवमानाय पुरोडाशोऽष्टाकपालोऽग्नीषोमीयस्य पशुपुरोडाशमग्नये पावकायाग्नये शुचये प्रातःसवनीयामन्वारम्भेष्टिरपि वा सर्वाण्येवाऽऽग्न्याधेयिकानि हवींषि परिनिष्ठाप्य शालामध्यवस्येदुदवसानीयामन्वारम्भेष्टिरिति ।**

एतेन कर्मान्तसूत्रेणाऽऽपस्तम्बसूत्राण्यपि व्याख्यातानि वेदितव्यानि । इममेव क्रममाश्वलायना अनुसरन्ति ।

सत्याषाढीयानां तु सोमपूर्वं नास्त्येवेति तत्सूत्रकृत् ।

## इष्टिपूर्वाधानम् ।

आपस्तम्बस्त्वेवं सूत्रयामास—

**" पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टि सान्वारम्भणीयमाधानमपवृज्य श्वोभूते पौर्णमासेन यजते ॥** ( ५ । २४ । ९ । )

**अयमर्थः**—त्रयोदश्यां ब्रह्मौदनान्तं कृत्वा चतुर्दश्यां सेष्टि सान्वारम्भणीयमाधानम-

पवृज्य तस्मिन्नेव दिने सायमग्निहोत्रं हुत्वा पौर्णमास्यां प्रातरग्निहोत्रं हुत्वाऽन्यमाहवनीयं प्रणीयाग्नीनन्वाधाय सायमग्निहोत्रं हुत्वा प्रतिपदि प्रातरग्निहोत्रं हुत्वा पौर्णमासयागारम्भः । अयमेव मुख्यः पक्षः । प्रयोगशास्त्रमीमांसानुकूलः । पौर्णमास्यां त्वादधानः सद्य एव सहेष्टिभिरन्वारम्भणीयया चाग्न्याधेयमपवृज्य तदानीमेवाग्नीनन्वाधाय श्वोभूते पौर्णमासेन यजत इति रुद्रदत्तो यद्व्याचख्यौ तत्तु सूत्रमीमांसाननुकूलमिति मन्यामहे । अतोऽयं गौणः पक्षः । इममेव गौणं पक्षमभिप्रेत्य रामाण्डारप्रभृतयोऽनुष्ठानव्यवस्थामाहुः । सा चैवम्—

पौर्णमास्याधाने पौर्णमास्याः पूर्वमुपक्रमः सर्वकर्मभ्यः साधिकारेभ्यो मध्येऽग्निहोत्रंहोमः । पौर्णमास्याहिताग्नित्वे सति पौर्णमासीमध्येऽप्यग्निहोत्रकाले प्राप्ते तदधिकारप्राप्ते पौर्णमासेनेष्ट्वा सोमेन यजेतेतिवदधिकारक्रमचोदनाभावादेवमन्यत्रापि प्रक्रान्ते तन्त्रे इति न्यायेन पौर्णमासीमध्येऽप्यग्निहोत्रहोमः । पौर्णमास्यर्थेऽग्नौ दशहोतृहोमश्च । नित्याधिकाराग्निहोत्रहोमस्य प्रणयनाङ्गलोपेनापि यथाशक्ति कर्तव्यत्वात्पौर्णमास्याधाने प्रातःकालाभावेऽप्यन्वाधानवत् ।

सत्याषाढीयानामेवम्—

**“ पौर्णमास्यां तु पूर्वस्य पर्वण औपवसथ्येऽहन्यग्नीनाधायसेष्ट्यपवृज्य। तदानीमेव चतुर्होतारं सारस्वतौ होमावन्वारम्भणीयां च श्वोभूते पौर्णमासेन यजेत। ( स० श्रौ० सू० ३ । १ । १३ )**

अत्र वैजयन्तीकृत्—पूर्वस्य पर्वणः पौर्णमास्या औपवसथ्येऽहनि चतुर्दश्यां प्रातराधानं सेष्टि समाप्तिं नीत्वा तस्मिन्नेव दिने चतुर्दश्यामेव सर्वं कुरुते । चतुर्होतारं चतुर्होतृहोमं श्वोभूतेऽन्वाधानादि प्रतिपदि यजते ॥ इति ।

सांख्यायनसूत्रभाष्ये तु पौर्णमास्याधाने तु चतुर्दश्यामुपवासाद्युपक्रमः । पौर्णमास्यामग्न्युत्पत्तिरिष्टयश्च । श्वोभूतेऽन्वारम्भणीया पौर्णमासं चेति ।

बौधायनस्त्वेवं सूत्रयामास—

अथातोऽन्वारम्भस्यैव मीमांसाऽन्वारम्भं पौर्णमास्याः *समानोपवसथं करोति (२।२१) अथात आर्त्विज्यान्यग्न्याधेयानि व्याख्यास्याम इत्युपक्रम्य पौर्णमास्यां तु सद्यस्कालमित्युक्तं कर्मान्तसूत्रे नवमाध्याये । तदेतद्वैधसूत्रे स्पष्टयां बभूव । तदेवम्—

**अन्वारम्भेष्ट्यामिति चतुर्होतारं सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपव-**

---

* समानोपवसथम्—बौधायनीयैः । पौर्णमास्याधाने पौर्णमासस्यान्वारम्भस्यावाधानं समानतंत्रेण कार्यम् । नान्वारम्भणीयां निर्वर्त्य पौर्णमासमन्वादध्यात् । ये तु समानोपवसथमन्वारम्भमकृत्वा अन्वारम्भं समाप्य पौर्णमासमन्वाधाय तस्मिन्नेव दिने प्रथमाग्निहोत्रमनुतिष्ठन्ति ते स्वीयसूत्रविरोधादुपेक्ष्या एव ते नैव कथमपि विद्वद्गोष्ठिनिवेशमर्हन्तीति । सुधीभिः प्रयोगशास्त्रविद्भिर्दूरत एवापसार्या इति यावत् ॥

**सथे कुर्यादथेतरादिष्ट्यहानि कुर्यादिति बौधायनः। चतुर्होतारꣳ सारस्वतौ होमावित्येतदुपवसथे कुर्यादथेतरादिष्ट्यहानि कुर्यादिति शालीकिश्चतुर्होतारमेवोपवसथे कुर्यादथेतरादिष्ट्यहानि कुर्यादित्यौपमन्यवः सर्वमेवैतदिष्ट्यहानि कुर्यादित्यौपमन्यवीपुत्रः। ( द्वैध० सू० २० । १८ )**

तदेतत्सर्वस्मिन्नालोच्यमान एवं बौधायनानां पौर्णमास्याधाननिर्णयः—

( १ ) चतुर्दश्यामुपवासाद्युपक्रम्य ब्रह्मौदनान्तं कृत्वा पौर्णमास्यामग्नीनाधाय चतुर्होतारं सारस्वतौ होमौ हुत्वाऽन्वारम्भेष्टिं समाप्याग्निहोत्रहोमं कृत्वा प्रतिपदि प्रातरग्निहोत्रं हुत्वा पौर्णमासयागान्वाधानाद्यारम्भः कार्य इति प्रथमो मुख्यतमः पक्षः।

( २ ) चतुर्होतारं सारस्वतौ होमावित्येव पौर्णमास्यां कृत्वाऽन्वारम्भणीयादीष्ट्यहनि प्रतिपदीति द्वितीयः पक्षः।

( ३ ) चतुर्होतृमात्रमुपवसथे कृत्वा प्रतिपदि सारस्वतहोमान्वारम्भणीयादि कार्यमिति तृतीयः पक्षः।

( ४ ) चतुर्होत्रादिसर्वमिष्ट्यहनि प्रतिपद्येव कार्यमिति चतुर्थः। अत्र चतुर्ष्वपि पक्षेष्वन्वारम्भेष्टिं विना नाग्निहोत्रारम्भ इति सुधीभिर्ज्ञेयम्।

एवं बौधायनोक्तेषु चतुर्ष्वपि पक्षेष्वन्वाधानोत्तरं प्रथमाग्निहोत्रारम्भो नास्ति। एवं च केचन बौधायनसूत्रिणः स्वसूत्रमनालोचयन्तः स्वकपोलकल्पनया कथंचित्स्वसूत्रमवलोकितं कदर्थयन्तः पारशाखिकसूत्रेण स्वसूत्रोक्तमर्थं कल्पनयाऽप्यप्राप्यमाणमपि हठात्प्रापयन्तश्चतुर्दश्यामुपवासाद्युपक्रम्य पौर्णमास्यां सेष्ट्याधानमपवृज्यान्वारम्भेष्टिमिष्ट्वा पौर्णम समन्वाधाय सायमग्निहोत्रं प्रारभन्ते ते सर्वे सूत्रविरोधादुपेक्ष्या एव। यद्येवमेतानि बौधायनसूत्राणि कथंचिद्भङ्क्त्वा नेष्याम इति चेत् "स्वाध्यायोऽध्येतव्यः" इत्यादिविधिभिन्नेष्वपि स्वकल्पनां योजयित्वा सूत्रसामर्थ्यं च भाष्यादिसंमतादर्थाद्विपरीतमेव वर्णयन्भवादृशो निरङ्कुशः किं किं न कुर्यात्। किंतु धर्मजिज्ञासाधिकरणे कल्पसूत्राधिकरणे च सिद्धान्तितं स्वसूत्रप्रामाण्यं कथं स्वेच्छया व्याकुलयसीति परं पर्यनुयोगे समाधानं विभावय। तस्मात्पूर्वोक्तेषु चतुर्षु पक्षेषु प्रदर्शितो योऽर्थः स एवार्थो मुनिवचसामनुकूलश्चेत्यलं स्वसूत्रोक्तविरुद्धाचारदोषाविष्करणेन।

**( ५ ) कठसूत्रमेवम्—पौर्णमास्यामादधानः पूर्वामुपोष्याऽऽधायाग्न्याधेयेष्टिभिरिष्ट्वा जुह्वदग्निहोत्रमुपतिष्ठमानो वसति श्वोऽन्वारम्भणीयां पौर्णमासं चेति।**

इष्टिपूर्वमित्यत्रान्वारम्भेष्टिपूर्वमित्यपि व्याचख्यौ वैजयन्तीकृत्। "आधानानन्तरमेव प्रारम्भार्थं या क्रियते साऽन्वारम्भणीया। या त्विष्टिर्मध्ये होमं कृत्वाऽऽरभ्यते साऽऽधानादनु न भवतीति नान्वारम्भणीया।" इति। यामनु दर्शपूर्णमासावारभ्येते साऽन्वारम्भणीयेत्यप्यर्थः संगच्छते। अन्यदेतन्न विस्मर्तव्यम्—बौधायनानां पौर्णमास्याधानार्थं न

विहिताऽस्ति। अतस्तेषां पौर्णमास्यां यदि विहितं चित्रादि नक्षत्रं प्राप्नुयात्तदानीं पौर्णमासीशास्त्रार्थस्तैरालोचनीयः। अतः पर्वत्वेन पौर्णमासी तेषां गौणः कालः। नक्षत्रकाल एव तेषां मुख्यः कालः। तत्रापि रोहिणीनक्षत्रयुक्तामावास्या मुख्यतमः काल इति ज्ञेयम्। तत्रापि चित्रानक्षत्रादीन्यपि तेषां गौणान्येव। तत्र च सद्यस्कालत्वमेवैतेषां सर्वम्। तदेतत्सर्वं कर्मान्ते स्पष्टं सूत्रितं तत्पुरस्कुर्मः—

**" पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्रायामिति सद्यस्कालान्येतानि भवन्तीति। अथात आर्तिज्यान्यग्न्याधेयानि व्याख्यास्यामो विपक्ष आपूर्यमाणपक्षे विपक्षेऽपक्षीयमाणपक्ष आदधानो यावानत्रावकाशः स्यात्तमभिविदधीत। पौर्णमास्यां तु सद्यस्कालम्। विपक्षेऽपहियमाणपक्ष आदधानो नात्रावकाशः काङ्क्षणाय विद्यते सर्वमेवैतदहः सद्यस्कालं कुर्याच्चतुर्होतारं सारस्वतौ होमावन्वारम्भेष्टिमिति॥ ( क० सू० २४। १६। )**

पौर्णमास्यां त्वित्यनेन शृङ्गग्राहिकया प्रदर्शयति सद्यस्कालत्वम्। आर्ताधानेऽमावास्याऽपि सद्यस्कालत्वेन विहितेत्यन्यदेतत्। अतोऽमावास्याऽनार्ताधान आर्ताधानेऽपि श्रुता। न तथा पौर्णमासी। पौर्णमासी तु केवलमार्ताधान एव श्रूयते। अतो न तस्यामनार्तैराधातुं शक्यम्। यदैवैनं श्रद्धोपनमेदथाऽऽदधीतेत्यन्यदेतत्। चित्रानक्षत्रं त्वार्ताधानं विनाऽपि गौणमेवेति न मुख्यः कालः। अपि च काम्याधाननक्षत्रं चैतत्। " अपितु न खलु कामनियुक्तान्यग्न्याधेयानि भवन्ति " इत्युपक्रमादापस्तम्बप्रभृतिभिरपि चित्रानक्षत्रं काम्यमित्युक्तम्। राजन्यस्य च यथाऽऽपस्तम्बः—" चित्रायां राजन्यो भ्रातृव्यवान्त्वा " इति " चित्रा च क्षत्रियस्य " इति कात्यायनः। अत्रत्यश्चकारो लाभकामार्थः। चित्रानक्षत्रमकामनियुक्तस्यापि भवति। नित्यत्वेन समाम्नातनक्षत्रेषु चित्रायाः समभिव्याहारः सूच्यते। एतेनोक्तप्रमाणजातेन पौर्णमासी गौणः काल आर्तिज्याधानोक्तत्वात्। अनेन प्रायश्चित्रानक्षत्रं पौर्णमास्यां समायातीति पौर्णमास्यपि गृहीता भवतीति कश्चिच्चोदयेत्तं प्रति ब्रूयात्कण्ठरवेणानुक्तत्वाद्गौण्येव पौर्णमासीति ज्ञेयम्।

एवं च यदा चैत्रपक्षस्थेऽहनि पवमानहविर्निरुप्यान्वारम्भणीयां कृत्वा पौर्णमासमन्वाधाय परेऽहनीष्टिरनुष्ठीयते तत्पौर्णमासेष्टिपूर्वाधानं भवति।

अत्र सत्याषाढः—आधानानन्तरमेव प्रारम्भार्थं क्रियते साऽन्वारम्भणीया। या त्विष्टिर्मध्ये होमं कृत्वाऽऽरभ्यते साऽऽधानादनु न भवतीति नान्वारम्भणीया। इष्टिपूर्वाधानेऽप्यनन्तरभिष्टेः प्रतिपदि रात्रावग्निहोत्रारम्भः। एवं चेष्टिपूर्वाधानमित्यत्रार्थद्वयं सुनिष्पन्नं भवति।

अन्वारम्भेष्टिपूर्वम्। पूर्णमासेष्टिपूर्वम्। चतुर्दश्यां कृतमाधानमन्वारम्भेष्टिपूर्वं भवति। पूर्णमासे कृतमाधानमप्यन्वारम्भेष्टिपूर्वं भवत्येव। परं सत्याषाढस्तु पूर्णमासान्वाधान-

मध्येऽग्निहोत्रं न सहते । आश्वलायनसूत्रिभिस्तत्प्रेतनो वृत्तिकृता प्रदर्शितः पन्था अनुसर्तव्यः ।

**दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयाम् ।** ( आश्व० श्रौ० सू० २ । ८ । १ । )

**वृत्तिः**—पूर्वं दर्शपूर्णमासयोः स्वरूपमात्रमुक्तमिदानीं तयोरनुष्ठानारम्भ उच्यते । इदानीं तावारप्स्यमानस्यान्वारम्भणीयाविधानात् । यस्मादाधानानन्तरमजस्राग्निहोत्रपिण्डपितृयज्ञानुक्त्वाऽनयोरारम्भ उच्यते तस्मादेतत्साधितं भवति । पौर्णमास्यामाधानमिष्टिं च कृत्वा ततोऽजस्रधारणमग्निहोत्रहोमं च कृत्वाऽमावास्यायां पिण्डपितृयज्ञं च कृत्वा पौर्णमास्यां तयोरारम्भ इति ।

तत्र यदापस्तम्बवचनम्—

**पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टि सान्वारम्भणीयमपवृज्य श्वोभूते पौर्णमासेन यजेत । इति ।**

अस्यायमर्थः—पौर्णमास्यामादधानस्तदहरेव पौर्णमासीमारभेतेति । तस्यायं विषयः । यस्यां पौर्णमास्यामन्वारम्भणीयापर्यन्तं सर्वं प्रतिपत्पञ्चदशीसंधिक्षणात्प्रागेव कर्तुं शक्यते साऽस्य विषयः । संध्यनपगमात्पौर्णमास्यधिकारप्राप्तिः । इत्येकस्मिन्नहनि य उत्तरस्मिन्क्षणे दर्शपूर्णमासावारभते स तस्मात्पूर्वस्मिन्क्षणे तावारप्स्यमान इत्युच्यते । तस्यामन्वारम्भणीया कर्तव्या ततोऽयं क्रमः खण्डाखण्डपर्वोपाधित्वेन कल्पनीय इत्यलम् ।

खण्डपर्वपौर्णमास्यामेवं क्रमः—

१ पौर्णमास्यां खण्डपर्वणि प्रातः सेष्ट्याधानम् ।
२ अजस्रधारणम् ।
३ अग्निहोत्रारम्भः ।
४ अमायां पिण्डपितृयज्ञः ।
५ तत आगामिन्यां पौर्णमास्यामन्वारम्भणीया ।
६ ततः पूर्णमासान्वाधानम् ।
७ सायमग्निहोत्रम् ।
८ प्रतिपदि प्रातरग्निहोत्रम् ।
९ प्रतिपदि प्रातः पूर्णमासयागः ।

अखण्डपर्वपौर्णमास्यामेवं क्रमः—

१ चतुर्दश्यां ब्रह्मौदनान्तं कृत्वा ।

२ पौर्णमास्यां सेष्ट्याधानम्।

३ ततोऽन्वारम्भणीया।

४ ततः पूर्णमासान्वाधानम्।

५ सायं तस्मिन्नेवाग्नौ दशहोत्राग्निहोत्रहोमः।

६ प्रतिपदि प्रातरग्निहोत्रम्।

७ ततः पूर्णमासयागः।

विवृणोति तदप्यत्र प्रसङ्गात्प्रदर्शयामः—

**स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग इति न्यायः।**

सेयं ( अन्वारम्भणीया ) पुरुषार्थो न कर्मार्थो श्रुत्यादीनामभावात्। दर्शपूर्णमासावारप्स्यमान इत्यनेन च कर्मसंबन्धो वक्तुं न शक्यते। निमित्ततयाऽधिकारिविशेषणत्वेनोपक्षयादुद्देशकं न भवितुमर्हति। तस्मादनङ्गं तयोरन्वारम्भणीया। तथाऽपि तत्संबन्धपुरुषसंबन्धात्तयोरेवाधिकारित्वेन पुरुषं संपादयतीति युक्तमुक्तम्। अतो दर्शपूर्णमासावृत्तौ विकृतिषु च न पुनः पुनः कार्याऽतिदेशाभावात्कार्यसंबन्ध्यतिदिश्यते न पुरुषार्थसंबन्धमपीति वृत्तिः।

**इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया। सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात्। ( जै० पू० मी० ९।१।३४।३५। )**

दर्शपूर्णमासप्रकरणेऽन्वारम्भणीयाऽऽम्नाता—

**आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः सरस्वत्यै चरुं सरस्वते चरुमिति।**

सा किं दर्शपूर्णमासावृत्तावावर्तेतोत सकृदेवाऽऽदौ स्यादिति संशयः।

आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया।
दर्शाद्यङ्गमियं तस्मादावर्तेत प्रयाजवत्॥

उच्यते—

आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः।
तस्य साधारणत्वेन साऽपि साधारणी भवेत्॥

आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिर्न साक्षाद्दर्शपूर्णमासाङ्गम्। आरम्भश्चेदं मया कर्तव्यमित्यध्यवसायः। स च सर्वप्रयोगाणां साधारणः। सर्वो ह्यग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्णमासौ पर्वणि पर्वणि कर्तव्याविति। तस्मादारम्भसाधारण्यात्तदङ्गभूताऽन्वारम्भणीयाऽपि साधारणी न प्रतिप्रयोगमावर्तनीया।

एवं वृत्तिकारमतेनाधिकरणं व्याख्याय तत्रापरितोषाद्व्याख्यान्तरं भाष्यकारेण कृतम्। कस्य हेतोरपरितोषः। नाध्यवसायवचनोऽयमारम्भशब्दः। प्रथमप्रवृत्तिवाची हि लोके

प्रसिद्धः । यद्यपि चाध्यवसायवाची स्यात्तथाऽपि यद्यदा कार्यमुपस्थितं तस्यैव तदाऽध्यवसायो न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः । नह्ययमेकः प्रयोगोऽभ्यस्तरूपः । पर्वकालिकं तु जीवनं दर्शानुष्ठाननिमित्तम् । तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्तादृशनिमित्तवशान्नैमित्तिकमापतितमिति पुनः क्रियते । यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरुप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति तादृगेतत् । तस्मात्प्रतिप्रयोगमध्यवसायभेदात्तदङ्गमारम्भणीयाऽप्यावर्ततेति तत्सिद्धान्तसिद्धिः । तस्मादेवं व्याख्यायते— किं प्रथमस्याग्न्यन्वाधानात्मकस्य पदार्थस्याङ्गमियमुत दर्शपूर्णमासावारभमाणस्य प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमिति । तत्र—

पुरुषार्थत्वपक्षेऽपि फलक्लृप्तिः प्रसज्यते ।
तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयोर्यतः ॥
तस्याऽऽवृत्तौ तदङ्गत्वादेषाऽप्यावृत्तिमश्नुते ।
प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते ॥
न खल्वारम्भशब्देन पदार्थः कश्चिदुच्यते ।
यदेव ह्यप्रवृत्तस्य कर्तुराद्यप्रवर्तनम् ॥
तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः ।
आरप्स्यमाणशब्दस्तत्कर्तुः श्रुत्यैव वाचकः ॥
लृट्प्रत्ययोऽपि श्रुत्यैव तादर्थ्यस्याभिधायकः
आद्या प्रवृत्तिरेकैव बह्व्यो नैकस्य कर्मणः ॥

प्रथमप्रवृत्तिविषयतया ह्यन्वाधानमनेन प्रतिपाद्यते न श्रुत्या । न च श्रुतिसंभवे लक्षणा युक्ता । तस्मान्नाग्न्यन्वाधानसंबन्धः । दर्शादिकर्तुः पुरुषस्य शानचाऽभिहितस्य संस्कारिकेयमारम्भार्थतया लृट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेन प्रतिपाद्यते । अतो न पुरुषार्थत्वेऽपि फलकल्पना । न चैकस्यैव कर्मणो बह्व्यः प्रथमप्रवृत्तयः संभवन्ति । किंत्वेकैव ।

ननु द्वितीयादीनपि प्रयोगानसावारभत एव । सत्यम् । प्रयोगानारभते न तु दर्शपूर्णमासावारभते । दर्शपूर्णमासारम्भाङ्गं चेयं प्रथमप्रवृत्तिश्चाऽऽरम्भः । न च द्वितीयादि प्रयुञ्जानः प्रथमं प्रयुङ्क्त इति शक्यते वक्तुम् । तस्मात्तदारम्भाङ्गत्वात्तस्य चाऽऽवृत्त्यभावादारम्भणीया नावर्तते ।

**" तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥ न वाऽङ्गभूतत्वात् ॥ ७ ॥ एकवाक्यत्वाच्च " ॥ ८ ॥**

किमारम्भणीयायामारम्भणीया कर्तव्या नेति संशयः । नन्वङ्गभूतेयं दर्शपूर्णमासयोः । अतो दीक्षणीयादिवदस्यां न कर्तव्या । तस्माद्व्रतार्थमेतत् । उच्यते—सत्यमङ्गभूता तथाऽपि पृथगारम्भा भवति । न प्रधानारम्भेण सिध्यति । नह्यस्यां वेलायामारब्धौ दर्शपूर्णमासौ । तयोरारप्स्यमानयोरेषा विहिता । यदि चाऽऽरब्धौ भवेतां तत आरम्भणीयैव न कर्तव्या । सा हि कर्तारमारम्भयोग्यं कर्तुं क्रियते । तौ चेदारब्धौ किमर्था सा । तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भा भवतीत्यलुप्तार्थत्वादस्यामारम्भणीया कर्तव्या । नैवम् । अशक्याऽसावतिदेष्टुम् । सा हीदानीं विधीयते । दूरतरं च तस्या दर्शपूर्णमासाङ्गत्वम् । यच्च प्रकृतावज्ञातं न तद्विकृतावतिदेष्टुं शक्यम् । तदेतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरेतां विदधाति । विहितवच्चातिदिशतीति न कथंचिदवकल्पते । तस्मात्तद्व्यतिरिक्तेति कर्तव्यताऽतिदिश्यते ।

**आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ १९ ॥ स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ आरम्भवियोगाच्च ॥ २१ ॥ ( जै० पू० मी० १२ । २ । १९ । २० । २१ )**

सौर्यादिष्वारम्भणीया स्यान्नवेति विचारे न स्यादिति ब्रूमः । प्रकृतौ हि सकृदेवेयं कर्तव्या न प्रतिप्रयोगमावर्तनीयेत्युक्तं नवमे । यदि च सकृत्कृतयैवानया संस्कृतः पुरुषो यावज्जीवं संस्कृत एव भवति ततोऽस्याः सकृत्करणं युक्तम् । अपवृक्ते तु संस्कारे पुनः पुनस्तत्सिद्ध्यर्थमनुष्ठातव्या स्यात् । तेन प्रकृत्यर्थं कृत एव संस्कारोऽनपवृक्तः प्रसङ्गेन विकृतीनामुपकरोतीति न तास्वारम्भणीया कर्तव्या ।

उच्यते—

न संस्कारव्यवस्थानात्प्रकृतावनावृत्तिः किं त्वारम्भैक्यात् । आद्या हि कर्तुः प्रवृत्तिरारम्भः । स चैकस्य क्रतोरेक एव । अतस्तदपवर्गेऽपवृज्यत एव तदर्थः संस्कारः कार्यविरोधित्वात् । धर्मस्य पुनः पुनः प्रयोगे हि प्रयोगा एव भिद्यन्ते न क्रत्वारम्भः । क्रत्वारम्भाङ्गं चान्वारम्भणीया । दर्शपूर्णमासशब्दस्य क्रतुवचनत्वात् । तस्मान्न पुनः पुनः प्रयोग आरम्भणीया । विकृतिषु त्वारम्भभेदाच्चोदकप्राप्ताऽऽरम्भणीया कर्तव्यैवाऽऽरम्भवेलायाम् ।

नन्वान्वारम्भणीयोत्तरमाधानं सूत्रदीपिकायामवोचत्तद्रुद्रदत्त इति चेत्तदाऽपि नाग्निहोत्रहोमप्रसक्तिः । प्रतिपदि यागं समाप्याग्निहोत्रारम्भः । पूर्णमासेष्टिपूर्वाधानमिति तदाशयः । अथवा चतुर्दश्यामेवाऽऽधानमभिप्रेतम् । अत एव प्रथमपक्षमस्वारसिकं बुद्ध्वैव चातुर्मास्योदाहरणेन द्वितीयपक्षमवोचत् । अन्यच्चान्वारम्भेष्टिपूर्वाधानमेवेष्टिपूर्वमाधानमित्यत्र लिङ्गमप्यस्ति । तदेतत्प्रदर्शयामः—

"**सान्वारम्भणीयमाधानम्**" इत्यापस्तम्बः । आधानं सान्वारम्भणीयमिति विशिनष्टि । तस्मादस्त्याधानस्यान्वारम्भणीयायाश्चाव्यवहितानन्तर्यरूपः संबन्धः । बौधायनोऽप्यन्वारम्भणीयां सूत्रयित्वा "**संतिष्ठतेऽग्न्याधेयम्**" इति सूत्रयति । तस्मादाधानस्यान्वारम्भणीयायाश्च संबन्धोऽवगतः । स च पौर्णमास्याधानं विना न संभवति । तदेतल्लिङ्गं पौर्णमास्याधाने बौधायनानामित्यलम् ।

अत एव काठके सूत्रितम्—

"**आधानं चेत्पौर्णमास्यां पूर्वां तनूदेवताभ्य उपवसेदुत्तरामन्वारम्भणीयायै पर्वणे चेति**" ॥

अत एव पौर्णमास्यामादधानस्य सद्यस्कालामेव पौर्णमासीमभिप्रयन्ति बह्वृचः । अनेनेष्टिपूर्वमित्युक्त इष्टिशब्देन दर्शपूर्णमासौ गृहीत्वा षड्यागसमाप्त्यनन्तरमेवाग्निहोत्रं होतव्यम् । तथा च पौर्णमासं कृत्वाऽमावास्यावधि नास्त्यग्निहोत्रहोमारम्भ इति पौर्णमास्यामग्नीनाधायान्वारम्भणीयां कृत्वा पौर्णमासमन्वाधायाग्निहोत्रमारभ्येष्ट्यहनि याग इति वदन्तः परास्ताः ।

अत एव "**संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्**" इति न्यायेनेष्टिपूर्वमित्यत्रान्वारम्भणीयेष्टिरेव ग्राह्या । अपि चेष्टिपूर्वाधाने नास्ति सौत्रं प्रमाणमित्यभिलपन्तोऽपि प्रत्युक्ता वेदितव्याः । सान्वारम्भणीयमाधानमित्यापस्तम्बसूत्रादिष्टिपूर्वाधानमिति प्रमाणयन्ति प्रमाणविदः । आपस्तम्बः—"अमावास्यायां पौर्णमास्यां वाऽऽधेय इति सामान्यतः सूत्रयित्वा पौर्णमास्यां तु पूर्वस्मिन्पर्वणीत्यनेनानुष्ठानं सूत्रयति । तथा च रुद्रदत्तोक्तो विरोधोऽपि नास्मान्रुणद्धि । अन्यदपि पौर्णमास्यां सद्य एव सर्वं कार्यमिति विकल्पमेव सूत्रयांबभूवुः कल्पकाराः—

"**सद्यो वा सद्यस्कालायां सर्वं क्रियते**" इत्यापस्तम्बः ।

"**सद्यो वा सर्वं क्रियते**" इति सत्याषाढः ।

"**सद्यो वा प्रातः**" इति कात्यायनः ।

तस्य कर्काचार्यकृतं भाष्यमेवम्—

पौर्णमासे यद्द्व्यहकर्तव्यमुक्तं तदेकस्मिन्नेवाहन्यग्न्यन्वाधानादिकर्मापवर्गान्तं भवति । अस्मिन्पक्षे प्रातः प्रतिपद्दिन एव सर्वमग्न्यन्वाधानादिकर्मापवर्गान्तं कार्यम् । न पूर्वेद्युरग्न्यन्वाधानदिने प्रतिपदः प्रधानकालत्वात् । अङ्गानां प्रधानकालस्य न्याय्यत्वात् । तत्र च व्रतोपायनीयाशनारण्याशनान्यतरागारशयनानि न भवन्ति । उक्तकालाभावाद्रागप्राप्ते-

ष्वेवैतेषु द्रव्यादिनियममात्रविधानाच्च । न हि रागतस्तदानीमशनादीनि प्राप्नुवन्ति । तथा च सद्यस्कालां पौर्णमासीमामनन्ति कात्यायनप्रभृतयः । उक्तं हि तेन—

"सन्धिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः" ॥

संधिः प्रतिपत्पर्वसंधिः । पञ्चधा विभक्तस्य दिनस्य द्वितीयो भागः सङ्गवः । पर्यावर्तनं पूर्वाह्णपराह्णसंधिः ।

" खर्विकां तृतीयां वाजसनेयिनः समामनन्ति " ।

**अत्र कपर्दिभाष्यम्**—अस्य सूत्रस्य चायमर्थः—

तृतीयां पौर्णमासीं खर्विकां वाजसनेयिनः पठन्ति । द्वादशधा रात्रिं कृत्वा द्वादशभागावशिष्टे यदा विप्रकर्षस्तां खर्विकेत्याहुः । अल्पकालावशिष्टायां रात्र्यां यदा पर्वकालः सा खर्विकेत्युच्यते । खर्वशब्दोऽल्पवाची । अथवा षोडशेऽह्नि पुरस्तान्मध्यंदिनाद्यदि स्यात्पर्वकालः सा खार्विका षोडशेऽह्न्युपवासः । या त्वेषा खर्विका यस्याश्च पूर्वाह्णे पर्वकालस्तयोः सद्यस्कालेति संज्ञेति सद्यस्कालप्रपञ्चः ।

अद्य हि यत्समापनीयं तत्सर्वमन्वाधानादियागान्तं प्रतिपदि समापनीयमिति यावत् । अन्यच्च ये तु सूत्रकारैर्न सूत्रितमिति वदन्ति तैर्न्यायतः सिद्धं सौत्रप्रयोगे गृह्यते न वा । गृह्यते चेदिदमाधानं न्यायतः सिद्धमवश्यं ग्राह्यमेव । न गृह्यत इति चेदपूर्वविधिपरिसंख्याविधिनियमविधीनां दत्ताञ्जलितापत्तेः । न्यायतः प्राप्तमेव ह्याम्नायसिद्धं सूत्र्यते सूत्रकृद्भिः । प्रयोगशास्त्रापरनामधेयानि हि कल्पसूत्राण्यनुष्ठानायोपयुञ्जते याज्ञिकाः । एवं च न्यायसिद्धमिष्टिपूर्वाधानमनुवदति शबराचार्यः—

अस्त्याधानं तत्रैषोऽर्थः समधिगतः । इष्टिपूर्वत्वं सोमपूर्वत्वं चेति । ( ५ । ४ १० पू० मी० ) मण्डनश्चैतन्मण्डयामासेत्यवादिष्म प्राक् । इतीष्टिपूर्वमाधानं सिद्धमिति निरवद्यः पन्थाः ।

## होमपूर्वाधानम् ।

होमादग्निहोत्रहोमात्पूर्वमव्यवधानेन यदाधानं तदग्नीनाधायान्वारम्भणीयेष्टेः प्रागग्निहोत्रारम्भः कृतश्चेद्धोमपूर्वं भवति । सर्वैरपि सूत्रकारैराधानानन्तरमग्निहोत्रसूत्रमेव सूत्रितम् । अनुष्ठानक्रमेणैव सूत्रणं युक्तम् । तत्रोपोद्घाताद्दर्शपूर्णमासौ व्याख्यातौ । तत्प्रसङ्गादतिदेशस्तत्प्रसङ्गात्कालविधिस्तत्प्रसङ्गादेवाग्निहोत्रहोमप्रकारविधिः । एवं ह्याश्वलायनादिऋषीणां प्रयोगशास्त्रकृतां प्रयोगरचनाक्रमः । अतोऽत्र सूत्रकृतो रचनैव प्रमाणम् । अन्यथाऽऽ-

हिता अग्नयो विहितनक्षत्रादिष्वमावास्यायां च ततः परं नास्तीष्टेः कालः किमनुष्ठेयमिति निरपेक्षमाणा इष्ट्यादिकमग्निहोत्रहोममेवापेक्षन्त इति । एतच्च नक्षत्राधानममावास्याधानमार्ताधानमिति सिद्धम् ।

नक्षत्राधानपक्षेऽपि पूर्वेद्युरुपक्रमो नक्षत्रदिने मन्थनादि । अमावास्याधाने तु चतुर्दश्यां ब्रह्मौदनान्तं कृत्वाऽमावास्यायामग्न्युत्पत्तिरिष्टयश्च सायमग्निहोत्रहोमः । तदेतत्पक्षमेव सूत्रयामासाऽऽचार्य आपस्तम्ब इष्ट्यन्तमाधानमुक्त्वा ततोऽग्निहोत्रहोमं सूत्रयित्वाऽग्रेऽमावास्याधानविषयमेतदिति सूत्रयांबभूव । अतस्तेनैव न्यायेन पौर्णमास्यामपि पवमानेष्ट्यनन्तरमेवाग्निहोत्रं जुहवामेति न वक्तव्यम् । सूत्रवैयर्थ्यात् । तानीमानि सूत्राणि यथाक्रमं निदर्शयामः—

" सिद्धमिष्टिः संतिष्ठते " ( आपस्तम्बश्रौ० सू० ५ । २२ । २ )

" अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये स्रुग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति " ॥ ( ५ । २२ । १० )

"द्वादशाहमजस्रेषु यजमानः स्वयमग्निहोत्रं जुहुयात्" ॥ ( ५ । २२ । १३ )

" अमावास्यायामादधानस्यैतत् " ( ५ । २४ ९ ) इति ।

अमावास्याधानविषयं सूत्रयित्वा यावद्विशेषं पौर्णमास्यां सूत्रयामास । अत एवाऽऽधानं पौर्णमास्यां क्रियमाणमाधानं सान्वारम्भणीयमिति विशिनष्टि । तदेवेष्टिपूर्वत्वे लिङ्गम् । अत एव चामावास्याधानमपि होमपूर्वं सूत्रत एव सिद्धिं प्रापेत्युपरम्यते ।

## पूर्णाहुत्यन्तमाधानम् ।

इदमिदानीं संदिह्यते । इदमाधानमस्ति वा न वा । नास्ति चेत्संज्ञावैयर्थ्यम् । अस्ति चेत्किं प्रमाणमिति जिज्ञासामहे । तदेतन्मीमांसयामः । अस्तीति न संज्ञावैयर्थ्यप्रसङ्गः । प्रमाणं निदर्शयामः । तच्च साक्षात्सोमपूर्वाधानवदाम्नाय एव विदधाति यथा—

" पूर्णाहुतिं जुहोति तद्यत्पूर्णाहुतिं जुहोत्यन्नादं वा एतमात्मनो जनयते यदग्निं तस्मा एतदन्नाद्यमपिदधाति । यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यादेवमस्या एतदन्नाद्यमपिदधाति । स एतेनान्नेन शान्त उत्तराणि हवींषि श्रप्यमाणान्युपरमति । तदाहुः—एतामेवाऽऽहुतिँ हुत्वाऽथोत्तराणि हवीँषि नाद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवींषि निर्वपतीति " ॥

अर्थवादेनोत्तराणि पवमानादीनि हवींषि न निर्वपेदित्युक्तम् । नचायं काम्यपूर्णाहुते-

विषय इति वाच्यम् । तथा चैतत्पवमानहविषामपि काम्यत्वं नान्तरीयकम् । यमभिकाममुत्तराणीत्याम्नातत्वात् । अत्र उत्तरहविर्विधानं यथा—

**" तदु निर्वपेदेवोत्तराणि हवींषि परोक्षमिव वा एतद्यददस्तदिदमितीव " ( शतपथब्राह्मणम् । २ । ५ । ५ )**

न च वाच्यं पवमानहविष्करण एव श्रुत्यभिप्रायो लक्ष्यते । एवावधारणादिति । पूर्वत्राप्येवकारस्य सत्त्वात् । ब्राह्मण एवकारे सत्यपि विकल्पमेवाभिप्रयन्ति प्रयोगशास्त्रकृदापस्तम्बप्रभृतयः । यथा तैत्तिरीये ब्राह्मणे—

**" न संभृत्याः संभारा न यजुः कर्तव्यमिति । अथो खलु संभृत्या एव संभाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै " ( तैत्तिरीयब्रा० १ । ५ । २ )**

इत्यत्र ।

अत्र भाष्यकारः—अथो खल्विति सिद्धान्तमित्याह । शतपथवत्पवमानहविर्वत् ।

तथाऽप्यापस्तम्बः—" **कृताकृताः संभारा यजूंषि च भवन्ति** " इति सूत्रयांबभूव । तथेदमिति ज्ञेयमिति सर्वशाखीयानां पवमानहविषां विकल्प एव प्रयोगशास्त्रकृतां मतेन मीमांसकमतेन तु सर्वेषां नित्यत्वमित्यलम् । अथवा काम्यनिर्वापाश्विकीर्षितः पवमानहविषां चेत्पूर्णाहुत्यैव तं काममवाप्नुयादिति काम्यपरत्वं न्यषेधि पूर्वं प्रपञ्चितेन ब्राह्मणेन नित्यानि त्वपेक्षन्त एवेति वा ।

भाष्ये तु शातपथीये पवमानहविषामावश्यकतोक्ता । परमुभयथा श्रुतिदर्शनाद्विकल्प एवात्राभ्युपगन्तव्यः । ननु विकल्पोऽष्टदोषदुष्ट इति । षोडशिग्रहणवत्समाधेयम् । उदितानुदितहोमवद्वा । एवं व्यवस्थितविकल्पः । अव्यवस्थितो वा । अव्यवस्थितश्चेत्सर्वेषां प्राप्नोति । व्यवस्थितश्चेत्कातीयानामेव विकल्पः । अन्येषां नित्यत्वं समायाति । कातीयानां तु विकल्पयांबभूव कात्यायनः श्रौतसूत्रे—

**" द्वादशाहान्ते तनूहवींषि निर्वपति मासे द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा न वा " ( का० श्रौ० सू० ४ । २४ । ९ )**

अत्र भाष्यम्— आधानदिवसाद्द्वादशेऽहनि तनूहवींषि अग्नये पवमानायेत्यादीनि निर्वपति सद्यो वा पूर्णाहुत्यनन्तरं तस्मिन्नेवाहन्येते सर्वे समविकल्पाः । शाखान्तर आपस्तम्बसूत्रेऽप्युपलभ्यन्ते विकल्पपक्षाः । यथा—

**" द्वादशाहे द्व्यहे त्र्यहेऽर्धमासे मास्यृतौ संवत्सरे वा " ( आप० श्रौ० सू० ५ । २१ । २ ) इति ॥**

द्व्यहे त्र्यहे चतुरहेऽर्धमासेऽपि द्वादशाहान्त इत्यत्रान्तग्रहणात्सर्वत्र द्व्यहान्ते मासान्त इति ज्ञेयं न्यायस्य समत्वादिति। अथवा तनूहवींषि न निर्वपति पूर्णाहुत्यन्तमेव करोति तनूहवींषीत्यग्नये पवमानायाग्नये पावकायाग्नये शुचय एषां संज्ञा। प्रवृत्तिनिमित्तं तु तैत्तिरीयशाखायामर्थवादे श्रूयते। तच्च प्रसङ्गादुदाहरामः—

"ब्रह्मवादिनो वदन्ति तनुवो वा वैता अग्न्याधेयस्य" ( तै० ब्रा० १।१।६)

तस्मादुभयथा श्रुतत्वाद्विकल्प एव युक्तः। यथा वा पशोरपि द्व्यहकालता वाचनिकी सद्यस्त्वमपि वाचनिकम्। अत उभयोरौपदेशिकत्वाविरोधाच्च विकल्प एव युक्त इति। तद्वदेवात्र संभावनीयम्। अत्राप्यस्ति सद्यो वा न वेति वाचनिकमेवेति न दोषो विकल्पाभ्युपगमे।

बौधायनस्तु द्वादशसु व्युष्टासु गतासु तनूहविषां निर्वापकालं सूत्रयांबभूव। ब्राह्मणे तु सद्यस्कालं निन्दित्वा संवत्सरप्रतिमारूपासु रात्रिष्वतीतासु निर्वापं विधत्ते। तदेतद्बौधायनैरादर्तव्यम्। तेषां सोमपूर्वाधान एव पवमानहविर्निर्वापः कर्मान्तसूत्रे सद्यो वेत्यनेन युक्तो नान्यदा। अतस्तैः सद्यो निर्वापो न कर्तव्यः स्वसूत्रविरोधात्।

अत्र तैत्तिरीयब्राह्मणमुदाहरिष्यते—

**"पशवो वा एतानि हवींषि एष रुद्रो यदग्निर्यत्सद्य एतानि हवींषि निर्वपेत्। रुद्राय पशूनपिदध्यादपशुर्यजमानः स्याद्यन्नानुनिर्वपेदनवरुद्धा अस्य पशवः स्युर्द्वादशसु रात्रिषु अनुनिर्वपेत्। संवत्सरप्रतिमा वै द्वादशरात्रयः संवत्सरेणैवास्मै रुद्रꣳशमयित्वा पशूनवरुन्धे" इति॥**

स्पष्टार्थ इति भाष्यं नात्र संगृह्यते। तत्रैतत्सर्वं शातपथीयमतमालोच्य सूत्रयामासाऽऽश्वलायनाचार्यः। तेन ज्ञायते षोडशिग्रहग्रहणवद्विकल्प एवायं पवमानहविषां शतपथश्रुतिगोचरः। तदेतदाश्वलायनीयसूत्रम्—

**"पूर्णाहुत्यन्तमग्न्याधेयम्" "यदि त्विष्टयस्तनुयुः"। ( औ० सू० २। १।१७)** इति च सूत्रम्।

तेन ज्ञायत आश्वलायनाभिप्रायः पूर्णाहुतिं हुत्वेष्ट्यकरणेऽप्यग्निहोत्रारम्भ इति। अत्र पराक्रान्तं तत्रभवता वृत्तिकृता। परं तत्सर्वमीमांसामतेनेति ज्ञेयं न प्रयोगशास्त्रकृदाचार्यमतेन।

## अक्षाभिहोमान्तम् ।

तदेतत्सामवेदीयलाटयायनाचार्यप्रणीतश्रौतसूत्रे चतुर्थाध्याये दृश्यते—

**" हुतायां पूर्णाहुतौ यथार्थꣳस्यात् । अक्षाꣳश्चेदभिजुहुयुस्तत्र गत्वा तूष्णीमुपविशेत् " ( ४ । १० । २२ )**

अयं च ब्रह्मण उपदेशस्तूष्णीमुपविशेदिति ।

**भाष्यम्**—क्वचिदध्वर्यवोऽक्षाभिहोमं कुर्वन्ति । अक्षा नाम विभीतकफलानि । तद्यद्यक्षानभिजुहुयुः । तत्र तस्मिन्गत्वा तूष्णीमुपविशेदिति । इत्यत्रासितः पूर्णाहुत्यन्ताद्याधानविचारः ।

## इष्ट्यन्तम् ।

**" पवमानहवींषि सद्यो निर्वपेत् "** । ( आ० सू० ५ ।२१ । १ )

**भाष्यम्**—पवमानहवींषि नाम त्रीण्यनन्तरं वक्ष्यमाणानि तानि सद्यः समानेऽहनि यस्मिन्नाधानं तस्मिन्नेव निर्वपेत् । इत्यापस्तम्बसूत्रं प्रमाणम् । अन्यच्च मीमांसकानां मतेनोच्यते । जैमिनिप्रभृतीनां मीमांसकानां मतेनेष्ट्यन्तमेवाऽऽधानं कृत्वैवान्यदारब्धव्यम् । तदेतत्संगृह्णीमः—

**" संस्कृते कर्म संस्काराणां तदर्थत्वात् "** । ( जै० पू० मी० ५ । ३ । २१ )

**भाष्यम्**—पवमानेष्टिभिः संस्कृतेष्वग्निषु कर्माणि वर्तेरन् । कुतः । संस्काराणां तदर्थत्वात् । संस्कारशब्दा एत आहवनीयादयः संस्कारस्य कस्यचिदभावे नाऽऽहवनीयादिषु प्रतिपत्तिः स्यात् । तस्मात्संस्कृतेष्वग्निषु कर्माणीति ।

सूत्रार्थस्तु—संस्कृते पवमानेष्टिसंस्कृतेऽग्नौ कर्माग्निहोत्रादिकर्माऽऽहवनीयशब्दस्य संस्कारवाचितया संस्काराणां पवमानसंस्काराणां तदर्थत्वादग्निहोत्राद्यर्थत्वादिति ।

ननु तर्हि पूर्णाहुतेः पूर्वं हूयमानं तूष्णीमग्निहोत्रमपि मीमांसकानां मते न स्यात् ।

मैवम्—तत्तु साक्षादाम्नायेनैव मीमांस्य निरणायि—

**" ब्रह्मवादिनो वदन्ति होतव्यमग्निहोत्राꣳ३ इति न होतव्या ३ मिति यद्यजुषा जुहुयात् । अयथापूर्वमाहुतीर्जुहुयाद्यन्न जुहुयात् । अग्निः पराभवेत् । तूष्णीमेव होतव्यं यथापूर्वमाहुतीर्जुहोति नाग्निः पराभवति " इति ॥**

तस्मात्तूष्णीमग्निहोत्रं होतव्यमिति सिद्धम् ।

एतदाम्नायसिद्धं मीमांसकानां मते पूर्वोक्तया रीत्या न होतव्यमित्यापन्नम् । तत्र का गतिः । ब्रूमः—

न ह्याम्नायविरुद्धा मीमांसा भवति । सूत्रयामास हि जैमिनिस्तत्तूष्णीमग्निहोत्रं होतव्यमिति । यथा—

" अर्थवादो वाऽर्थस्य विद्यमानत्वात् " । ( जै० सू० ५ । ३ । २४ । )

**भाष्यम्**—अर्थवादो वा—" अग्निं वै सृष्टम् " " अग्निहोत्रेणानुद्रवन्ति " इत्यर्थवाद एव । कुतः । अर्थस्य विद्यमानत्वात् । विद्यमानो हि तत्राम्य एवाग्निहोत्रहोमः । कथं होतव्यम् । अग्निहोत्रं न होतव्यम् । इति मीमांसोपरि प्रदर्शितैवेति । तस्य तूष्णींहोमस्य प्रशंसार्थोऽयमर्थवाद इति । तस्मात्तूष्णीमग्निहोत्रविरोधिनी जैमिनीयमीमांसा नास्ति । अपि तु नित्याग्निहोत्रं पवमानेष्टीः कृत्वा कर्तव्यम् । इति जैमिनिमतं केषांचित्कल्पकाराणाम् । तदेतदिष्ट्यन्तमाधानमिति जेघुष्यते मीमांसकशिखामणिभिः ।

तदेतत्सर्वम् " यदि विष्टयस्तनुयुः " इत्याश्वलायनसूत्रे व्याचख्यौ । सर्वं यथास्थितं मीमांसामतं व्याख्याय चाऽऽश्वलायनाचार्यस्य तदेव संमतमिति चानुमन्यते वृत्तिकृत् ।

वयं तूभयथाऽभ्युपगच्छामः । शतपथकातीयसूत्रतद्भाष्यकारप्रामाण्यात् । तदेतदाधानस्य तिस्रो विधाः सामवेदीयसूत्रकारलाट्यायनाचार्येण सूत्रिताः—

**अग्न्याधेयान्तान्कुर्वते पूर्णाहुतिमक्षाभिहोममिष्टीरिति** ( ४ । १२ । १३ ) द्राह्यायणोऽप्येवमेव ।

**भाष्यम्**—अग्न्याधेयस्यान्तान्कुर्वतेऽध्वर्यवे पूर्णाहुत्यादि । केषांचित्पूर्णाहुत्यन्तम् । केषांचिदक्षाभिहोमान्तम् । केषांचिदिष्ट्यन्तम् । इति ।

तदेतदाधानं षड्विधं विचारितम् । तद्विषयकाणि प्रमाणान्यप्युपन्यस्तानि । अनुष्ठानपद्धतिश्च पूर्वेषां त्रयाणां प्रदर्शिता । उत्तरेषां त्रयाणां त्वाधानपद्धतौ प्रदर्शितैव । तत्राक्षाभिहोमो नास्त्यापस्तम्बेन सूत्रित इति न मीमांसितोऽस्माभिः । अत एव केषांचित्स होम इत्यपि निर्दिष्टं लाट्यायनाचार्येणेत्युपरतम् ।

तदिदमनुष्ठानपूर्वं विचारितम् । तथाऽपि विशयमानानामर्थे पुनर्निगमयामि । ' पौर्णमास्यां तु ' इत्यापस्तम्बसूत्रादिष्टिपूर्वाधानं सौत्रमिति जानन्तु सुधियां वराः ।

तत्राजस्रधारणादिविचारः स्वतन्त्रतयाऽऽधानपद्धतौ प्रपञ्चितः । तत्र वृत्तिकारमतं यदुपन्यस्तं तत्तु प्रथमाग्निहोत्रव्यतिरेकीति ज्ञेयम् । इष्टिपूर्वे सोमपूर्वेऽजस्रधारणं नास्तीति तदीयः सिद्धान्तः ।

" सोमाधाने नाजस्रान्कुर्यादिति भारद्वाजः " ।

अत एवोभयथा वचनानां प्रवृत्तेः सत्त्वात्सोमपूर्वेष्टिपूर्वाधानयोरजस्रधारणविकल्प एवाभ्युपगन्तव्यः । विकल्पेऽङ्गीकृते वृत्तिकृन्नारायणो वैजयन्तीकृन्माधवश्च समनुगतो भवति । अथवोदितानुदितहोमवद्व्यवस्थितविकल्पो ज्ञेयः । सर्वथेष्टिपूर्वाधाने नाम पौर्णमास्याधान इष्टेरनन्तरमेव प्रतिपदि सायमारम्भ इति निर्विवादम् ।

वयं तु " उद्धरणपक्षेऽपि द्वादश रात्रीर्धार्येष्वेवाग्निषु होमः " इति वक्ष्यमाणात्नानुगमनं नोद्धरणं च । पवमानहविर्षा व्यवधानपक्षेऽपि यावदग्निहोत्रारम्भस्तावदजस्राणामेव धारणमाश्वपदिक एव द्वादश रात्रीर्होमविधानापरिसमाप्ते चाऽऽधाने मध्येऽग्निधारणमेव । यागमध्येऽनुगमने प्रायश्चित्तमस्त्येव । ततो द्वादश रात्रीः सायंप्रातर्होमार्थमपि धारणमिति निर्णय आश्वपदिक एव प्रथमाग्निहोत्रस्याऽऽरम्भविधानादविशेषेण सोमाधानेऽवभृथानन्तरं तस्मिन्नेवाग्नावग्निहोत्रारम्भः । इष्टिपूर्वाधाने त्वनन्तरमिष्टेः प्रतिपदि रात्रावारम्भ इत्यस्मदुक्तामेव रीतिमनुसरति वैजयन्तीकृत् । स्पष्टं चैतत्तेनेत्युक्तं भवति । इष्टिपूर्वाधानं नाम पौर्णमासेष्टिपूर्वाधानम् । तस्मिंश्चिकीर्षमाण आधानेऽग्निहोत्रारम्भः प्रतिपदि रात्राविति ।

अनेन यत्किंचिदनाघ्रातसूत्रकुसुमा अनधीतमीमांसाः प्रलपन्तः प्रत्याख्याता वेदितव्या इत्यलं बहुना लेखनीव्यापारव्यापृतदक्षिणहस्तदाक्षिण्येनेत्युपरम्यते ।

तदेतदाधानं वसन्ते ब्राह्मणगुणकं ग्रीष्मे क्षत्रियगुणकं वर्षासु वैश्यगुणकं शरद्युपक्रुष्टगुणकं नक्षत्राधानं पर्वाधानं नक्षत्रपर्वाधानमृत्वाधानमृतुपर्वाधानमार्ताधानमिति ।

**पुनराधेयं व्याख्यास्यामः ॥ १ ॥ तस्याग्न्याधेयवत्कल्पः ॥ २ ॥ अग्नीनाधायैतस्मिन्संवत्सरे यो नर्ध्नुयात्स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो ज्यान्यां पुत्रमत्यायां स्वेष्वारुध्यमानेषु यदा वाऽङ्गेन विधुरतां नीयात् ॥ ३ ॥ आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमतेऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन् ॥ ४ ॥ या ते अग्न उत्सीदतः पवमाना प्रिया तनूः । तया सह पृथिवीमाविश रथंतरेण साम्ना गायत्रेण च च्छन्दसा । या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूः । तया सहान्तरिक्षमाविश वामदेव्येन साम्ना त्रैष्टुभेन च च्छन्दसा । ततो न ऊर्जमाकृधि गृहमेधं च वर्धय । या ते अग्ने सूर्ये शुचिः प्रिया तनूः शुक्रेऽध्यधिसंभृता । तया सह दिवमाविश बृहता साम्ना जागतेन च च्छन्दसा ततो नो वृष्ट्याऽवत । यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः । ताभिर्मः कामान्धुक्ष्वेह प्रजां पुष्टिमथो धनम् । यास्ते अग्ने संभृतीरिन्द्रः सूकर आरभत् । तासु शोचिषु**

सीदेह भस्म वैश्वानरस्य यत् ॥ ५ ॥ ये ते अग्ने वानस्पत्याः संभाराः संभृताः सह । तेभिर्गच्छ वनस्पतीन्स्वां योनिं यथायथम् । अगन्नग्निर्यथालोकमसदत्सदने स्वे । अवीरहत्यं देवेषूपागां मनसा सहेति पुरस्तात्स्विष्टकृतः सप्ताऽऽहुतीर्जुहोति ॥ ६ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥ पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति ॥ ८ ॥ संवत्सरं परार्ध्यमुत्सृष्टाग्निर्भवति ॥ ९ ॥ रोहिणी पुनर्वसू अनुराधा इति नक्षत्राणि ॥ १० ॥ वर्षासु शरदि वाऽऽदधीत ॥ ११ ॥ कृताकृताः संभारा यजूंषि च भवन्ति ॥ १२ ॥ अपि वा पञ्च पार्थिवान्संभारानाहरति एवं वानस्पत्यान् ॥ १३ ॥ आयतनेषु पुराणान्दर्भान्संस्तीर्य भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति ॥ १४ ॥ मध्यंदिन इतरान् ॥ १५ ॥ उपोलवैर्दर्भैः परुत्कैः संवत्सरप्रवातैराहवनीयं ज्वलन्तमुद्धरति ॥१६॥ यत्त्वा क्रुद्धः परोवपेति दक्षिणाग्निम् । यत्ते मन्युपरोप्तस्येतीतरान् ॥ १७ ॥ मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते ॥ १८ ॥ सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति ॥ १९ ॥ आग्नेयं पञ्चकपालं निर्वपत्यष्टाकपालं वा ॥ २० ॥ यदि पञ्चकपालो गायत्र्यौ संयाज्ये । यद्यष्टाकपालः पङ्क्त्यौ ॥ २१ ॥ सर्वमाग्नेयं भवति ॥ २२ ॥ पञ्चदश सप्तदश वा सामिधेन्यः ॥ २३ ॥ सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्टकृतम् ॥ २४ ॥ अग्नाग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ॥ २५ ॥ नोत्तमे ॥ २६ ॥ विभक्तिमुक्त्वा प्रयाजेन वषट्करोति ॥ २७ ॥ यं कामयेतर्ध्नुयादिति तस्योपरिष्टाद्ये यजामहाद्विभक्तिं दध्यात्पुरा वा वषट्कारात् ॥२८॥ अग्निं स्तोमेन बोधयेत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति । अग्न आयूंषि पवस इति सौम्यस्य ॥ २९ ॥ अग्निर्मूर्धेति वा सौम्यस्य कुर्यात् ॥ ३० ॥ प्रजाकामपशुकामस्य प्रजाव्यृद्धपशुव्यृद्धस्य वा ॥ ३१ ॥ आग्निन्यक्ताः पत्नीसंयाजानामृचो भवन्ति ॥ ३२ ॥ अपि वा यथापूर्वमाज्यभागावेवं पत्नीसंयाजाः ॥ ३३ ॥ अग्ने तमद्याश्वमित्यक्षरपङ्क्त्यो याज्यानुवाक्या भवन्ति द्वे आग्नेयस्य द्वे स्विष्टकृतः ॥ ३४ ॥ पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुतीर्जुहोति ॥ ३५ ॥ पुनरूर्जेति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम् ॥ ३६ ॥ एतद्वा विपरीतम् ॥ ३७ ॥ उभयीर्दक्षिणा ददाति ॥ ३८ ॥ आग्न्याधेयिकीः पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येताः शतमानं च हिरण्यम् ॥ ३९ ॥ तस्माद्रजतं हिरण्यमित्युक्तम् ॥ ४० ॥ पुनरभिहितो रथः पुनरुत्स्यूतं स्यामूलं पुनः कामस्याऽऽप्त्या इत्येकेषाम् ॥ ४१ ॥

यदीतराणि न विन्देरन्नप्यनड्वाहमेव दध्यात् । अनडुहि ह वा एते च कामा अतश्च भूयांस इति पैङ्गायनिब्राह्मणं भवति ॥ ४२ ॥ देवे अग्नौ देवो अग्निरिति द्वयोरनूयाजयोर्विभक्ती दधाति ॥ ४३ ॥ नोत्तमे ॥ ४४ ॥ उच्चैरुत्तमं संप्रेष्यति ॥ ४५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ४६ ॥ आग्निवारुणमेकादशकपालमनुनिर्वपति सर्वेषामनुनिर्वाप्याणां स्थाने द्विदेवत्यानां वा ॥ ४७ ॥ सिद्धमिष्टिः संतिष्ठते । संतिष्ठते पुनराधेयम् ॥ ४८ ॥ यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लेकः सलेकः सुलेक इति ॥ ४९ ॥ यदरण्योः समारूढो नश्येत् ॥ ५० ॥ यस्य वोभावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः ॥ ५१ ॥ पुनराधेयमित्याश्मरथ्योऽग्न्याधेयमित्यालेखन आलेखनः ॥ ५२ ॥

पुनराधेयं व्याख्यास्यामः ॥ १ ॥

वृत्तिः—आहिता अग्नयः पुनर्विधानान्तरेणाऽऽधीयन्ते यस्मिन्कर्मणि तत्पुनराधेयं नामाग्न्याधेयस्यैव गुणविकारः ॥ १ ॥

तस्याग्न्याधेयवत्कल्पः ॥ २ ॥

वृत्तिः—गतः ॥ २ ॥

अग्नीनाधायैतस्मिन्संवत्सरे यो नर्ध्नुयात्स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो ज्यान्यां पुत्रमर्त्यायां स्वेष्वारुध्यमानेषु यदा वाऽङ्गेन विधुरतां नीयात् ॥ ३ ॥

वृत्तिः—यो नर्ध्नुयादिति प्रजापश्वादिहान्या व्यृद्धिनिमित्तमुच्यते । नद्धर्यभावमात्रं प्रजां पशुं यजमानस्योपदोद्रावेति लिङ्गात् । आधानाद्यामयावी यदि वाऽर्थो व्यथेरन्नित्याश्वलायनवचनाच्च । ज्यानिर्व्याध्यादिभिर्बाधः । पुत्रमर्त्या पुत्रमृतिः । स्वेषु ज्ञातिष्वारुध्यमानेषु बलवद्भिः परैर्निगृह्यमाणेषु । यदा वाऽङ्गेन हस्तपादादिना विधुरतां नीयाद्विकलतां गच्छेत् । एतस्मिन्संवत्सर एतेषु निमित्तेषु कामेषु वा संजातेषु पुनरादधीत । केचित्त्वन्त्यं निमित्तं यदा वेत्यविशेषात्सार्वकालिकं मन्यन्ते । अन्ये तु प्रजाकामप्रभृत्येतस्मिन्संवत्सर इति नानुवर्तयन्ति । तदुभयमप्ययुक्तम् । सर्वदोपात्तस्य कालस्य सर्वान्प्रत्यविशेषात् । यदा वेति च निमित्तनिर्देशप्रकारत्वाच्च । व्यक्तं चाऽऽह सत्याषाढः—य एतस्मिन्संवत्सरे ज्यानिं पुत्रमर्त्यां वाऽभ्येति स्वेन वाऽङ्गेन व्यृध्यते न बर्ध्नोति स पुनराधेयं कुर्वीतेति । तथा च बौधायनः—अग्नीनाधाय पापीयानभूवमज्यासिषि पुत्रो मृत इत्येतस्मिन्नेव संवत्सर इष्टं भवतीति ॥ ३ ॥

**आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणमेकादशकपालमग्नयेऽसुमतेऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन् ॥ ४ ॥**

**वृत्तिः**—केवलवैश्वानरचोदनासु वैश्वानर एव देवता न तु तद्गुणकोऽग्निस्तस्याश्रवणादिति केचित् । तत्तु मन्दफलं बहुमन्त्रब्राह्मणकल्पविरोधात् । इतरथाऽप्यश्रवणोपपत्तेश्च । तथा हि मन्त्रास्तावद्याज्यानुवाक्यादयस्तद्गुणाग्निलिङ्गा एव । यथा 'वैश्वनरो अजीजनत्' पृष्टो दिवीत्यादयः । ब्राह्मणेऽपि वैश्वानरं द्वादशकपालं निर्वपेदिति विधाय संवत्सरो वा अग्निर्वैश्वानर इति वाक्यशेष आम्नातः । सूत्रकारोऽपि वायव्यपशावग्नये वैश्वानराय द्वादशकपालं पशुपुरोडाशं निर्वपतीत्युक्त्वा तमेवान्यत्रापि विकल्पयन्नाह—यः कश्चनाग्नौ पशुरालभ्यते वैश्वानर एवास्य द्वादशकपालः पशुपुरोडाशो भवतीत्येक इति । तथा यदस्य पारे रजस इति वैश्वानराग्निलिङ्गामृचं विनियुङ्क्ते वैश्वानर्या परिधिय्येति । बौधायनेनाप्युक्तं वैश्वानरमवदायाऽऽहाग्नये वैश्वानरायानुब्रूहीति । भारद्वाजेनापि वैश्वानरं द्वादशकपालं निर्वपेदित्यनुवाकाम्नातान्वैश्वानरान्व्याचक्षाणेनोक्तम्—अग्नये वैश्वानराय पुरोडाशं द्वादशकपालं निर्वपतीति । यत्त्वग्नेरश्रवणमुक्तं तदपि तद्धितवृत्तित्वादुपपन्नम् । यत्र तु सगुणदेवतासंबन्धस्तद्धितवृत्त्या विवक्षितस्तत्र गुणशब्दादेव तद्धितः क्रियते । गुणी त्वश्रुतोऽपि वाक्यशेषादिनाऽवसीयत इति पन्थाः । यथा वैमृधो गृहमेधीयः पाथिकृतीत्यादौ । तस्मात्सिद्धं केवलवैश्वानरचोदनास्वपि अग्निर्वैश्वानरो देवतेति । उद्वासयिष्यन्निति वक्ष्यमाणकालादुद्वासनात्पूर्वस्मिन्काल इत्यर्थः । आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति । काम्येष्टिष्वाम्नाताया द्विहविषोऽपीष्टेरनया विकल्पमिच्छन्ति ता ब्राह्मणव्याख्याता इति तस्या अप्युपसंग्रहात् ॥ ४ ॥

**या ते अग्न उत्सीदतः पवमाना प्रिया तनूः । तया सह पृथिवीमाविश रथंतरेण साम्ना गायत्रेण च च्छन्दसा । या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूः । तया सहान्तरिक्षमाविश वामदेव्येन साम्ना त्रैष्टुभेन च च्छन्दसा । ततो न ऊर्जमाकृधि गृहमेधं च वर्धय । या ते अग्ने सूर्ये शुचिः प्रिया तनूः शुक्रेऽध्यधिसंभृता । तया सह दिवमाविश बृहता साम्ना जागतेन च च्छन्दसा ततो नो वृष्ट्याऽवत । यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः । ताभिर्नः कामान्धुक्ष्वेह प्रजां पुष्टिमथो धनम् । यास्ते अग्ने संभृतीरिन्द्रः सूकर आरभत् । तासु शोचिषु सीदेह भस्म वैश्वानरस्य यत् ॥ ५ ॥**

**ये ते अग्ने वानस्पत्याः संभाराः संभृताः सह । तेभिर्गच्छ वनस्पतीन्स्वां योनिं यथायथम् । अगन्नग्निर्यथालोकमसदत्सदने स्वे । अवीरहत्यं देवेषूपागां मनसा सहेति पुरस्तात्स्विष्टकृतः सप्ताऽऽहुतीर्जुहोति ॥ ६ ॥**

**वृत्तिः**—जयवद्व्याख्या ॥ ६ ॥

**सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥**

**वृत्तिः**—गतः ॥ ७ ॥

**पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति ॥ ८ ॥**

**वृत्तिः**—निमित्तकामयोः सतोरागामिना पौर्णमासेनेष्ट्वाऽनन्तरमुत्सर्गार्थामिष्टिं निरुप्य तदन्ते ज्वलतस्तानग्नीनुत्सृजति बुद्ध्यापेक्षते न रक्षतीत्यर्थः । ज्वलत इति वचनान्न निर्वापयति । यच्च परमतेन प्रसक्तं निवार्यते । यथाऽऽह बौधायनः—अद्भिरग्नीन्समुक्षेति । केचित्तु पूर्वेद्युरुत्सर्गेष्टिं निरुप्य पौर्णमासानन्तरमुत्सर्गमिच्छन्ति । तदयुक्तम् । अग्निहोत्रमारप्स्यमान इत्यादिवदुद्वासयिष्यन्नित्यनेनोत्सर्गेष्टेरुत्सर्गादपृथक्कालत्वावसायात् । उत्सर्गेष्ट्यन्ते चाग्नीनामदृष्टतिरोधानेनाकर्माङ्गत्वाद्विपर्ययस्यैव सत्याषाढादिभिर्व्यक्तवचनाच्च । अथैषाऽत्र मीमांसा पुनराधाननिमित्ते संजाते यदि स्वयमग्नयो विच्छिद्येरन्विच्छिन्नेषु वाऽग्निषु निमित्तं जायेत तदा किं पुनराधानमात्रं कर्तव्यमाहोस्विदुत्पाद्याग्नीनुत्सृज्य पुनराधातव्यमिति । प्रथमः कल्प इति ब्रूयात् । कुतः । धार्यमाणानामग्नीनां हानार्थत्वादुत्सर्गविधानस्य । नह्युद्वासनापेक्षायां स्वयमुद्वासितानां प्रसभमनुत्सर्गो दोषाय प्रत्युत गुणायैव वीरहत्यादोषश्रुतेः । तस्मात्सिद्धं पुनराधानमात्रमेव कार्यं न पुनरुत्सर्ग इति ॥ ८ ॥

**संवत्सरं पराध्यर्मुत्सृष्टाग्निर्भवति ॥ ९ ॥**

**वृत्तिः**—परार्ध्यशब्दः षडवरार्ध्यानित्यत्रावरार्ध्यशब्देन व्याख्यातः । संवत्सर एवोत्सर्गस्य परावधिः । अतोऽर्वागेव संवत्सरादाधातव्यमित्यर्थः । तेन संवत्सरातिक्रमेऽग्निहोत्राद्यतिक्रमप्रायश्चित्तानि भवन्ति । बौधायनमतात्तु सत्यपि निमित्ते यावत्पुनराधेयकालमासित्वा कालेऽग्नीनुत्सृज्य सद्य एवाऽऽधानं भवति । यथोत्सर्गेष्ट्यनन्तरमाह—तदानीमेवाद्भिरग्नीन्समुक्ष्य ब्रह्मौदनं श्रपयित्वोपवसतीति । कात्यायनश्चाऽऽह—त्रिरात्रावरमग्नीनुत्सृज्य सद्यो वेति । सत्याषाढस्त्वाह—यावद्दर्शपूर्णमासावविहितौ तावच्चिरमवसृष्टाग्निर्भवति संवत्सरं द्वादशाहं वेति ॥ ९ ॥

**रोहिणी पुनर्वसू अनुराधा इति नक्षत्राणि ॥ १० ॥**

**वृत्तिः**—नक्षत्रान्तरपरिसंख्यानार्थं वचनं नित्यत्वख्यापनार्थं चैषाम् । तेन पूर्वविप्रतिषेधेऽपि नक्षत्रमेवाऽऽद्रियते । १० ॥

**वर्षासु शरदि वाऽऽदधीत ॥ ११ ॥**

**वृत्तिः**—एतावेवर्तू सर्ववर्णानां भवतः । बौधायनस्त्वत्राऽऽह —येयमाषाढ्याः पौर्णमास्याः पुरस्तादमावास्या भवति सा सकृत्संवत्सरस्य पुनर्वसुभ्यां संपत्स्यते तस्यामादधीतेति ॥ ११ ॥

**कृताकृताः संभारा यजूंषि च भवन्ति ॥ १२ ॥**

**वृत्तिः**—आग्न्याधेयिकाः संभाराः पक्षे कृताः पक्षेऽकृताश्च ब्राह्मणे भवन्ति । तथाऽऽधानयजूंषि च । यर्थव्याधानादोनीत्यर्थः । तथा च ब्राह्मणम्—न संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुरिति । तेषां चोभयेषां सह शिष्टत्वात्सह प्रवृत्तिः सह वा निवृत्तिर्भवति ॥ १२ ॥

**अपि वा पञ्च पार्थिवान्संभारानाहरति । एवं वानस्पत्यान् ॥ १३ ॥**

**वृत्तिः**—पूर्वसूत्रे द्वौ कल्पावुक्तौ । सप्तकादिषु संभारकल्पेष्वनियमेनान्यतमः कल्पः स्यादित्येको न कश्चिदिति द्वितीयस्तृतीयस्त्वयं कल्पो नियमेन पञ्चकल्पः स्यान्नान्य इति ॥ १३ ॥

**आयतनेषु पुराणान्दर्भान्संस्तीर्य भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति ॥ १४ ॥**

**वृत्तिः**—अथारण्याहरणादि समानमा गार्हपत्याधानात् । तत्र संभारकाले पुराणानपि दर्भान्संभृत्य निर्वपणकाले संभाराणामुपरि तानपि स्तृणाति । तानेव त्वसंभारपक्षे । ततो गार्हपत्याधानकाले सर्वाग्न्याधेयिकमन्त्रान्ते चतसृभिरपि सर्पराज्ञीभिर्गार्हपत्यमादधाति । सर्पराज्ञीभिरेव त्वयजुःपक्षे । ता अपि यजमानोऽनुवर्तयते । येन येनाऽऽदधातीत्य-विशेषवचनात् ॥ १४ ॥

**मध्यंदिन इतरान् ॥ १५ ॥**

**वृत्तिः**—अह्नो नवधा कृतस्य पञ्चमो भागो मध्यंदिनः । तथा बृहस्पतेर्मध्यंदिन इत्यत्र विवेचनात् । तत्र सर्वान्मध्यंदिन इति कल्पान्तरकाराः ॥ १५ ॥

**उपोलवैर्दर्भैः परुष्कैः संवत्सरप्रवातैराहवनीयं ज्वलन्तमुद्धरति ॥ १६ ॥**

**वृत्तिः**—उपोलवा इत्यालवेभ्य उत्थिता वक्ष्यन्ते । परुष्काः परुष्मन्तः पर्ववन्तो वा । संवत्सरप्रवाताः संवत्सरमुपशुष्काः । ते प्रणयनीयेध्मस्य स्थाने भवन्ति ॥ १६ ॥

**यत्त्वा क्रुद्धः परोवपेति दक्षिणाग्निम् । यत्ते मन्युपरोप्तस्येतीतरान् ॥ १७ ॥**

**वृत्तिः**—आदधातीति शेषः ॥ १७ ॥

**मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते ॥ १८ ॥**

**वृत्तिः**—अग्नीनिति शेषः । तत्राऽऽहितमाहितमुपतिष्ठत इति भारद्वाजः ॥ १८ ॥

**सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति ॥ १९ ॥**

**वृत्तिः**--अनेनैवात्र पूर्वाहुतिः । न तूष्णीम् । नापि द्वादशगृहीतमग्निहोत्रस्य स्थाने भवति । मन्त्रवर्णा त्वग्निर्देवता । प्रातर्होमविकारत्वं च पूर्ववत् ॥ १९ ॥

**आग्नेयं पञ्चकपालं निर्वपत्यष्टाकपालं वा ॥ २० ॥**

**वृत्तिः**—गतः ॥ २० ॥

**यदि पञ्चकपालो गायत्र्यौ संयाज्ये । यद्यष्टाकपालः पङ्क्त्यौ ॥ २१ ॥**

**वृत्तिः**—यस्याजुषद्विश्वा हि त इति गायत्र्यौ । पङ्क्त्यौ स्वयमेव दर्शयिष्यति॥२१॥

**सर्वमाग्नेयं भवति ॥ २२ ॥**

**वृत्तिः**---यदस्यामिष्टौ हविर्देवतासंयुक्तं तत्सर्वमाग्नेयं भवति । विकारान्स्वयमेव तत्र कर्तव्यान्वक्ष्यति ॥ २२ ॥

**पञ्चदश सप्तदश वा सामिधेन्यः ॥ २३ ॥**

**वृत्तिः**---गतः ॥ २३ ॥

**सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्टकृतम् ॥ २४ ॥**

**वृत्तिः**—यजतिरत्र प्रकरणार्थः । उच्चैरुत्तमं संप्रेष्यतीति लिङ्गात्तेनोपांशु प्रचरतीति श्रुतेश्च । तेनाध्वर्युनिगदा अप्युपांशवो भवन्ति ॥ २४ ॥

अथ याजुर्वेदिकहौत्रार्थे याज्यानुवाक्यासु होतुर्विकारानाह—

**अथाग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ॥ २५ ॥**

**वृत्तिः**—अनेनाऽऽदितश्चतुर्षु प्रयाजेषु याज्यागतानामाग्नेयशब्दानां पुरस्तादावापिका विभक्त्यग्निशब्दाभिधाय पाठः प्रदर्श्यते । तद्यथा समिधो अग्नाग्न आज्यस्य वियन्तु । तनूनपादग्नावग्न आज्यस्य वेत्वित्यादि । अग्नाविति संबुद्धे रूपं द्रष्टव्यम् ॥ २५ ॥

**नोत्तमे ॥ २६ ॥**

**वृत्तिः**—प्रयाजानूयाजेष्वेव विभक्तीः कुर्यादित्यविशेषश्रुतेः । पूर्वसूत्रेण प्रयाजचतुष्टये विभक्तिचतुष्टयनियमाच्च । पञ्चमेऽप्यनियमेन न्यायात्काचिद्विभक्तिः कार्येति भ्रमो मा भूदित्यारम्भः ॥ २६ ॥

**विभक्तिमुक्त्वा प्रयाजेन वषट्करोति ॥ २७ ॥**

**वृत्तिः**—अथ वा विभक्तिमुक्त्वा प्रयाजयाज्यया वषट्करोति । याज्यायाः पुरस्ताद्वा

विभक्तिं दधातीत्यर्थः । तद्यथा अग्ना समिधोऽग्न आज्यस्याग्नौ तनूनपादग्न आज्यस्य वेत्वित्यादि ॥ २७ ॥

**यं कामयेतर्ध्नुयादिति तस्योपरिष्टाद्ये यजामहाद्विभक्तिं दध्यात्पुरा वा वषट्कारात् ॥ २८ ॥**

**वृत्तिः**—काम्याविमावपरौ कल्पौ । ये यजामहादुपरिष्टाद्व्याहृतिभ्यश्च पुरस्ताद्विभक्तिरित्येकः कल्पः । तद्यथा—ये यजामहेऽग्ना भूर्भुवः स्वः समिधोऽग्न आज्यस्य । ये यजामहेऽग्ने भूर्भुवः स्वस्तनूनपादित्यादि । पुरा वषट्कारादिति द्वितीयः । तत्र प्लुतिश्च विभक्तावेव भवति । तद्यथा—वियन्त्वग्ना ३ वौषडित्यादि ॥ २८ ॥

**अग्निं स्तोमेन बोधयेत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति । अग्न आयूंषि पवस इति सौम्यस्य ॥ २९ ॥**

**वृत्तिः**—अत्र देवतानिगमेषु सोमस्य स्थानेऽग्निं पवमानं निगमयेयुः । यथाऽग्नये पवमानायानुब्रूहीत्यादि ॥ २९ ॥

**अग्निर्मूर्धेति वा सौम्यस्य कुर्यात् ॥ ३० ॥**

**वृत्तिः**—अस्मिंस्तु पक्षेऽग्निमेव केवलं निगदेयुरिति शेषः ॥ ३० ॥

**प्रजाकामपशुकामस्य प्रजाव्यृद्धपशुव्यृद्धस्य वा ॥ ३१ ॥**

**वृत्तिः**—प्रजया व्यृद्धो नष्टप्रजः । तथा पशुव्यृद्धः । एषामप्यग्निर्मूर्धेति सौम्यस्य कुर्यात् ॥ ३१ ॥

**अग्निव्यक्ताः पत्नीसंयाजानामृचो भवन्ति ॥ ३२ ॥**

**वृत्तिः**—याः पत्नीसंयाजानामृचो याज्यानुवाक्यास्ता अग्निव्यक्ता निषिक्ताग्निशब्दा भवन्ति । तास्वृक्षु देवताशब्देभ्यः परं तत्समानया विभक्त्याऽग्निशब्दः प्रक्षेप्तव्य इत्यर्थः । यथा विश्वतः सोमाग्ने वृष्ण्यमित्यादिनोक्तः पत्नीसंयाजो विक्रियते । तस्य स्वयमनाग्नेयत्वात् । सर्वाग्नेयार्थत्वाच्च विकारस्य । तथा च ब्राह्मणम्—अग्निव्यक्ताः पत्नीसंयाजानामृचः स्युः । तेनाऽऽग्नेयं सर्वं भवतीति । ऋच इति वचनाच्च नाध्वर्युनिगमेषु विकारः । आज्यभागानन्तरं व्युत्क्रमेण पत्नीसंयाजवचनमुत्तरसूत्रे सहोभयेषां विकल्पविधानार्थं ब्राह्मणानुसारार्थं च ॥ ३२ ॥

**अपि वा यथापूर्वमाज्यभागावेवं पत्नीसंयाजाः ॥ ३३ ॥**

**वृत्तिः**—यथापूर्वं यथाप्रकृतीत्यर्थः ॥ ३३ ॥

**अग्ने तमद्याश्वमित्यक्षरपङ्क्त्यो याज्यानुवाक्या भवन्ति । द्वे आग्नेयस्य द्वे स्विष्टकृतः ॥ ३४ ॥**

**वृत्तिः**—आदितो द्वे प्रधानस्य । परतो द्वे स्विष्टकृतः । अष्टकपालपक्षे यदि पञ्चकपालो गायत्र्यौ संयाज्ये यद्यष्टाकपालः पङ्क्त्याविति नियमात् ॥ ३४ ॥

**पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुतीर्जुहोति ॥ ३५ ॥**

**वृत्तिः**—अभितः पुरोडाशं पुरोडाशेज्यायाः पुरस्तादेकामुपरिष्टादन्यामित्यर्थः । पुरोडाशस्योपर्यधश्चेति केचित्तदयुक्तम् । उत्तरविकल्पानौचित्यात् । अभितो वपां जुहोतीति श्रुतेः । सूत्रकृतैवान्यथाव्याख्यानाच्च ॥ ३५ ॥

**पुनरूर्जेति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम् ॥ ३६ ॥**

**वृत्तिः**—गतौ ॥ ३६ ॥

**एतद्वा विपरीतम् ॥ ३७ ॥**

**वृत्तिः**—उपरिष्टात्प्रयाजानां पुरस्तादनूयाजानामित्यर्थः ॥ ३७ ॥

**उभयीर्दक्षिणा ददाति ॥ ३८ ॥**

**आग्न्याधेयिकीः पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येताः शतमानं च हिरण्यम् ॥ ३९ ॥**

**वृत्तिः**—पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येता इत्यन्वयः । उक्ता ह्येता ब्राह्मणे पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वानिति । तत्र पुनर्निष्कृतः पुनः संस्कारेण नवीकृतः । पुनरुत्स्यूतमुत दाढर्यार्थं सूत्रैरुत्स्यूतम् । पुनरुत्सृष्टोऽप्रसन्नो गौः । तथा बौधायनः-पुनर्निष्कृतो रथो दक्षिणेति पुनः संस्कृत एव भवति । पुनरुत्स्यूतं वास इति पुनः संस्कृतमेवैतद्भवति । पुनरुत्सृष्टोऽनड्वानिति । अवशीर्णगव एवैष उक्तो भवतीति । शतमानं हिरण्यमित्युक्तम् । तत्र किं रजतस्यापि हिरण्यस्य दानं लभ्यते नेत्याह ॥ ३९ ॥

**तस्माद्रजतं हिरण्यमित्युक्तम् ॥ ४० ॥**

**वृत्तिः**—ब्राह्मणे तस्माद्रजतं हिरण्यमित्यारभ्य तस्माद्बर्हिषि न देयमित्युक्तम् । ततः स्वर्णमेव देयमिति भावः ॥ ४० ॥

**पुनरभिहितो रथः पुनरुत्स्यूतं स्यामूलं पुनः कामस्याऽऽप्त्या इत्येकेषाम् । ॥ ४१ ॥**

**वृत्तिः**—पुनरभिहितः पुनः संस्कृतः । स्यामूलं वासोविशेषः । यथा स्यामूलेन

क्षौमेण वाऽश्वं संज्ञपयन्तीत्यादौ । विकल्पते चैतद्‌द्वयं पुनर्निष्कृतादिभिः । पुनः काम्यत इति पुनःकामः पुनराधेयफलम् ॥ ४१ ॥

**यदीतराणि न विद्येरन्नप्यनड्वाहमेव दद्यात् । अनडुहि ह वा एते च कामा अतश्च भूयांस इति पैङ्गायनिब्राह्मणं भवति ॥ ४२ ॥**

**वृत्तिः**—अनड्वानिति पुनरुत्सृष्ट एव गृह्यते । यदीतराणि न विद्येरन्निती तरशब्द-सामर्थ्यात् । स चाऽऽग्न्याधेयिकीरपि निवर्तयति । अनड्वाहमेवेत्यवधारणात् ॥ ४२ ॥

**देवे अग्नौ देवो अग्निरिति द्वयोरनूयाजयोर्विभक्ती दधाति ॥ ४३ ॥**

**वृत्तिः**—तद्यथा देवे अग्नौ बर्हिर्देवो अग्निर्नराशंस इति ॥ ४३ ॥

**नोत्तमे ॥ ४४ ॥**

**वृत्तिः**—व्याख्यात उत्तमप्रयाजेन ॥ ४४ ॥

**उच्चैरुत्तमं संप्रेष्यति ॥ ४५ ॥**

**वृत्तिः**—संप्रेष्यतीति प्रदर्शनार्थम् । याज्याऽप्युच्चैरेव । यथोक्तमुपांशु यजत्योत्तमादनू-याजादिति ॥ ४५ ॥

**सिद्धमिष्टिः संतिष्ठते ॥ ४६ ॥**

**वृत्तिः**—गतः ॥ ४६ ॥

**आग्निवारुणमेकादशकपालमनुनिर्वपति सर्वेषामनुनिर्वाप्याणां स्थाने द्विदे-वत्यानां वा ॥ ४७ ॥**

**वृत्तिः**—द्वितीयस्मिन्पक्षे पवमानहविषामन्त आग्निवारुणः । तदन्त आदित्यस्तदन्ते वैष्णव इति क्रमः ॥ ४७ ॥

**सिद्धमिष्टिः संतिष्ठते । संतिष्ठते पुनराधेयम् ॥ ४८ ॥**

**वृत्तिः**—गतो यथाऽग्निहोत्रादीनि प्राप्ते काले भवन्ति । नन्वारम्भार्था दशहोत्रादय इति प्रागेव दर्शितम् ॥ ४८ ॥

**यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लेकः सल्लेकः सुलेक इति ॥ ४९ ॥**

**वृत्तिः**—अथ तृतीयाधाने कश्चिद्विशेष उच्यते । तत्र यः पराचीनं पुनराधेयादग्नि-मादधीत स एतान्होमाञ्जुहुयादिति । श्रुत्यनुरोधात् । यः प्रथममग्नीनाधाय ततो द्वितीयं पुनराधेयं कृत्वा पुनस्तृतीयमाधत्ते । विशेषवचनात् । तस्यैते होमा भवन्ति । यथा-कथंचिद्वा तृतीयाधाने विशेषावचनात् । तथाऽन्यत्र मीमांसा । किं तृतीये पुनराधान

एते होमा आहोस्विदग्न्याधेय उतोभयस्मिन्निति। प्रकरणात्पुनराधेय इति केचित्। अग्नि-मादधीतेति श्रुतेरग्न्याधेय इत्यन्ये। उभयस्मिन्नित्येव सूत्रकाराभिप्रायः। यस्तृतीयमादधी-तेत्यविशेषवचनादेव। तथा चोभयमाह बौधायनः—अथेदं तृतीयाधेयं कतरन्नु खल्विदमुप-निश्रयत्यग्न्याधेयं पुनराधेयं वेत्यग्न्याधेयमेवेति ब्रूयादिति। तथा पुनराधेयविधानानन्त-रमाह तृतीयमादधान आग्नेयस्य पञ्चकपालस्य पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति लेकः सलेकः सुलेक इति। एतेनैवाग्न्याधेयकल्पेनैषां होमकालो व्याख्यातः॥ ४९॥

अथ प्रायश्चित्तं पुनराधानमपि प्रसङ्गादत्रैवोपदिशति—

**यदरण्योः समारूढो नश्येत्॥ ५०॥**

**वृत्तिः**—पुनराधेयं प्रायश्चित्तिरिति वक्ष्यमाणेन संबन्धः। तत्र समारूढेष्वग्निष्वरणि-नाशोऽग्निनाशः। यथोक्तमाश्वलायनेन—समारूढेषु चारणीनाश इति। स चारणिनाशो द्विविधः। शक्तिनाशः स्वरूपनाशश्च। तत्र शक्तिनाशो मन्थनासामर्थ्यम्। स्वरूपना-शस्त्वपहरणदाहदूषणादिनाऽनेकविधः। दूषणं मूत्रपुरीषाद्युपहतिः। यामधिकृत्य स्मर्यत उपहतानामुत्सर्ग इति तदेवमरण्योरुभयविधनाशे पुनराधेयम्। तत्र शक्तिनाशेऽनुग्रह-माह भारद्वाजस्तत्र च लौकिकाग्नावुपावरोहणं स्यादिति। स्वरूपनाशेऽप्याह बौधा-यनः—अपहृताग्नेर्नष्टारणीकस्य च ब्रह्मौदनेनैव प्रतिपद्यते सिद्धमग्न्याधेयं कामनष्टेषु वाऽपहृतेषु वाऽग्निषु नाऽऽद्रियेताग्न्याधेयम्। आधानप्रभृति यजमान एवाग्नयो भवन्ति। तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीयः काममुपावरोह्य जुहुया-दिति। अथोत्तरारणेरुभयविधनाशेऽप्याह भारद्वाजः—अथ यद्युत्तरारणिः समारूढा जीर्येन्नश्ये-द्वाऽधरारण्या आहृत्येति विज्ञायत इति। आहृत्येत्यधरारणी छित्त्वैकः खण्ड उत्तरारणीत्वे-नाऽऽहर्तव्य इत्यर्थः। एवं चाधरारणिस्वरूपनाशे पुनराधेयमेवेत्युक्तं भवति। आहवनीया-देस्तु समारूढस्यारणीनाशे पुनर्योनित उत्पत्तिमिच्छन्ति। स्वयोनौ विद्यमानेऽत्यन्तोत्सादायो-गात्। अथासमारूढेऽग्नावरणीनाशे को विधिः। किमत्र प्रष्टव्यम्। यदा ध्रियमाणोऽग्नि-रनुगतोऽरणी अपेक्षिष्यते तदा गत्यभावादाधानं भविष्यति। तथा छन्दोगपरिशिष्टे कात्या-यनः—अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः पालयेदुपशान्तेऽग्नौ पुनराधानमिष्यत इति। तथाऽप्यनुग्रहमाह भारद्वाजः—यद्यरणी समारूढा जीर्येद्भिद्येद्दुष्येद्वा शकलीकृत्य गार्हपत्यं प्रदीप्य प्रक्षिप्य प्रज्वाल्याऽऽदत्ते दक्षिणेनोत्तरारणिं सव्येनाधरारणिमुपर्यग्नौ धार-यन्नपति उत्तिष्ठाग्ने प्रविश योनिमेतां देवयज्यायै त्वा वोढवे जातवेदः। अरण्योररणी अनु-संक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेति। अथैनं स्वेन मन्त्रेण स्वयोनौ समारोप्य मथित्वाऽऽग्नी विहृत्य जुहुयात्। स्वेन मन्त्रेण समारोपणमन्त्रेण स्वयोनावरण्योर्विहृत्य जुहुयात्। यथाकालं विहृत्य तत्तद्धोमादिकार्यं कुर्यादित्यर्थः॥ ५०॥

**यस्य वोभावनुगतावभि निम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः ॥ ५१ ॥**

**वृत्तिः**—वाकारः समुच्चयार्थः। उभावित्यग्न्योः परामर्शः। अनुगतशब्दसमभिव्याहारात्। तौ च गार्हपत्याहवनीयौ प्राधान्यात्। निम्रोचनमस्तमयः। तदयमर्थः—अग्निहोत्रार्थं विहृतमजस्रं वाऽऽहवनीयं गार्हपत्यं चोभावनुगतावभि सूर्यो निम्रोचेदुदियाद्वा तस्य पुनराधेयं प्रायश्चित्तिरिति। केचित्पुनरत्राविहृत आवहनीये केवलगार्हपत्यानुगमनेऽप्युभयानुगतिमिच्छन्ति पश्चाद्धि स तर्हि गत इति लिङ्गेनाविहृतावस्थायामाहवनीयस्य गार्हपत्यानुप्रवेशानुगमनात्। तत्तु न मृष्यामहे। कस्मात्। उभावित्यनेन तावद्विरोधात्। न ह्येकोऽग्निरुभाविति शक्यते व्यपदेष्टुम्। न च यथोक्ताल्लिङ्गादाहवनीयस्य गार्हपत्यानुप्रवेशसिद्धिस्तस्यान्यपरत्वात्। अस्तु वाऽनुप्रवेशः। तथाऽप्यनुप्रविष्टोऽयमानुमानिकोऽग्निरश्वत्थस्थाग्निवन्नाग्निलिङ्गैद्व्यवहारभाजनं भवितुमर्हति। प्रत्यक्षाग्निगोचरत्वात्सर्वाग्निव्यवहाराणां यथाऽन्तराग्नी तिष्ठन्यदि गार्हपत्याहवनीयावित्यादि। किं चानुगमनव्यवहारोऽपि प्रत्यक्षाग्निनाशगोचर एव दृष्टः। यथा यदि पूर्वोऽनुगतः। यदि गार्हपत्य आहवनीयो वाऽनुगच्छेदित्यादि। तथा परोक्षव्यतिरेकश्च दृष्टः। यदरण्योः समारूढो नश्येदिति। किं चैवं परोक्षस्याप्यग्नेरनुगमनमिच्छतः सर्वत्राविहृतावस्थायां गार्हपत्यानुगतावाहवनीयानुगतिप्रायश्चित्तमपि प्रसज्यते। तथोभयसंसर्गात्संसर्गप्रायश्चित्ताद्यपि प्रसज्जयितव्यम्। तस्मात्सिद्धं न केवलगार्हपत्यानुगमनम्। उभयानुगमनमिति। न चोभावनुगतावित्युभयाभावमात्रलक्षणेति युक्तम्। मुख्यार्थसंभवे लक्षणाश्रयणस्यायुक्तत्वात्। तस्माद्ध्रियमाणोभयविनाशविषयोऽयं विधिरित्येव संप्रतम्। एवं चाविहृतावस्थायां केवलगार्हपत्यानुगमने सतोरप्युदयास्तमययोरनुगतिप्रायश्चित्तमनुद्धरणप्रायश्चित्तं च कृत्वाऽग्निहोत्रहोमः कार्य इति सिद्धं भवति ॥ ५१ ॥

**पुनराधेयमित्याश्मरथ्योऽग्न्याधेयमित्यालेखन आलेखनः ॥ ५२ ॥**

**वृत्तिः**—आलेखनमतप्रदर्शनेनैव विकल्पसिद्धावाश्मरथ्यमतप्रदर्शनेन स्वमतसंवादः स्थाप्यते—पुनराधेयं प्रत्यादरविशेषार्थमिति वेदितव्यम् ॥ ५२ ॥

पुनराधेयसूत्राणि रुद्रदत्तकृतवृत्तिसहितानि प्रादर्शयम्। प्रयोगस्तु आधानप्रयोगान्न विशेषतो भिद्यते। यत्रास्ति भेदः स सूत्रत एवावगन्तुं सुशकः। अतस्तदर्थं न पृथग्यत्नोऽनुष्ठीयते। आधानपद्धतिस्तु सर्वं सामान्यप्रयोगं दर्शयिष्यति। विशेषप्रयोगभेदं तु दीपिकाकृत्प्रदर्शयिष्यति। केवलं हौत्रसूत्रमात्रमत्र भाष्यसहितं प्रदर्शयिष्यामः। अन्यद्धौत्रं तु प्रकृत्या समानमेवेति तत एवावगन्तव्यम्।

**आधानाद्यद्यामयावी यदि वाऽर्था व्यथेरन्पुनराधेय इष्टिः ॥ १ ॥**

दे० भा०—आधानादाधाननिमित्ताद्यद्यामयावी यजमानो भवति आमया रोगा यदा रोगी भवति यदि वाऽर्था भार्याः पुत्राः पशवो हिरण्यादयो व्यथेरन्नश्येरन् प्रमीयेरन्नेतेषु निमित्तेषु पुनराधानं कर्तव्यं भवति । तस्मिन्पुनराधाने येष्टिर्भवति सा वक्ष्यते । एतस्मिन्संवत्सरे यो नर्ध्नुयादित्युक्तमध्वर्यूणाम् ॥ १ ॥

**वृत्तिः**—आमयावि उदरव्याधिमान् । अर्थव्यथाऽर्थहानिः । अर्थाः पुत्रपश्वादयः । आधानानन्तरं तस्मिन्नेव संवत्सरे यद्येतानि निमित्तानि स्युस्तदा पुनराधेयं कर्तव्यमित्ययमर्थोऽस्मिन्सूत्रेऽर्थाल्लभ्यते । तस्मिन्पुनराधेये वक्ष्यमाणलक्षणेष्टिः कार्येत्यर्थः ॥ १ ॥

**तस्यां प्रयाजानुयाजान्विभक्तिभिर्यजेत् ॥ २ ॥**

**दे० भा**—तस्यां तस्यामिष्ट्यां प्रयाजानुयाजान्विभक्तिभिर्युक्तान्यजेत् । अष्टौ विभक्तयो व्याकरणे सिद्धाः । तस्यामिति पुनरुच्यते विकारार्थम् । प्रथमकर्मचोदनार्थो भवति सप्तम्यधिकारः । कियत्यो विभक्तयः कथं वा विभक्तिभिर्यज्यत इति तदेतत्सर्वमाम्नायेनैव दर्शयति । आम्नायादेव सिद्धे सूत्रारम्भोऽनर्थकः प्रत्याम्नायो भवति । विभक्त्यर्थेऽयं पाठो न प्रत्ययार्थः । इत्यसति प्रत्याम्नाये पञ्चमः प्रयाजो लुप्यते तृतीयश्चानूयाजः ॥ २ ॥

**वृत्तिः**—तस्यामितिवचनं तस्यामेवेष्टौ नान्यस्यां वक्ष्यमाणो विधिः स्यादित्येवमर्थम् । तेन ज्ञायते नैकेष्टिकं पुनराधेयमिति । विभक्तिभिः सहितान्प्रयाजानुयाजान्कुर्यात् । का विभक्तिः क्व वा प्रदेशे प्रयोक्तव्या किं सर्वेषूत कतिपयेष्वित्येतेषां संशयानां निवृत्तये चतुरः प्रयाजान्पठित्वा तानेव प्रयाजांश्चतुरो विभक्तिभिः सहितान् पठति । द्वावनुयाजौ च पठति अपठितयोरविकृतत्वसिद्ध्यर्थम् ॥ २ ॥

**समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु ।**
**तनूनपादग्निमग्न आज्यस्य वेतु ।**
**इळो अग्निनाऽग्न आज्यस्य व्यन्तु ।**
**बर्हिरग्निरग्न आज्यस्य वेत्विति ॥ ३ ॥**

**दे० भा०**—समिदित्येवमादयश्चत्वारः प्रयाजा विभक्तिभिर्युक्ता आम्नाताः । आदेशयतीत्यादिनाऽन्तरा विभक्तिर्भवति । प्रथमेऽष्टमी द्वितीये द्वितीया नाराशंसोऽपि तथैव प्रयोक्तव्यः । प्रयाजानुयाजान्विभक्तिभिर्यजेदितिवचनात् । तृतीये तृतीया चतुर्थे प्रथमेत्येताश्चतस्रो विभक्तयः प्रयाजेषु पञ्चमः प्राकृत एव ॥ ३ ॥

वृत्तिः—नराशंसिनां नराशंसोऽग्निमग्न इति भवति । विभक्तिविधानस्याविशेषात् । पाठस्य चोत्तमप्रयाजानुयाजव्यावृत्त्यर्थत्वात् ॥ ३ ॥

**समिधाऽग्निं दुवस्यते बृहद्भ्रवाणि त इत्याग्नेयावाज्यभागौ ॥ ४ ॥**

दे० भा०—आज्यभागौ भवतः । आज्यभागाविति वचनात्सौम्यो न विद्यते । आवाहनादिषु निगमेष्वेते अनुवाक्ये भवतः । अन्यथा प्राकृते एव ॥ ४ ॥

वृत्तिः—सोमस्थानेऽप्यग्निरेव । तयोरेते अनुवाक्ये ॥ ४ ॥

**बुद्धिमदिन्दुमन्तावित्याचक्षते ॥ ५ ॥**

दे० भा०—प्रकृत एव देवता निगमस्याऽऽदिर्यो बुद्धिमानेक इन्दुमान्द्वितीयः । एवमिन्दुमन्तौ भवत इत्याचक्षते ब्रुवते ब्रह्मवादिनः ॥ ५ ॥

ना० वृ०—आज्यभागयोरेतौ गुणौ ॥ ५ ॥

**तथाऽनुवृत्तिः ॥ ६ ॥**

दे० भा०—आवाहनादिषु निगमेषु अग्निं बुद्धिमन्तमा३वह । अग्निमिन्दुमन्तमा३ वह । इति । वचनमन्तरेण निगमनं न प्राप्नोति यथा पुष्टिमन्तादिषु ॥ ६ ॥

वृत्तिः—निगमेषु सगुणयोरेवानुवृत्तिरित्यर्थः ॥ ६ ॥

**इज्या च ॥ ७ ॥**

दे० भा०—याज्या च तथैव तेनैव गुणेन युक्ता प्रयोक्तव्या । तथाऽनुवृत्तिरित्येतेन वचनेनाऽऽदेशः प्राप्तः । याज्यायामपि प्राप्त्यर्थोऽयमारम्भः । तस्माद्ये यजामहेऽग्निं बुद्धिमन्तं जुषाणोऽग्निर्बुद्धिमानाज्यस्य वेतु । ये ३ यजामहेऽग्निमिन्दुमन्तं जुषाणोऽग्निरिन्दुमानाज्यस्य हविषो वेतु । इत्येवमर्थं याज्ये भवतः ॥ ७ ॥

ना० वृ०—इज्याशब्देन याज्यायां देवतादेश उच्यते । स च सगुणयोरेव कर्तव्यः । केचिदिहानुवृत्तिशब्देनैव देवतादेशस्यापि ग्रहणमभ्युपगम्य "इज्या च" इत्यनेन याज्यामध्यगतस्याग्निशब्दस्य सगुणोच्चारणमिच्छन्ति ॥ ७ ॥

**नित्यं पूर्वमनुब्राह्मणिनः ॥ ८ ॥**

दे० भा०—नित्यं पूर्वम्-नित्यं प्राकृतमेव पूर्वमाज्यभागमनुब्राह्मणिन आचार्या मन्यते—अग्निर्वृत्राणीति ॥ ८ ॥

**ना० वृ०**—नित्यः केवलोऽग्निरनुवाक्या च । 'अग्निर्वृत्राणि' इत्यनुब्राह्मणिन आचार्यः ॥ ८ ॥

**अग्न आयूंषि पवस इत्युत्तरम् ॥ ९ ॥**

**दे० भा०**—अग्न आयूंषि पवस इति चोत्तरमाज्यभागम् । एते अनुवाक्ये। अन्यस्मिन्पक्षे 'अग्नयेऽनुब्रू ३ हि, अग्नये पवमानायानुब्रू ३ हि' इति प्रैषौ भवतः। यथाऽध्वर्युर्येन गुणेन प्रैषमाह तथाऽनुवृत्तिरिज्या च प्रयोक्तव्या ॥ ९ ॥

**ना० वृ०**—उत्तरोऽपि केवलोऽग्निरियं चानुवाक्याऽनुब्राह्मणिनामे(नस्यै)वाभिप्रायेण ॥ ९ ॥

**नित्यस्तूत्तरे हविःशब्दः ॥ १० ॥**

**दे० भा०**—आज्यभाग आग्नेयेऽपि सति नित्यस्तु अच्युतो हविःशब्दः । तुशब्दः प्राप्तव्यावृत्त्यर्थः । १० ॥

**वृत्तिः**—उत्तरे याज्यामन्त्रे हविःशब्दस्य सोमधर्मत्वात्तन्निवृत्तौ तस्य निवृत्तिप्रसङ्गे तत्स्थानापन्नत्वादग्नेरपि तद्धर्मसंबन्ध इति मत्वा नित्यस्त्वित्युक्तवान् ॥ १० ॥

**आग्नेयं हविरधा ह्यग्ने क्रतोर्भद्रस्याऽऽभिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैरग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेत्विति ॥ ११ ॥**

**दे० भा०**—आग्नेयं हविःशब्दो न प्राप्नोति तस्मादिदमुच्यत आग्नेयं हविः । अस्यामिष्टावाग्नेयं हविर्भवति । अग्निरिति वक्तव्ये हविर्ग्रहणाद्धविरेवाऽऽग्नेयं नाऽऽज्यभागावेिति प्राकृतावेवाऽऽज्यभागावित्ययमेकः कल्पः । अधा ह्यग्ने, आभिष्टे, इत्येते याज्यानुवाक्ये आग्नेयस्य 'एभिर्नो अर्कैरग्ने तमद्य' इत्येते संयाज्ये भवतः । देवं बर्हिः प्रथमेऽनुयाजे षष्ठी विभक्तिर्भवति द्वितीये सप्तमी तृतीयः प्राकृत एव ॥ ११ ॥

**शेषं पौर्णमासेन ॥ १२ ॥**

**वृत्तिः**—गतार्थमिदम् ॥ १२ ॥

## अथाग्निहोत्रमीमांसा ।

अये विविधविद्याविलासोल्लासितसत्त्वभूमयो विद्वद्वरा महाशयाः प्रियमहोदया धर्मैकमूलस्य स्वतः प्रमाणभूतस्य वेदस्य पूर्वोत्तरभेदेन द्वौ भागौ तत्रोत्तरभागमुद्दिश्य प्रवृत्ता ब्रह्ममीमांसा पूर्वभागं चोद्दिश्य प्रवृत्ताऽध्वरमीमांसेत्यपरनामधेया पूर्वमीमांसा या खल्वत्यन्ताभ्यर्हितत्वादवश्यमुपादेयत्वात्सकलशास्त्रमूलत्वाद्वेदार्थज्ञानार्थमध्ययनीयत्वाच्च केवलमीमांसाशब्देनापि शस्यते । पूर्वं विद्वद्वरैः कृताधिकतरादराऽप्येषा मीमांसा संप्रति दैवकोपवशाद्भारतवर्षस्य भाग्यविपर्ययाच्च लुप्तकल्पेव वर्तते । अस्य च मीमांसाशास्त्रस्य मूलमैतरेयादिब्राह्मणग्रन्था मुनिप्रवरजैमिनिप्रणीतानि द्वादशाध्यायेषु संविभक्तानि सूत्राणि च ।

तेषां च सूत्राणां विद्वद्वरेण तत्रभवता भगवतोपवर्षेणाऽऽचार्येण वृत्तिर्व्यरचि । सा खलु यथावन्नोपलभ्यते । शबरस्वामिना च भाष्यं प्रणीतं वार्तिककृता कुमारिलभट्टाचार्येण वार्तिकं ( श्लोकवार्तिकं तन्त्रवार्तिकं टुप्टीकेत्यपरनामधेयं ) व्यधायि । तत्र भाष्यवार्तिकाभिप्रायं जानता तत्रभवता पार्थसारथिमिश्रेण दीपिकया प्रकाशितमेतच्छास्त्रम् । तदिदानीं मया यथा विद्यारण्यैर्वेदभाष्येण मीमांसा संकलिता तद्वदेव याज्ञिकानां प्रयोगशास्त्राद्दूरतरेयं मीमांसेति जानता प्रयोगशास्त्रीयग्रन्थेन संकलयितुं प्रयत्यत इति क्षम्यतां मे धाष्टर्यम् । ननु यथाम्नातानुष्ठानं विधातुं प्रवृत्तेषु सूत्रेषु जाग्रत्सु किमिदं याज्ञिकानां मीमांसायाः प्रयोजनम् ।

**ब्रूमः—न** हि मीमांसां विना यथाशास्त्रं कर्मणोऽनुष्ठानं संभवति देवगुरोरपि । अत एव वार्तिकयांबभूवुरत्र भट्टपादाः—

**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ।**
**मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ॥**

अत एव मीमांसाज्ञानं यथावदेव ज्ञेयम् । अन्यथाज्ञानेन ह्यनर्थो भविष्यत्यज्ञातेऽनुष्ठानमेव न भविष्यतीति मीमांसाज्ञानेऽवश्यं यत्नवद्भिर्भवितव्यमिति पुनः श्लोकयांबभूव—

**मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः ।**
**न्यायमार्गे महान्दोष इति यत्नोपचर्यता ॥**

ननु वेदार्थज्ञानार्थमेव मीमांसायाः प्रयोजनं चेत्तत्रैव प्रयासो भवतु । फलवन्ति हि वेदवाक्यानि धर्मप्रापणात् । अतस्तेषु सफलो व्याख्याप्रयासः सूत्रेष्वफलत्वात्किं प्रयासेनेत्यत्राऽऽहुर्भट्टपादाः—

**यथा धर्मावबोधस्य प्रमाणं वैदिकं वचः ।**
**तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ॥**

तर्हि ये वेदस्याप्रामाण्यं ब्रुवते तन्निराकरणाय मीमांसाया उपयोगो भवतु नाम । किं पुनरवशिष्टं मीमांसायाः कार्यमिति चेदाह—

**स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।**
**मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥**
**केचिदाहुरसावर्थः केचिन्नासावयं त्विति ।**
**तन्निर्णयार्थमप्येतत्परं शास्त्रं प्रणीयते ॥**

बहुधा बहुस्थले मीमांसाया आवश्यकत्वविषये वर्णितं भट्टपादैः किं बहुवोक्तेनाऽऽकर्णयत—

मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥
प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥

इत्यादि बहुशः प्रदर्शयितुं सुशकं परं तु ग्रन्थविस्तरभिया नेह तन्यते । एतावता धर्मं जिज्ञासमानानां ज्ञात्वाऽनुष्ठातॄणां च सर्ववाक्यगतन्यायनिरूपणात्मिका मीमांसा निकटतरेति ममायं प्रयत्नो यत्प्रयोगशास्त्रमीमांसयोः संकलीकरणम् । तत्र प्रथमतोऽग्निहोत्रमीमांसामारभामहे । ततः प्रावासिकीं पिण्डपितृयज्ञादिसंबन्धिनीम् ।

अग्निहोत्रं नाम यावज्जीवमनुष्ठीयमानो नित्यः कर्मविशेषः ।

तदिदमनुतिष्ठासद्भिरवश्यं प्रथमतोऽग्नय आधातव्याः । तदिदमग्न्याधानं विवाहाद्दशमेऽहनि जायामवाप्याग्नीनादधीतेति कल्पवाक्यान्निश्चिनुमः । अग्न्याधानानन्तरमवश्यं "यावज्जीवमग्निहोत्रं जुहोति" इति बह्वृचब्राह्मणाम्नानादग्निहोत्रानुष्ठानं समापतितं नापह्नोतुं शक्यं विविधप्रलापकर्तृभिरित्यत्रोदधेऽपि मीमांसाचार्यैः । तदेवं कर्मभेदलक्षणे भगवाञ्जैमिनिराचार्यः—"यावज्जीवमग्निहोत्रं जुहोति" इत्यत्र "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति विहितकाम्यप्रयोगस्यैकस्य यावज्जीवकालमभ्यासो विधीयत उत जीवने निमित्तेऽग्निहोत्रस्य बहूनां प्रयोगाणां स्वर्गकामविहितादन्येषां विधिरिति संशये पूर्वपक्षयांबभूव—

**" यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् "** ( पू० मी० २ । ४ । १ )

**वृत्तिः**—कर्मशब्दः प्रयोगवाची । स्वर्गकामवाक्यविहितोऽयं काम्यः प्रयोगस्तस्य धर्मः शेषभूतः कालो यावज्जीविको यावज्जीववाक्यगम्यो भवति । काम्यप्रयोगाङ्गतया यावज्जीवकालो विधीयते न तु जीवने निमित्ते प्रयोगान्तरमिति यावत् । कुतः—प्रकरणात् । एवं हि प्रकरणमनुगृहीतं भवति । यद्यपि प्रकृतकर्मण एव जीवने निमित्ते विधानात्पक्षान्तरेऽपि न प्रकरणबाधः । तथाऽपि प्रकरणमत्र नाधिकाररूपं विवक्षितं किंत्वित्थंभावाकाङ्क्षालक्षणं विवक्षितम् । तच्च कर्म धर्ममपेक्षमाणं जीवने निमित्ते पुरुषार्थतया प्रयोगान्तरविधौ बाधितं स्यात् । ननु काम्यप्रयोगस्यैकस्य यावज्जीवकाले कर्तुमशक्यत्वात्प्रयोगबहुत्वमापतितमित्यत आह—अभ्यास इति । यावज्जीवकालविधौ हि तत्सामर्थ्यादेकस्यैव काम्यप्रयोगस्याभ्यासः पर्यवस्यति । यथा—'सोमेन यजेत ' इत्युत्पन्नस्यैव यागस्यैन्द्रवाय-

वादिवाक्येषु ग्रहणसंस्कारविधिपरेषु द्रव्यदेवतासंबन्धभेदादभ्यासस्तद्वत् । तस्माद्यावज्जीव-कालकोऽभ्यासरूप एक एव काम्यप्रयोग इति फलतीति पूर्वः पक्षः ।

सिद्धान्तयति—

"कर्तुर्वा श्रुतिसंयोगात्" ( पू० मी० २ । ४ । २ )

**वृत्तिः**—वाशब्द एवार्थे । धर्म इत्यनुवर्तते । एकस्यैव काम्यप्रयोगस्य यावज्जीव-कालमभ्यासो नात्र विधीयते किं तु जीवने निमित्ते नियमेन भिन्नः प्रयोगः पुरुषधर्म-तया विधीयते । कुतः—श्रुतिसंयोगात् । एवं सत्येव यावज्जीवपदस्य यजेश्च मुख्यवृत्तिक-त्वसंभवात् । कर्मधर्मत्वे हि "**यावति विन्दजीवोः**" ( पा० सू० ३ । ४ । ३ ) इति सूत्रविहितणमुल्प्रत्ययान्तस्य "**अव्ययकृतो भावे भवन्ति**" इति जीवनक्रिया-वाचिनः काले लक्षणा स्यात् । एकस्या यागक्रियाया यावज्जीवकालसंबन्धानुपपत्त्या यजि-नाऽप्यभ्यासो लक्षणीयः स्यात । न च यथा '**पौर्णमास्यां पौर्णमास्या यजेत**' इति विहितकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धिस्तथा यावज्जीवकालैकदेशे सकृद-नुष्ठानेनापि शास्त्रार्थसिद्धिसंभवान्नाभ्यासलक्षणेति वाच्यम् । अपौर्णमासीव्यावृत्त्यर्था चोद-नेति युक्ता तत्र सकृदनुष्ठानेन शास्त्रार्थसिद्धिः । इह तु चोदनाऽजीवनकालव्यावृत्त्यर्था न भवति तदा कर्मणोऽनुष्ठानस्याप्रसक्तेः । किं तु समस्तजीवनकालग्रहणार्थैव चोदनेत्य-भ्यासलक्षणा दुर्वारा । तत्र "यावति विन्दजीवोः" इति णमुल्विधायकं सूत्रम् । तत्र "**समानकर्तृकयोः पूर्वकाले**" ( पा० सू० ३ । ४ । २१ ) इत्यनुवर्तते 'णमुल्' इति च । यावत्युपपदे समानकर्तृकयोः क्रिययोर्मध्ये पूर्वकालिकक्रियावृत्तेर्वि-न्दतेर्जीवतेश्च णमुलस्यादित्यर्थः । जीवतेश्च प्राणधारणमर्थः । प्राण उच्छ्वासो नासाबहि-र्निर्गतो वायुविशेषः । तस्य धारणं नासिकयाऽन्तराकर्षणम् । "**अव्ययकृतो भावे**" इति वचनाण्णमुलन्तस्यापि जीवनक्रियाऽर्थः । पौर्वापर्यं समानकर्तृकत्वं च द्योत्यम् । यावच्छब्दो जीवनं सामस्त्येन विशिनष्टि । तच्च जीवनं समानकर्तृकयोरिति क्रियान्तरसं-बन्धे विहितेन णमुल्प्रत्ययेन होमाद्यन्वयितया प्रतीयते । स च संबन्धो यदि जीवनस्य होमादिक्रियायाश्चाङ्गाङ्गिभावादिः स्यात्तर्हि सर्वेष्वपि जीवनेष्ववश्यं होतव्यमित्यर्थस्यासिद्धे-र्यावच्छब्दार्थस्य प्राप्त्यभावादनुवादो नावकल्पेत । नापि विधातुं शक्यते जीवनानामयुग-पत्कालकत्वेन तत्सामस्त्यस्य कर्मणि विधानासंभवात् । ततश्च यथा भावलक्षणे विहिता सप्तमी भावं प्रति लक्षणत्वं निमित्तत्वे सति वदते नान्यथेत्यर्थान्निमित्तत्वेऽवतिष्ठते तथा यावच्छब्दबलादेव संबन्धसामान्यवाची णमुल्प्रत्ययो निमित्तनैमित्तिकभावेऽवतिष्ठत इति जीवनस्य तावन्निमित्तत्वम् । एवं च जीवने निमित्तेऽग्निहोत्रं प्रयोक्तव्यमित्यर्थः सिद्धः । नैमित्तिकश्चायं प्रयोगः "**धर्मेण पापमपनुदति**" इतिश्रुतपापक्षयार्थः ।

**अकुर्वन्विहितं कर्म निन्दितं च समाचरन्।**
**प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥**
**विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।**
**अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥**

इतिस्मृतिसिद्धस्याकरणप्रयुक्तप्रत्यवायस्य परिहारस्त्वानुषङ्गिकः। नरकेषु पतत्यनेनेति पतनं पापम्। ऋच्छति प्राप्नोति। अत्र विहिताकरणजन्यप्रत्यवायप्रागभावपरिपालनं नित्यकर्मणां फलमिति केचित्। तन्न। प्रत्यवायो हि न कर्ममात्रातिक्रमात्किंतु विहितकर्मातिक्रमात्। अकुर्वन्विहितं कर्मेति वचनात्। ततश्च सिद्धे विधौ विहितकर्मातिक्रमात्प्रत्यवायावगमोऽवगतस्य प्रत्यवायस्य परिहाराय च विधिरित्यन्योन्याश्रयः। अतः पापक्षय एव फलम्। तच्च पापमिह जन्मनि जन्मान्तरे च संचितम्।

**‘ धर्मेण पापमपनुदति। ’**
**‘ पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।**
**कषाये कर्मभिः पक्वे ’।**

इत्यादिश्रुतिस्मृतिभ्यः। न च निमित्तोद्देशेन पापक्षयरूपफलोद्देशेन च कथं कर्मविधिर्वाक्यभेदप्रसङ्गादिति वाच्यम्। न ह्येकमेव वाक्यं निमित्ते फले च कर्म विधत्ते। किंतु यावज्जीववाक्यं निमित्ते कर्म विधत्ते। अन्यच्च श्रुतार्थापत्तिकल्पितं वाक्यं फले विधत्त इत्यदोषः। न चैवमप्युद्देश्यद्वय एकस्य विधिर्विरुध्यत इति वाच्यम्। न हि द्वयोरेकरूपमुद्देश्यत्वमस्ति। निमित्तस्य हि सिद्धवत्काररूपमुद्देश्यत्वं पापक्षयस्य तु स्वारसिकप्रवृत्तिविषयत्वात्मकप्रयोजनत्वरूपम्। न ह्येवंविधयोरुद्देश्ययोः फलनिमित्तयोरेकत्र विरोधोऽस्ति। यदि हि निमित्तमपि फलवत्कर्मजन्यं स्यात्तदा द्वयोरप्येकप्रकारसंबन्धाद्विरोधः स्यात्। प्रत्युत निमित्ते कर्म क्रियमाणं किं प्रयोजनमिति सुतरामपेक्षते निमित्तेऽवश्यकर्तव्यताया नैष्फल्ये सत्यनुपपत्तेः। अतश्च निमित्तबलेनापेक्ष्यमाणं फलं कथं तेन विरुद्धं स्यात्। ननु निमित्तत्वमुपलक्षणत्वं ज्ञापकत्वं व्याप्यत्वरूपं व्याप्तिश्च यदा यदा जीवनं तदा तदा कर्मेत्येवंरूपाऽन्यथा कर्मणि कदाचिज्जीवनसंबन्धस्यावर्जनीयत्वेन तत्प्रतिपादनानर्थक्यात्। तथा च व्याप्त्या निमित्ते कर्मण आवश्यकत्वरूपनियमोऽर्थाद्गम्यते। अनावश्यकत्वे निमित्ते सत्यपि कदाचित्कर्मणोऽकरणे निमित्तत्वव्याघातात्। एवं च तस्य फलार्थत्वे फलेच्छायामसत्यामननुष्ठाने सति निमित्तत्वं व्याहन्येतेति चेत्। न हि काम्यत्वनैमित्तिकत्वयोः स्वरूपेण विरोधोऽस्ति फलेच्छायाः कादाचित्कमेव हि तद्विरोधे बीजम्। प्रकृते च न पापक्षयस्य कदाचित्कस्यचिदप्यनिच्छाऽस्ति दुःखाधायकपापनिवृत्तेः सर्वदाऽभिलषणीयत्वात्। न च येन पापं नैवाऽऽचर्यते तस्य न तदिच्छेति वक्तुं शक्यम्। इह जन्मन्यनाचरणेऽप्यनादिजन्मान्तरप्रवाहार्जितपापराशिक्षयेच्छाया अवर्जनीयत्वात्। न च ब्रह्मलोकान्तविरक्तस्य मुमुक्षोर्न

तदिच्छेति वाच्यम्। मुमुक्षुणाऽपि पापक्षयस्यावश्यमभिलषणीयत्वात्। नह्येतज्जन्मनि जन्मान्तरेषु चार्जितेषु नरकप्रापकेषु सत्सु मोक्षः संभवतीति भवति पापक्षयः फलम्। विरक्तस्य कर्मानधिकारात्। 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्युपनिषद्वाक्यात्।

**तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।**

इत्यादिस्मृतेश्च। तत्र क्रिमिकीटभावाद्याधायकं पापान्तरं प्रत्यवायरूपं नित्यकर्माकरणादुत्पद्यत इति श्रुतिस्मृतिभ्यो गम्यते। तत्र ज्ञानकर्मपरिभ्रष्टानधिकृत्य—'**य एतौ पन्थानौ न विदुस्ते कीटपतङ्गाः**' इत्यादिश्रुतिः।

**'एतद्यो न विजानाति मार्गद्वितयमात्मनः।**
**दन्दशूकः पतङ्गो वा कीटो वा जायते ध्रुवम्।'॥**

'अकुर्वन्विहितं कर्म' इत्यादिस्मृतिश्च। तत्परिहारो नित्यकर्मणामानुषाङ्गिकं फलमित्यधिकारलक्षण्यां सर्वशक्त्यधिकरणे टुप्टीकावार्तिकतन्त्ररत्नयोः स्पष्टम्। एवं च जीवने निमित्ते कर्मणः पापक्षयार्थतया विधौ नियमोऽप्यर्थसिद्धः। "**कर्तृधर्मो नियमश्चोद्यते**" इति भाष्यादिग्रन्थस्याप्येवमेवाऽऽशयः। जीवनं च सायंप्रातःकालावच्छिन्नं निमित्तमित्यधिकारलक्षण्याम्। '**तेषामौत्पत्तिकत्वात्**"—इत्यधिकरणे स्पष्टीकृतं भगवद्भिर्भाष्यवार्तिककृद्भिरित्यास्तां तावत्॥ २॥

इतोऽपि कर्तृधर्म इत्याह—

**'लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात्'। (पू० मी० २।४।३)।**

**वृत्तिः**—"तमतिनीय चतुर्गृहीतमाज्यं जुहुयात्" इत्यग्निहोत्रस्य स्वकालातिक्रमे प्रायश्चित्तस्य वारुण्यादीष्टिविधानादपि लिङ्गान्न कर्मधर्मः। कर्मधर्मे हीति—काम्यप्रयोगस्य शेषतया यावज्जीवनकाले विधीयमाने प्रक्रमेण प्रक्रान्तेन यावज्जीवनकालेन काम्यप्रयोगो नियम्येत। 'यम उपरमे'। समाप्येत। एवं च कर्मधर्मपक्षे यावज्जीवमभ्यस्तरूपस्यैकस्य प्रयोगस्य फलार्थतया मध्ये समाप्त्यभावेन जीवनदशायां न कोऽपि हुतवानग्निहोत्रमिति यावज्जीवनकालोत्तरमेवाग्निहोत्रीति वक्तव्यम्। यथैन्द्रवायवादिग्रहाभ्यासे कृत्स्ने निवृत्ते सोमयाजीति तद्वत्। तथाविधस्य चाग्निहोत्रिणस्तत्र तस्मिञ्जीवने समाप्ते सति अन्यत्स्वकालातिक्रमप्रायश्चित्ततया वारुणीष्ट्यादिविधानम्। नापि जीवनोत्तरकाले तस्य स्वकालत्वाभावात्। तदानीं कर्तुर्यजमानस्याभावेन प्रायश्चित्तविध्यसांगत्याच्च। कर्तृधर्मत्वे च यावज्जीवनकालो न कर्माङ्गम्॥ ३॥

' अनित्यत्वात्तु नैवं स्यात् ' ( पू० मी० २ । ४ । ४ )

वृत्तिः—तुशब्दश्चार्थेऽन्वाचये । यदि च यावज्जीवनकालः कर्मधर्मः स्यात्तर्हि " जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च जरया ह वा एताभ्यां निर्मुच्यते मृत्युना च " इत्येवमग्निहोत्रस्य दर्शपूर्णमासयोश्च समभिव्याहारः श्रूयते । तैत्तिरीया अपि समामनन्ति—

" एतद्वै जरामर्यमग्निहोत्रम् " ( ना० उ० १० । ८० ) इति ।

जरया वयोहान्या मर्यं समाप्यं न तु स्वेच्छयेति जरामर्यमवश्यानुष्ठेयम् । ह वा इति निपाताववधारणे । एषोऽग्निहोत्रस्य कर्ता जरया मृत्युना चावश्यं मुच्यत इति तदर्थः । कर्मधर्मे हि वचनमिदं विरुध्यते । कुतः—अनित्यत्वात् । काम्यप्रयोगधर्मे हि यावज्जीवनकाले विधीयमाने नित्यप्रयोगस्यालाभात्काम्यप्रयोगस्य चानित्यत्वादवश्यानुष्ठेयत्वरूपजरामर्यत्ववचनविरोधः । काम्यप्रयोगस्यानित्यस्वर्गमात्रार्थत्वेन जरामरणनिवृत्तिफलकत्ववचनविरोधश्च । अनित्यत्वादित्यस्य नित्याभिलषणीयफलरहितत्वादित्यप्यर्थः । सिद्धान्ते तु नैमित्तिकप्रयोगस्य पापक्षयार्थत्वाच्छरीरारम्भकपापाभावाज्जरामरणनिवृत्त्यर्थत्वमुपपद्यते । एतेन वामनमतं यत्त्रिंशद्दिनादिभिरिति तदपि व्याख्यातं वेदितव्यम् । तथा चाग्निहोत्रं यावज्जीवमनुष्ठेयमिति शास्त्रीयः पन्थाः ।

ननु किमिदमग्निहोत्रं नाम—ब्रूमहे—अग्निहोत्रमित्यनुष्ठीयमानस्य नित्यस्य कर्मविशेषस्य नामधेयम् । तदुक्तं प्राच्यां मीमांसायां प्रमाणलक्षणे चतुर्थपादे—एवं हि तत्सूत्रप्रणयनप्रसङ्गलेखनव्यापारे लेखनीं व्यापारयामः—

' अग्निहोत्रं जुहोति ' इति श्रूयते । तत्राग्निहोत्रपदं गुणविधिर्नामधेयं वेति संशयः । गुणविधित्वे बाधकाभावात्कर्मनामत्वे बाधकसत्त्वाच्च । तथा हि हूयत इति होत्रं पयोदध्यादि द्रव्यम् । " हुयामाश्रुभसि " इत्यादिना त्रन् प्रत्ययः । अग्नये होत्रमस्मिन्निति बहुव्रीहिणैव मत्वर्थस्य लाभान्न मत्वर्थलक्षणा । ' सप्तमीविशेषणे बहुव्रीहौ ' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । ' कण्ठेकालः ' ' उरसिलोमा ' सच्छास्त्रजन्मा हि विवेकलाभ इत्यादिवत् । ततश्चाग्न्युद्देश्यकपयोदध्यादिहूयमानद्रव्यकहोमोऽवगतः । तत्राग्निहोत्रपदे होमो न विधेयो जुहोतिनैव तल्लाभात् । नापि पयोदध्यादिद्रव्यम् । " पयसा जुहोति " इत्यादिभिस्तल्लाभात् । अत उपसर्जनीभूतोऽप्यग्निरेव विधेय इति प्राञ्चः ।

वस्तुतस्तु होत्रशब्दो भावसाधनः । अग्नये होत्रं होमोऽग्निहोत्रम् । यद्वा हूयते यस्मिन्कर्मणि तद्धोत्रम् । अग्नये होत्रमग्निहोत्रम् । प्रकृतिविकारभाव एव चतुर्थीसमासविधावपि " सुप्सुपा " इति समासः । " लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो

**यथा लौकिकवैदिकेषु** " इति वार्तिकव्याख्यानावसरे 'धर्माय नियमो धर्मनियमः' इति पातञ्जलभाष्ये चतुर्थीसमासप्रदर्शनाद्व्यक्तोक्तत्वाच्च कैयटादिभिः। ततश्च मत्वर्थलक्षणां विनैव गुणविधिसंभवः। बहुव्रीह्याश्रयणे तु "बहुव्रीहौ प्रकृत्या पूर्वपदम्" (पा० सू० ६९।१।२) इति बहुव्रीहिस्वरेणाग्निशब्द इकारस्योदात्तत्वे सति शिष्टस्वरेणावशिष्टानामचामनुदात्तत्व ओकारस्य "उदात्तादनुदात्तस्य स्वरितः" (पा० सू० ८।४।६६) इति स्वरितत्वे रेफादकारस्य "स्वरितात्संहितायामनुदात्तानाम्" (पा० सू० १।२।३९) इति प्रचयः स्यात्। "**सुप्सुपा**" इति समासाश्रयणे तु "**समासस्य**" (पा० सू० ६।१।१२३) इत्यन्तोदात्तं भवति। अन्तोदात्तमेव चाग्निहोत्रपदं प्रयुञ्जते तैत्तिरीयादय इत्यन्यदेतत्।

प्रकृतमनुसरामः—अग्निहोत्रपदस्य नामधेयत्वे कर्मणो विधेयस्याऽरूपत्वं स्यात्। द्रव्यदेवते हि यागस्य रूपम्। देवतोद्देश्यकद्रव्यत्यागात्मकत्वाद्यागस्य। तत्र द्रव्यं यद्यपि "पयसा **जुहोति**" इत्यादिभिः प्राप्तं देवता तु नामधेयत्वे सति न प्राप्नोतीत्यरूपत्वं कर्मणः प्रसज्येत। न च "**यदग्नये च प्रजापतये च सायं जुहोति**" "यत्सूर्याय च प्रजापतये च प्रातः" इति वाक्याभ्यां देवतालाभान्नारूपत्वमिति वाच्यम्। तयोर्हि वाक्ययोः किमग्न्यादयो गुणा विधीयन्त उताग्निप्रजापत्योः सूर्यप्रजापत्योश्च समुच्चितयोर्विधिः। उत तयोः समुच्चयः। उताग्निसमुच्चितस्य सूर्यसमुच्चितस्य च प्रजापतेर्विधानम्। उत प्रजापतिमात्रविधानम्। नाऽऽद्यद्वितीयौ वाक्यभेदात्। न तृतीयः—चशब्दार्थस्य समुच्चयस्य स्वातन्त्र्येणोपस्थित्यभावेन विशेषणत्वानुपपत्तेः। न चतुर्थः—"**पञ्चदशान्याज्यानि**" इत्यत्र संख्याविशिष्टाज्यानामिव समुच्चयविशिष्टप्रजापतेरपि विधानायोगात्। न पञ्चमः—प्रजापतिमात्रविधौ हि 'अग्नये' इत्यस्य 'सूर्याय' इत्यस्य च विधित्वासंभवादनुवादत्वं वक्तव्यं तच्च न संभवति प्रापकाभावात्। न च 'अग्निर्ज्योतिः' 'सूर्यो ज्योतिः' इति मन्त्रवर्णतस्तत्प्राप्तिरिति वाच्यम्। प्रबलब्राह्मणगतचतुर्थ्युपात्तदेवतावरुद्धे कर्मणि दुर्बलमन्त्रवर्णतस्तद्विरुद्धदेवतानिवेशायोगात्। न च प्रजापतिदेवताके कर्मणि कथमग्निसूर्यप्रकाशनसमर्थयोर्मन्त्रयोर्निवेशसंभव इति वाच्यम्। '**वचनान्त्वयथार्थमैन्द्री स्यात्**' इति तार्तीयीकाधिकरणन्यायेन वाचनिकविनियोगबलेन प्रजापतिलक्षकतया तदुपपत्तेः। प्रजापतिमात्रविधौ "यत्सूर्याय प्रजापतये" इति पुनर्विधानवैयर्थ्याच्च। न च 'यदग्नये च प्रजापतये च सायम्' इत्येवोच्यमाने प्रातर्होमे प्रजापतिर्देवता न स्यात्। 'यत्सूर्याय' इत्युच्यमाने सायं होमे न स्यादित्युभयोद्देशेन तद्विधिरिति वाच्यम्। योऽयं होमः स चेत्सायं तर्हि प्रजापतय इति विशिष्टोद्देशे वाक्यभेदापातात्। ततश्च यदग्नये चेत्यादिवाक्यद्वयेऽग्निसूर्यसायंप्रातर्विशिष्टकर्मान्तरविधिरिति वक्तव्यम्। एवं च ततः कथमग्निहोत्रवाक्यविहितकर्मणि देवतालाभः स्यात्। न च 'अग्निर्ज्योतिः'

'सूर्यो ज्योतिः' इति मन्त्रवर्णतस्तल्लाभसंभव इति शङ्क्यम्। 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति मन्त्रविध्योः सायंप्रातःप्रत्यभिज्ञाबलेन यदग्नये चेति वाक्यद्वयविहितविशिष्टकर्मान्तरविषयत्वावगमेनाग्निहोत्रवाक्यविहिते कर्मणि ततो देवतालाभसंभवात्। तस्मादत्राग्निहोत्रशब्दस्य नामधेयत्वे कर्मणोऽरूपत्वापाताद्गुणविधानमेव युक्तम्। एवं चाग्निहोत्रमिति द्वितीयाऽप्युपपन्ना भवति। नामधेयत्वे हि भावनाकरणीभूतधात्वर्थवाचित्वात्तृतीया स्यात्। उद्भिदा यजेतेत्यादिवत्। गुणविधित्वे त्वग्नये होमं कुर्यादित्यर्थपर्यवसानात्सा न विरुध्यते। न च कस्मिन्होमेऽयं देवताविधिः। न तावद्यदग्नये चेति विहिते कर्मण्युत्पत्तिशिष्टदेवतान्तरावरुद्धत्वात्। अत एव न दर्शपूर्णमासादिगतहोमेष्विति वाच्यम्। अविहितदेवताकेषु नारिष्टादिदर्वीहोमेष्वग्निदेवताविधिसंभवात्। न च मान्त्रवर्णिकदेवतान्तरावरोधात्तत्र नाग्निविधिः संभवतीति वाच्यम्। मन्त्रवर्णप्रवृत्तेः प्रागेव झटिति प्रवृत्तेनाग्निहोत्रवाक्येण तत्राग्नेरेव निवेशाद्देवतान्तरपदानां च तत्रत्यमन्त्रगतानामैन्द्रीन्यायेनाग्निलक्षकत्वोपपत्तेः। वस्तुतस्तु यत्र दर्वीहोमेषु न देवताविधिर्न वा मन्त्राम्नानं तत्र गुणविधानं भविष्यति। अस्ति हि वाजसनेयके हव्यवाहकाण्डे सप्तमाध्यायान्ते 'दर्शपूर्णमासयोरुत्तममनूयाजमिष्ट्वा समानीय जुहोति' इति तादृशदर्वीहोमविधिः। औपभृतमाज्यं जुह्वां समानीय जुहोतीति तदर्थः। एवं चाग्निहोत्रमिति गुणविधिरेव न तु नामधेयम्। यदग्नये चेत्यादिवाक्यद्वयं तु विशिष्टकर्मान्तरविधायकम्। दध्ना जुहोतीत्यादिस्तु तत्रैव गुणविधिः। 'सायं जुहोति प्रातर्जुहोति' इति च तयोरेव विशिष्टकर्मणोर्विश्वजिन्न्यायकल्प्ये फले समुच्चयविधिः। अन्यथा 'यदग्नये च' इति 'यत्सूर्याय च' इति पृथग्विधिबलात्पृथगेव फलं कल्प्येत। 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'यावज्जीवमग्निहोत्रं जुहुयात्' इति च दर्वीहोमाश्रिताग्निदेवताफले निमित्ते च विधीयते यावज्जीवानुष्ठितदर्वीहोमाश्रिताग्निना फलं कुर्यादिति। तदेवमग्निहोत्रपदं गुणविधिर्न तु नामधेयमिति स्थितम्।

इति प्राप्ते सिद्धान्तयति—

**तत्प्रख्यं चान्यशास्त्रम् (पू० मी० १।४।४)।**

**वृत्तिः**—यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्ध इति नामधेयं स्यादिति चानुवर्तते। यस्मिन् 'अग्निहोत्रं जुहोति' इत्यादिवाक्येऽग्न्यादिगुणविधिः संभाव्यते तत्र नामधेयमेव स्यात्। कुतः—यतो नामधेयत्वे प्रधानतोऽभिसंबन्धः। विधेयत्वेन धात्वर्थेन विधिप्रत्ययस्याभिसंबन्ध एकपदवृत्तित्वं लभ्यते। गुणविधित्वे तु विधेयस्य गुणस्य विधिप्रत्ययस्य च भिन्नपदवृत्तित्वं लभ्यते। तथा च गुणस्य विधेश्च संबन्धः पदद्वयसमभिव्याहारवाक्यगम्यो न तु धात्वर्थविधिसंबन्धवच्छ्रुतिगम्यः। न हि समानपदवृत्तित्वलक्ष-

णश्रुत्या धात्वर्थस्य विधिसंभवे वाक्येन गुणविधानं युक्तम् । ननु नामधेयत्वेऽरूपत्वं दोषः स्यादित्यत्रोत्तरम्—तत्प्रख्यं चान्यशास्त्रमिति । चशब्दो ह्यर्थ उक्तसमुच्चयार्थो वा । तच्छब्देन गुणोपदेश इत्युपात्तो गुणः परामृश्यते । यागनामधेयत्वे यागस्य रूपलाभाय यो गुणो विधेयतयाऽपेक्षितस्तं प्रचष्टे विधत्त इति तत्प्रख्यम् । 'आतश्चोपसर्गे' (पा० सू० ३ । १ । १३६) । इति कः । विधित्सितस्याग्न्यादिगुणस्य विधायकमन्यच्छास्त्रमस्ति । अतस्तदग्निहोत्रादिपदमपि नामधेयं स्यादित्यर्थः । तथा हि 'अग्निहोत्रं जुहोति' इत्यग्निहोत्रनामधेयकस्य होमस्य विधिः ।

'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इतिविहितमन्त्रवर्णतोऽग्निसूर्यदेवतालाभः । न च योऽयं होमः स चेत्सायमिति वाक्यभेदः शङ्क्यो होमस्य प्रकरणत एवोपस्थित्या तदंशे शब्दस्य व्यापाराभावात् । 'यदग्नये च प्रजापतये च' इत्यादिवाक्यद्वयेऽग्निसमुच्चितः सूर्यसमुच्चितश्च प्रजापतिर्विधीयते । तत्र मन्त्रवर्णप्राप्ताग्निसूर्यांशे विधिव्यापाराभावान्न विशिष्टविधिगौरवम् । एवं चाग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधिः पर्यवस्यति । एतेन समुच्चयस्य चार्थस्य विशेष्यत्वाभावान्न विधेयत्वमिति निरस्तम् । तद्विधेरार्थिकत्वात् । 'सायं जुहोति' 'प्रातर्जुहोति' इति कालविधिः । सायंप्रातर्व्यवस्थितमन्त्रवर्णलब्धाग्निसूर्यानुवादेन प्रजापतिसमुच्चयो विधीयमानोऽपि तदनुवाद्यदेवतानुसारेण व्यवस्थयैव प्राप्नोतीति 'यदग्नये च' इति वाक्यद्वये सायंप्रातरित्यनुवादः । अग्निहोत्रमिति द्वितीया तु फलभावनाकरणस्यापि यागस्य 'नासाधितं करणम्' इति न्यायेनार्थाक्षिप्तसाध्यत्वाभिप्रायेति प्राञ्चः ।

अत्रेदं वक्तव्यम् । तैत्तिरीयकब्राह्मणे—

'प्रजापतिरग्निमसृजत' इत्युपक्रम्य तं प्रजापतिरब्रवीज्जायस्वेति सोऽब्रवीत्किंभागधेयमभिजनिष्य इति । तुभ्यमेवेदꣳ हूयाता इत्यब्रवीत् । स एतद्भागधेयमभ्यजायत । यदग्निहोत्रम् । तस्मादग्निहोत्रमुच्यते । तद्धूयमानमादित्योऽब्रवीत् । मा हौषीः । उभयोर्वै नावेतदिति । सोऽग्निरब्रवीत् । कथं नौ होष्यन्तीति । सायमेव तुभ्यं जुहवन् । प्रातर्मह्यमित्यब्रवीत् । तस्मादग्नये सायꣳ हूयते । सूर्याय प्रातः ।

इति देवताविधिः केवलाग्निसूर्ययोर्देवतयोर्विधानात् । मन्त्रवर्णप्राप्तो ज्योतिष्टोमगुणो नाऽऽदर्तव्य आग्नेयादियागे 'अग्निर्मूर्धा दिवः' इत्यादियाज्यापुरोनुवाक्यागम्यगुणवत् । 'तूष्णीमुत्तरामाहुतिं जुहोति' 'यत्तूष्णीं तत्प्राजापत्यम्' इति द्वितीयाहुतिरङ्गत्वेन विधीयतेऽग्निसूर्यहोमयोरेव प्राधान्यावगमात् । श्रूयते हि वाजसनेयके—'यामग्ने जुहोति सा

तस्यै देवतायै यस्या अग्निहोत्रमथ या द्वितीया स्विष्टकृद्भाजनमेव सा ' इति । एवं च ' यदग्नये च प्रजापतये च ' इति वाक्यद्वयमपि यच्छन्दबलादनुवाद एव । एतेन ' चतस्रो गार्हपत्ये जुहोति चतस्रोऽन्वाहार्यपचने द्वे आहवनीये दश संपद्यन्ते दशाक्षरा विराड्विराजा यज्ञः संमितः ' इति बह्वृचब्राह्मणे विराट्संपत्तिश्रवणाद्दशानामपि होमानां प्राधान्यमिति वदन्तो निरस्ताः । यदि हि विराट्संपत्तिरेव प्राधान्यप्रयोजिका तर्हि वैश्वदेवे पर्वणि ' नव प्रयाजा इज्यन्ते नवानूयाजा अष्टौ हवींषि द्वावाघारौ द्वावाज्यभागौ त्रिंशत्संपद्यन्ते त्रिंशदक्षरा विराट् ' इति श्रवणात्प्रयाजादीनामपि प्राधान्यापत्तिः । अतः ' अग्निहोत्रं जुहोति ' इत्यग्निहोत्रपदं पूर्वाहुतेरेव नामधेयम् । एकस्यैवाग्निहोत्रस्य ' सायं जुहोति ' ' प्रातर्जुहोति ' इत्यभ्यासविधिः । अतः प्रातर्होमस्य सूर्यदेवत्यत्वेऽपि सायंहोमस्याग्निदेवत्यत्वमात्रेणाग्निहोत्रशब्दस्योपपत्तिः । कदाचिदग्निदेवत्यत्वयोगेन समाख्यानोपपत्तेः । श्रवणादिनक्षत्रयोगाभावेऽपि श्रावणी पौर्णमासीत्यादिव्यपदेशवत् । अहो किमेवं नामधेयेन गुणेन वा महताऽऽयासेन साधितस्य नामधेयपदस्य कोपयोग इति न जानीम इति चेच्छृणु—कर्मण आरम्भ इदं कर्माहं करिष्यामीति संकल्पापरनामा मानसिको व्यापार एष्टव्यः । स चाग्निहोत्रनामधेयेनैवैष्टव्यः । एवं हि तत्स्वरूपम्—अग्निहोत्रं होष्यामीति । एवं चास्याश्चिन्तायाः प्रयोजनं पूर्वपक्षेऽग्नौ होष्यामीत्यप्युक्तौ न बाधकम् । सिद्धान्ते त्वग्निहोत्रं होष्यामीत्येव नान्यत् । एवं नामधेयरूपवेदप्रामाण्यमङ्गीकृतं भवति । तदिदमग्निहोत्रं न प्रत्याम्नायं भिद्यते नापि प्रतिसूत्रं भिद्यतेऽपि तु सर्वत्र विहितमग्निहोत्रमेकमेवेति मीमांसान्यायः । तदिदमग्निहोत्रं यजुषा विहितमस्ति यत्त्वाश्वलायनेनाग्निहोत्रमाम्नातं तत्तु याजुषमेव । ननु किमनेन याजुषार्चिकशुष्कविचारेणेति चेत्—उच्चैस्त्वमुपांशुत्वमिति गृहाण । तदिदमग्निहोत्रं यावज्जीवमनुष्ठेयमिति शासनम् । न च मध्ये त्यक्तुं शक्यते । यत्तु " त्रिंशद्दिनादिभिर्वाऽग्निहोत्राद्युपरमोऽस्त्विति " इति वामनमतं तत्तु समुच्चयवादिन इत्युपेक्ष्यम् । इदं च नित्यमनुष्ठीयमानमग्निहोत्रं न च कैरपि वचनान्तरैर्बाधितुं शक्यते । यत्तु कैश्चिद्धार्मिकंमन्यमानैरेकादश्याद्युपोषणदिनेऽग्निहोत्रं नानुष्ठीयते तदशास्त्रीयमिति तेषामग्नेर्लौकिकाग्नित्वं नान्तरीयकतयाऽऽपतितं नापह्नोतुं शक्यम् । नित्यकर्मभेदप्रकरणे प्रायश्चित्तविधानात् । ये तु नित्यं नेति मत्वा नानुतिष्ठन्ति न चानुष्ठेयमिति साधयन्ति ते शास्त्रविरोधादुपेक्ष्या एव । शास्त्रं तु पूर्वमेव प्रास्तावि । तत्राऽऽहवनीये हूयमानमाहुतिद्वयं प्रधानमितरत्सर्वमारादुपकारकं संनिपत्योपकारकमङ्गजातमिति वेदनीयम् ।

ननु " त्रिंशद्दिनादिभिर्वाऽग्निहोत्राद्युपरमोऽस्त्विति " इति वामनीयमण्डनोक्तवाक्येनाग्नीनाधाय त्रिंशद्दिनान्यग्निहोत्रमनुष्ठाय ततोऽग्नीनामुत्सर्गः शक्यो वा न वेति चिन्तयामः । वामनस्तु मासमग्निहोत्रानुष्ठानमन्यत्र श्रूयमाणमेवालमिति मत्वा श्लोक-

यामास । तदेव कश्चिन्मन्दमतिर्गृह्णीयाद्यावज्जीवादिश्रवणं विस्मृत्योन्मत्तवत्तन्मीमांसनप्रख्याप-नाय तावतैवाऽऽत्मानं कृतकृत्यताकं जानीयात्तदर्थं चावश्यमेतन्मीमांसनीयमिति तदर्थं यतामहे ।

कुण्डपायिनामयनं प्रकृत्य ताण्ड्यब्राह्मणे श्रूयते—

**" ते मासं दीक्षिता भवन्ति । ते मासि सोमं क्रीणन्ति । तेषां द्वादशो-पसदः । उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुह्वति । मासं दर्शपूर्णमा-साभ्यां यजन्ते । मासं वैश्वदेवेन । मासं वरुणप्रघासैः । मासं साकमेधैः । मासं शुनासीरीयेण "** इत्यादि ।

तत्र ' मासमग्निहोत्रं जुह्वति ' इत्यादिषु वाक्येषु संशयः—किं नित्याग्निहोत्रादिषु मासगुणविधिरुत कर्मान्तरविधिरिति । तत्राग्निहोत्रादिकर्मणोऽग्निहोत्रं जुहोतीत्यादिवाक्य-प्राप्तत्वेनाविधेयत्वात्तदनुवादेन मासविधिः । न च नैयमिकाग्निहोत्रादिकर्मणोऽसंनिहितत्वे-नानुपस्थितत्वात्कथं तत्र मासगुणविधिरिति वाच्यम् । असंनिहितस्यापि नाम्नोपस्थिति-संभवात् । न च मासस्य पुरुषकृत्या संपादयितुमशक्यत्वेनानुपादेयस्य कथं विधिरिति वाच्यम् । न ह्यत्र कर्मोद्देशेन मासो विधीयते किं तु यो मासस्तत्राग्निहोत्रादि कुर्या-दित्येव मासोद्देशेन कर्मविधिस्तस्य च विधेरप्राप्तपक्षपातितया कर्मोद्देशेन मासविधौ पर्यवसानम् । एवं च मासस्यैव विधेयत्वात्कर्मणो विधानाभावान्न कर्मभेदः । विहितस्य विधानमेव हि कर्मभेदप्रयोजकमिति शब्दान्तराधिकरणे जैमिनिना सूत्रितं न तु यथा-कथंचित्पुनरुपादानमात्रम् । तस्मान्नित्याग्निहोत्राद्यनुवादेन मासगुणविधिरिति प्राप्ते सिद्धा-न्तयति—

## प्रकरणान्तरे प्रयोजनान्यत्वम् ।

नित्यस्याग्निहोत्रादिकर्मणः प्रकरणादन्यत्कुण्डपायिनामयनस्य प्रकरणं प्रकरणान्तरम् । तत्र पठ्यमाने मासाग्निहोत्रादिवाक्ये प्रयोजनान्यत्वम् । प्रयुज्यतेऽनुष्ठीयत इति प्रयोजनं कर्म तस्यान्यत्वम् । अप्रकृताभिधानात्कर्मान्तरत्वमित्यर्थः । असंनिहितत्वादग्निहोत्रादिश-ब्दैर्नैयमिकाग्निहोत्रादिकर्मण उपस्थित्यभावेन तदनुवादेन मासगुणविध्यसंभवान्मासविशि-ष्टमग्निहोत्रादिसंज्ञकं कर्मान्तरमेव मासाग्निहोत्रादिवाक्येषु विधेयमित्युक्तं भवति । न चासंनिहितस्याप्यग्निहोत्रादिकर्मणो नाम्नोपस्थितिसंभवात्तदनुवादेन मासगुणविधिसंभव इति वाच्यम् । एवं सति प्राप्तकर्मण्यनेकगुणविधौ वाक्यभेदप्रसङ्गात् । यदि हि केवलो मास-गुणः श्रूयेत तदा भवेत्तस्य विधिः । ' उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति ' इत्यादि श्रूयते । न चाग्निहोत्रादिकर्मण्युपसदः संभवन्ति । अत उपसदस्तदानन्तर्यं मासश्चेति त्रयं विधेयमिति भवेद्वाक्यभेदः । तथा च नाम्नोपस्थितमपि नित्याग्निहोत्रादि कर्म

परित्यज्य कर्मान्तरमेवैषु वाक्येषु विधेयम्। न चोपसद्भिश्चरित्वेत्यस्य तेषां द्वादशोपसदः सोममुपनह्य मासमग्निहोत्रं जुह्वतीति पाठप्राप्तोपसदानन्तर्यानुवादकतयोपपत्तेर्वाक्यभेदाप्रसङ्गादस्तु प्रसिद्धाग्निहोत्रकर्मणि गुणविधिरिति वाच्यम्। पाठो ह्याकाङ्क्षितमेव क्रमं प्रापयितुमीष्टे न त्वनाकाङ्क्षितमपि। एकप्रयोगवचनपरिगृहीताङ्गानामेव हि क्रमाकाङ्क्षा भवति तेषामित्थंभावाकाङ्क्षया युगपदुपनिपातात्। न च प्रसिद्धाग्निहोत्रादिकर्मणः कुण्डपायिनामयनस्य चाङ्गाङ्गिभावोऽस्ति येन तेषां कुण्डपायिनामयनमुपयन्तीत्येकप्रयोगवचनपरिगृहीतत्वात्क्रम साकाङ्क्ष्येत। 'दीक्षितो न ददाति न जुहोति न पचति' इति सोमक्रतुमध्ये पुरुषार्थहोमप्रतिषेधेन प्रसिद्धाग्निहोत्रादिकर्मणस्तत्रैवोपनिपाताभावाच्च। एवं च काम्येष्टीनामिवात्र पाठस्य क्रमप्रापकत्वासंभवेनोपसद्भिश्चरित्वेत्यस्य पाठप्राप्तक्रमानुवादकत्वानुपपत्त्योपसदस्तदानन्तर्यं मासश्चेति त्रयमपि विधेयमिति स्वीकार्यमिति भवेदेव वाक्यभेदः। एतेन 'दीक्षितो न जुहोति' इति प्रतिषिद्धस्य प्रसिद्धाग्निहोत्रादिकर्मणः प्रतिप्रसवरूपेण वा सत्रैकदेशत्वेन वा विधिरिति प्रत्युक्तम्। उक्तरीत्या प्राप्तकर्मण्यनेकगुणविधानासंभवेन प्रतिप्रसवायोगात्सत्रसंबन्धस्योपसदादीनां च प्रसिद्धकर्मणि विधौ वाक्यभेदापत्त्या सत्रैकदेशत्वेन विध्यनुपपत्तेश्च। तस्मादत्र कर्मान्तरविधानमिति भाष्यानुसारी पन्थाः। तमिमं प्रकारं भङ्क्त्वा प्रकारान्तरमुत्प्रेक्षितं वार्तिके तद्यथा—अप्रकृताभिधानात्मकं प्रकरणान्तरं न पृथक्शब्दान्तरादिवत्कर्मभेदकोपाधिः। प्रसिद्धाग्निहोत्रादिकर्मण्यसंभवत उपसदादिगुणादेव कर्मभेदसिद्धेः। नन्वत्राप्रकृताभिधानापरपर्यायात्प्रकरणान्तरादेव कर्मभेदो न तु गुणात्। अप्रकृताभिधानं हि प्रागनवगताग्निहोत्रादिकर्माभिधानम्। तच्च प्रसिद्धाग्निहोत्रादिकर्मण्यसंभवत उपसदादिगुणादध्यवसीयते। तथा च कर्मभेदावगमकप्रकरणान्तरस्याऽऽत्मलाभ उपक्षीणत्वाद्गुणस्य नात्र कर्मभेदकत्वमिति चेन्न। एवं सति वाजिभ्यो वाजिनमित्यत्राप्यप्रकृताभिधानादेव कर्मभेदापत्तौ गुणस्य कर्मभेदकत्वानुपपत्तिप्रसङ्गात्पूर्वकर्मासंयोगिनो वाजिनगुणस्याप्रकृताभिधानस्वरूपलाभ एवोपक्षीणत्वात्। किं बहुना शब्दान्तराभ्याससंज्ञानामपि विधेरप्रकृतविषयत्वबोधन एवोपयोगः। अप्रकृताभिधानाच्च कर्मभेद इति वक्तुं शक्यतया सर्वत्र प्रकरणान्तरमेव भेदकं स्यात्। शब्दान्तरादीनां शेषाणां प्रकरणान्तरेण शेषिणाऽविनाभावात्। न हि शब्दान्तरादीनां परस्परपरिहारेणेव प्रकरणान्तरपरिहारेण क्वचिद्वर्तनं संभवति। तथा च तैः सह प्रकरणान्तरस्य कथं पृथक्परिगणनं स्यात्। न हि प्रधानस्योपसर्जनभूतैः सह परिगणनमुचितम्। किंचोपसद्भिश्चरित्वेत्यस्य संनिहिताग्निहोत्रवाक्यान्वयेन शान्ताकाङ्क्षत्वान्निराकाङ्क्षत्वाच्च दर्शपूर्णमासादिवाक्यानां न तेषु तस्यान्वयः। एवं च दर्शपूर्णमासादिवाक्येषूपसदां तदानन्तर्यस्य चाविधानान्मासमात्रस्यैव गुणस्य विधानाद्वाक्यभेदाभावेन नाम्नोपस्थितस्य प्रसिद्धदर्शपूर्णमासादिकर्मणः परित्यागाभिधानं प्रकरणान्तरं तत्र नास्तीति कर्मभेदो न स्यात्। तस्मादत्र वाक्यभेदप्रयुक्तमप्रकृताभिधानं न कर्मभेदप्रयोजकम्। किं तु शब्दा-

न्तरादिवदप्रकृताभिधानापादकं किंचिन्निरूपणीयम् । ननु प्रकरणविच्छेदापरपर्यायं पूर्वकर्मासंनिधानमेव । तथा हि विच्छिन्नप्रकरणं कर्म द्वेधोपादेययुक्तमनुपादेययुक्तं च । तत्र ' यदाहवनीये जुहोति ' इत्यादावुपादेयस्थल आहवनीयादिगुणस्य होमे प्रसक्तेः संपादयितुं शक्यत्वेनोपादेयतया होमोद्देशेन विधानसंभवेन विशिष्टविधिगौरवभीत्या कर्मण उद्देश्यत्वावश्यंभावे दूरस्थस्यापि होमस्य सिद्धवन्निर्देशबलेनाभिध्यानादिना कथंचिद्बुद्धौ विपरिवृत्तिं संपाद्य यो होमः स आहवनीय इत्येवं गुणविधिसंभवः । अनुपादेयगुणस्तु पञ्चधा—

" देशः कालो निमित्तं च फलं संस्कार्यमेव च ।
इति मीमांसकाः प्राहुरनुपादेयपञ्चकम् " इति ।

तदिह मासस्याग्निहोत्रादिकर्मणि प्रसक्ते संपादयितुमशक्यतया दध्यादिवदानयनादिक्रियाविशिष्टत्वेनाननुष्ठेयतया चानुपादेयस्याग्निहोत्रादिकर्मोद्देशेन पर्यवसानगत्याऽपि विधानासंभवेन यो मासस्तत्राग्निहोत्रादि कुर्यादित्येवं मासानुवादेनाग्निहोत्रादिकर्मण एव भावार्थाधिकरणन्यायेन विधेयतया विहितस्य विधानान्यथानुपपत्तेः प्राप्तवन्निर्देशाभावेन परप्रकरणपाठेन च पूर्वकर्मप्रत्यभिज्ञाविरहाच्च सिध्यति कर्मभेदः । ' पौर्णमास्यां यजेत ' ' सायं जुहोति प्रातर्जुहोति ' इत्यादौ कालोद्देशेन कर्मविधावपि न कर्मान्तरत्वमिति ' संनिधौ त्वविभागात् ' इत्यधिकरणेऽनुपदमेव वक्ष्यामः । तत्र मासस्यानुपादेयत्वेऽपि तत्र कर्मणोऽनुष्ठेयतामात्रेण कथंचिद्विधिसंस्पर्शात्परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणपारार्थ्यात्मकशेषत्वरूपमङ्गत्वमुपपाद्यम् । ननु मासाग्निहोत्रादिवाक्येषु प्रसिद्धाग्निहोत्रादिकर्मणः संनिधिकृतप्रत्यभिज्ञाविरहेऽपि नामधेयकृता तत्प्रत्यभिज्ञाऽस्ति । न च नाम्ना तद्विपरिवृत्तावपि तत्रानुपादेयस्य सिद्धवसंभवाद्विपरिवृत्तिरप्रयोजिकेति वाच्यम् । प्रसिद्धाग्निहोत्रादिकर्मणि मासविध्यसंभवेऽपि तस्यैव कर्मणो नाम्ना विपरिवर्तमानस्य कुण्डपायिनामयनैकदेशत्वेन विधिसंभवादिति चेन्न । प्रसिद्धाग्निहोत्रादिकर्मणः कुण्डपायिनामयनैकदेशत्वेन विधानेऽप्यग्निहोत्रादिशब्दस्य धात्वर्थमात्रनामधेयतया तेन भावनाया उपस्थित्यभावेन तद्भेदस्यापरिहार्यत्वात् । किं च मासं जुहोतीत्याख्यातवर्तिना धातुना स्वरसतो लिङ्गसंख्यान्वयानर्हसाध्यत्वरूपेण कर्मान्तरमभिधीयत इत्यग्निहोत्रादिनाम्नाऽपि साध्यरूपेणैव तदभिधेयं नाम्न आख्यातपरतन्त्रत्वात् । अतः कथं मासाग्निहोत्रादिवाक्येऽग्निहोत्रादिनाम्ना प्रसिद्धस्य कर्मण उपस्थितिः । अस्तु वाऽत्र नाम्ना सिद्धरूपेणोपस्थितिस्तथाऽप्याख्यातेन साध्यत्वेन प्रतीतस्य प्रसिद्धहोमस्य कथं तेनोपस्थितिः । न च नाम्ना तद्रूपोपस्थित्यभावेऽपि नैयमिकाग्निहोत्रादिशब्दो यद्रूपवाचकस्तद्रूपविपरिवृत्तिरस्त्विति वाच्यम् । किमर्थं हि प्रसिद्धाग्निहोत्रादिकर्मणो विपरिवृत्तिरिहोच्यते । विधिश्च सिद्धरूपस्य नाम्नोप-

स्थाप्यस्य न संभवति भावार्थाधिकरणे धात्वर्थविधिविषयाकारसमर्पणं धातुनैव न तु नाम्नेति प्रतिपादनात् । ततश्च सिद्धरूपस्य नाम्ना विपरिवृत्तिरिहानुपयुक्तैवेति न प्रसिद्धाग्निहोत्रादिकर्मणः कुण्डपायिनामयनैकदेशत्वेन विधिसंभवः । एवं च विध्यनर्हानुपादेयगुणश्रवणेन कर्मणो विधेयतया सिद्धवन्निर्देशाभावेन तद्विपरिवृत्यभावात्मके पूर्वकर्मासंनिधानापरपर्याये प्रकरणान्तरे सति मासाग्निहोत्रादिविधेरप्रकृतविषयतया प्रयोजनान्यत्वं कर्मभेदः सिध्यतीति सूत्रयोजना । न चैवमप्यनुपादेयगुणनिबन्धनत्वात्कर्मभेदस्य गुणात्कर्मभेद एव पर्यवस्यतीति वाच्यम् । विधीयमानो हि गुणः पूर्वकर्मण्यसंभवन्कर्म भिनत्ति । न चात्र मासगुणो विधानमर्हत्यनुपादेयत्वात् । एवं ' सरस्वत्या दक्षिणे तीर आग्नेयोऽष्टाकपालः पुरोडाशः ' इत्यादिदेशसंयुक्ते " सत्रायाऽऽगूर्य विश्वजिता यजेत " इत्यादिनिमित्तसंयुक्ते च वाक्ये द्रष्टव्यम् । प्रयोजनम्—पूर्वपक्षे प्रसिद्धाग्निहोत्रादिषु यावज्जीवादिकालैर्मासस्य विकल्पः कुण्डपायिनामयनेऽग्निहोत्राद्यननुष्ठानं च सिद्धान्ते तु तदुभयाभाव इत्याद्यूह्यम् । विस्तरस्तूच्चावचो वार्तिकादावनुसंधेय इति । तस्मात् सर्वस्मिन्विचार्यमाणे मीमांसितेषु वेदवाक्येषु न च मासगुणो नित्याग्निहोत्रेण विकल्पयितुं शक्य इति निरवद्यः शास्त्रीयः पन्थाः ।

अग्निहोत्रादिकर्मसु तत्र तत्राऽऽम्नाये सूत्रेषु चानुष्ठेयपदार्थेषु विकल्पं शृणुमस्तत्र यः को वा कल्प इच्छयैव भवत्विति प्राप्तमतस्तत्सम्यङ्मीमांस्यमित्ययमुपक्रमः । न खल्विच्छामात्रेण धर्मानुष्ठानमपि तु नियामकशास्त्रस्य सत्त्वाच्छास्त्रानुसारमनुष्ठानेन भवितव्यम् । आह च तदर्थमेव भगवानाचार्यः—

मतिर्बहुविदां पुंसां संशयान्नोपजायते ।
केचिदाहुरसावर्थः केचिदसावयं त्विति ॥
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ।

तदर्थं मीमांसया विकल्पपदार्थानुष्ठानं निर्णयामः ।

एवं हि विकल्पितपदार्थानां दिशो दर्शनम्—

१ दक्षिणाग्निमानीय विट्कुलाद्वा ।

२ आनन्तर्ये विकल्पः ।

३ अधिश्रितमध्यधिश्रितमधिश्रितं हिम् , ( इ् ) । इति ।

इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व ।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा ॥

४ स्रुवेण प्रतिषिञ्च्यान्न वा ।

५ प्रागुदगुत्तरतो वा ।

६ तूष्णीं स्वधा पितृभ्य इति वा ।

७ यवाग्वा पयसा वा ।

इत्यादयो विकल्पाः शतशो दृश्यन्ते न हि तत्र मीमांसनं विनाऽनुष्ठानं कर्तुं सुशकं सुशकं चेदपि न शास्त्रीयं भवति । केचन मीमांसका भगवतो जैमिनेः सूत्रमन्यथा व्याचख्युस्तत्प्रदर्श्य ततो यथार्थव्याख्यानं कुमारिलभट्टपादानां प्रदर्शयामः—

प्रक्रमाद्वा नियोगेन ( पू० मी० २ । ४ । २२ ) ।

वाशब्द एवार्थे । नियोगेन वैकल्पिकानां पदार्थानां प्रयोगादावेकतरनिर्धारणेनैव प्रयोगस्य प्रक्रमादुदिते होष्यामीति निर्धार्य प्रक्रान्तेऽग्निहोत्रप्रयोग उदयात्प्रागेवानुष्ठिते सति दोषः । एवमनुदिते होष्यामीति प्रक्रम्योदितहोमप्रयोगेऽपि । अत उभयथाऽपि प्रायश्चित्तविधानं कर्मैकत्वेऽप्युपपद्यते । अत्रोदितानुदितकालयोरन्यतरकालं प्रतिप्रयोगमादौ निर्धार्य प्रयोगक्रमो न तु सर्वप्रयोगादावेव सकृत्तन्निर्धारणम् ' यदि वैमृधं निर्वपेदन्वेव निर्वपेत् ' इतिवदत्र वचनाभावात् । प्रत्युत वाजसनेयके चातुर्मास्येषु साकमेधपर्वणि ' आनीकवते क्रीडिने च साकं सूर्येणोद्यता निर्वपति ' इति सूर्योदयकालिके कर्मणि प्रातरग्निहोत्रपूर्वोत्तरकालिकत्वयोरैच्छिकविकल्पानुवादो दृश्यते—अथ प्रातरहुते हुते वाऽग्निहोत्र इतरथा कामयेतेति । कल्पकाराणामप्ययमेवार्थोऽनुमतः । आपस्तम्बकात्यायनसत्याषाढादौ हि दाक्षायणयज्ञस्य दर्शपूर्णमासाभ्यामादिविकल्प उक्तः । सोऽयं दर्शपूर्णमासयोः प्रक्रमे विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेतेत्यादिना । तथा वैमृधविषयेऽपि ' तस्य याथाकामी प्रक्रमे प्रक्रमात्तु नियम्यते ' इत्यादिनाऽऽदिविकल्प उक्तः । धूर्तस्वामिभाष्ये च पुनः पुनः प्रक्रमनियमवचनाद्यत्र प्रक्रमनियमवचनं तत्रैव प्रक्रमनियमो नान्यत्र । तेनाग्निहोत्रादौ द्रव्यकालादीनां न प्रक्रमनियम इत्युक्तम् । ' होमकालः संकल्पयितव्यः कर्मादाविति च ' । तस्मादुदितानुदितकालयोर्न प्रक्रमनियमः ।

आदिविकल्पः [ का० श्रौ० सू० ४-१५४ ] ।

शाखान्तरादादित एवाऽऽरभ्याऽऽन्तांद्विकल्पः । आदावारम्भ एव विकल्पो यस्य स आरभ्यते न वेति । यद्यारभ्यते तदा यावज्जीवं क्रियत एव । तदुक्तम्—

रूपं कालोऽनुनिर्वापो देवता श्रपणं हविः ।
आदौ ये विधृताः पक्षास्त इमे सर्वदा मताः ॥ इति ।

अत्र त्रिकाण्डमण्डनाचार्यः—

रूपं कालोऽनुनिर्वापो देवता श्रपणं तथा ।
आदौ ये विधृताः पक्षास्त इमे सर्वदा स्मृताः ॥ इति ।

इमे पक्षाऽऽदौ प्रथमारम्भे ये पक्षा विधृतास्ते सर्वदा यावज्जीवं स्वस्वकालेऽनुष्ठेयाः । तानेवाऽऽह—रूपमिति । एतेषामुदाहरणानि देवयाज्ञिकादिभिर्भाष्यादिषु लिखितानि तान्येवोच्यन्ते—

१ रूपम्—दाक्षायणदर्शपूर्णमासस्वरूपादि ।
२ कालः—उदितानुदितादिः ।
३ अनुनिर्वापः—वैमृधादिस्विष्ट्यादिः ।
४ देवता—इन्द्रमहेन्द्रादिः ।
५ श्रपणम्—गार्हपत्य आहवनीये वा ।

अत्र सर्वत्राऽऽदिपदेनातिसदृशमेवोपादेयम् । अन्यथा कालशब्देन सद्यस्कालपक्षाहिकैकाहिकादिनक्षत्रादीनामपि नियमः प्रपद्येत । एवं रूपमित्यनेन सुसदृशं तत्कार्यकारि ग्राह्यम् । तच्च पूर्वोक्तम् । केचिद्रूपोदाहरणं द्यावापृथिवीयस्यैककपालमाज्यमित्याहुः । तच्चिन्त्यम् । कालादिसंपत्तौ कृतप्रायश्चित्तेष्टेस्तदभावे पूर्णाहुत्यसंभवापातात् । न चेष्टापत्तिः । व्यवस्थाशास्त्रमसमञ्जसं स्यात् । किंच तत्रापि गव्यत्वादिकमपि परिगृहीतं सुदुस्त्यजं स्यात् । समिद्द्रव्यादिष्वपि पर्णमयत्वादीनां पूर्वपरिग्रहापत्तेश्च । तथा च सर्वमशक्यारम्भणीयं च स्यात् । देवतायाः पुनर्विधानाच्च । न्यायस्य त्वगतिकगतिकत्वात्सर्वेभ्य इत्यत्रैव दध्ना तण्डुलैरक्षतैर्वेत्यादिपारस्करगृह्योक्तहोमद्रव्येषु गोभिलोक्तेषु च परिगृहीतलाभेऽपि कादाचित्कत्वं व्याहन्येत । न च सिद्धमिष्टम् ।

सायंहोमेषु यद्द्रव्यं प्रातर्होमेषु तद्भवेत् । इतियज्ञपार्श्वीयमण्डनादिषु वचनानर्थक्यापाताच्चेति दिक् ।

१ अन्ये तु रूपमित्यनेन क्रियारूपम् । अग्निष्ट इत्यद्भिरभिमृशति सकृच्चिर्वेत्यादि ।

२ कालरूपम्—उदितानुदितहोमिनोरप्यपूर्वक्षणरूपम् ।
३ मन्त्ररूपम्—प्रत्युष्टमित्यादि ।
४ देशरूपम्—प्राक्संस्थमुदक्संस्थादि ।
५ द्रव्यरूपम्—आज्यपुरोडाशादि ।

६ बर्हीरूपम्—कुशकाशादि।

७ समिद्रूपम्—पलाशोदुम्बरादि।

एवमन्यत्सर्वमाचमने प्राङ्मुखोदङ्मुखत्वादिकं वदन्ति ते परास्ताः। कालादीनां पृथगुपदेशवैयर्थ्यात्। अशक्यानुष्ठानप्रसङ्गाच्च।

**पूर्वैव योनिः पूर्वावृत्पुनराधानकर्माणि।**

इत्यादिवचनवैयर्थ्याच्चेति संक्षेपः।

अनेन केचन स्वपाण्डित्यख्यापनार्थं पुराणोक्तव्रतैकादश्यादियुगेषगेष्वग्निहोत्राद्यनुष्ठानं नानुतिष्ठन्ति ते तु शास्त्रबहिर्गता इति विद्वद्गोष्ठीनिवेशनानर्हा इत्यलं तदाचारविचारेण। अन्यत्सर्वमप्यग्निहोत्रविषये सूत्राम्नायमीमांसनाविरोधि यदनुष्ठानं तत्सूक्ष्मेक्षिकया विचार्यानुष्ठेयमिति विदुषांमतिगोचरः पन्थाः। इत्यलमतिविस्तरेण।

**इत्यग्निहोत्रमीमांसा।**

पक्षहोमशेषहोमसमस्यहोमानामनुक्तमन्यतो ग्राह्यमिति न्यायादस्मत्सूत्राविरुद्धत्वाद्भरद्वाजादिभिः सूत्रितत्वादापस्तम्बाश्वलायनाचार्यैरपीङ्कितेन सूचितत्वादापत्कालोपयोगिनां ग्रन्थे निबन्धनमिति मन्तव्यम्।

**अथ प्रवासविधिमीमांसनम्।**

आहिताग्निना प्रवासः कर्तव्यो वा न वेति चिन्तन आपदि कर्तव्य इति प्राप्नोति। कथमापदीत्येतत्समधिगतमुच्यते प्रवत्स्यन्नग्नीन्प्रज्वलयेत्याचार्यसूत्रम्। प्रवसति यजमाने नित्यहोमानुमन्त्रणप्रभृतयो विधयो लुप्यन्ते। न हि लोपः शास्त्रीयो भवति। तस्मादापदि प्रवासः। प्रवासकालनियमोऽस्ति वा न वा। अस्तीत्युच्यते। पर्वपर्यन्तं प्रवसितुं शक्यम्। पर्वणि तु स्वयं पर्वाणि जुहुयादित्युक्तत्वात्पर्वण्यवश्यं यजमानेन होतव्यम्। अन्यदपि महत्यामापदि प्राप्तायां पर्वण्यपि प्रवासः शक्यते। प्रवसत्यग्ने हविर्निर्वप्स्यामीत्यापस्तम्बाचार्येण सूत्रितत्वात्। ततोऽप्यन्ततो गत्वाऽपि महत्तमायामापदि प्राप्तायामासंवत्सरं प्रवासमर्यादा न ततः परम्। इयमनुज्ञाऽपि विमताऽस्ति तथाऽपि निर्दिशामः। तत्प्रामाण्यविषये भूमिदेवा एव नः प्रमाणम्।

**वृत्तिः**—अथ पवित्रेष्ट्यामधिकारिणमाह—

**सैषा संवत्सरमतिप्रवसतः। ( आ० श्रौ० सू० २। १३। )**

कर्तव्येति शेषः। यः संवत्सरमतीत्य प्रवासं करोति सोऽतिप्रवसंस्तस्यैषा कर्तव्येत्यर्थः। इह प्रवसत इति पुंस्त्वमुपलक्षणं पत्न्यामपि प्रवसन्त्यामिष्टत्वात्। तथा च बौधायनः—पथे एतत्सोऽपरिमितं प्रवसति। न संवत्सरमतिप्रवसतीत्येवेदमुक्तं भवति। स चेदतिप्रवसेत्पवित्रेष्ट्या यजेतेति। अथो एतत्सोऽपरिमितं प्रवसति न संवत्सरमतिप्रवसती-

त्यविशेषाज्जायापत्योराहिताग्न्योर्विज्ञायतेऽर्धो वा एष आत्मनो यत्पत्नी च । ऐतरेयब्राह्मणेऽपत्नीकस्याप्यग्निहोत्रानुष्ठानं नित्यमभिहितम् । तेन पत्न्याः सत्त्वे तस्याः प्रवासो न मीमांसाभिमत इति विचारसहम् ।

## अथ पिण्डपितृयज्ञमीमांसा ।

**पितृयज्ञः स्वकालविधानादनङ्गं स्यात् । ( आ० प० सू० ३६ । ख० २ । )**

क०—स्वस्य कालः स्वकालः स्वकालस्य विधौ पितृयज्ञो नामामावास्यायामनारभ्याधीतस्तस्य स्वकालो विधीयते । अग्निष्टोमे प्रकृणक्रीतिवन्न कर्मसंबन्धः । अतः ' तस्मात्पितृभ्यः पूर्वेद्युः क्रियते ' इति कालमात्रविधानादनङ्गं स्यात् ।

ह०—पितॄणां यज्ञः पितृयज्ञः । अत्र पिण्डपितृयज्ञः पितृयज्ञ इत्यभिधीयते । 'तस्मात्पितृभ्यः पूर्वेद्युः क्रियते ' इति दर्शपूर्णमासप्रकरणे दर्शनात् । कर्ममध्यवर्तित्वादङ्गत्वे प्राप्त इदमुच्यते—अनङ्गं पिण्डपितृयज्ञः स्यात् । कुतः स्वकालविधानात् । अमावास्यायामपराह्णे पिण्डपितृयज्ञ इति । न ह्यङ्गत्वे पृथक्कालो विधीयते यथा प्रयाजादेः ।

**तुल्यवच्च प्रसंख्यानात् । ( आ० श्रौ० प० सू० ३७ । ख० २ । )**

क०—दर्शपूर्णमासाभ्यां सह तुल्यवत्प्रसंख्यानाद्गणनात्तद्वदेवानङ्गम् । एवं श्रुतिः—चत्वारो महायज्ञा अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पिण्डपितृयज्ञ इति । एवं तुल्यवत्प्रसंख्यानान्नाङ्गम् ।

ह०—तुल्य इव तुल्यवत् । प्रसंख्यानं परिगणनं परिगणनादित्यर्थः । एवं हि श्रूयते—' चत्वारो वै महायज्ञा अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पिण्डपितृयज्ञ इति ' । यद्वा प्रसंख्यानं विधानम् 'अप्यनाहिताग्नेः' इत्याहिताग्नेरनाहिताग्नेश्च तुल्यवद्विधानादित्यर्थः । अत्र ह्यनाहिताग्नेर्व्यक्तमनङ्गं पिण्डपितृयज्ञ इति । तद्वदेवाऽऽहिताग्नेरपीति ।

**प्रतिषिद्धे च दर्शनात् । ( आ० श्रौ० प० सू० ३८ । ख० २ । )**

क०—प्रतिषिद्धेऽमावास्यायागे पिण्डपितृयज्ञो दृश्यते पौर्णमासीमेव यजेत नामावास्यां पिण्डपितृयज्ञमनुवदंस्तदनङ्गं दर्शयति ।

ह०—एवं हि शाखान्तरे श्रूयते ' पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां पिण्डपितृयज्ञमेवामावास्यायां कुरुते ' इति दर्शे प्रतिषिद्धेऽपि पितृयज्ञमनुवदन्ननङ्गभावं दर्शयति । अनङ्गत्वाच्च कुण्डपायिनामयने न क्रियते नक्षत्राधानानन्तरे च दर्शेऽपि क्रियते । अदृष्टचन्द्रायां प्रतिपद्यपराह्णे क्रियत इति प्रयोजनानि । तत्राऽऽहवनीयस्य न प्रणयनमर्थाभावात् । नित्यश्चायं पिण्डपितृयज्ञः ' मासि पितृभ्यः क्रियते ' इति श्रुतेः । मासि मासि पितृभ्यः क्रियत इत्यस्याः श्रुतेरर्थोऽवधार्यते । ' तस्मादहरहर्मनुष्याः ' इति वीप्साधिकारे

श्रूयमाणत्वात् । वीप्सायां च नित्याधिकारो गम्यते । यथा—'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति नित्येष्वपि स्वर्गफलं केचन मन्यन्ते ।

**पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥ तुल्यवत्प्रसंख्यानात् ॥२०॥ प्रतिषिद्धे च दर्शनात् ॥ २१ ॥ ( शास्त्र० अ० ४ पा० ४ अ० ८। )**

**क्रत्वङ्गं स्यान्न वा पिण्डपितृयज्ञः क्रतौ हि सः ।**
**अमावास्योक्तितो नैवं तत्कालोक्तेः पुमर्थता ॥ ११ ॥**

अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यनारभ्याधीतः पिण्डपितृयज्ञः क्रत्वर्थ उत पुरुषार्थ इति संशये कर्मवचनेनामावास्याशब्देन समभिव्याहारात्तदङ्गत्वम् । यद्यपि कालस्यापि साधारणोऽयं शब्दस्तथाऽपि फलकल्पनापरिहाराय कर्मवाचितैवाङ्गी क्रियते । तस्मात्क्रत्वर्थ एवायमाहिताग्नेः । अनाहिताग्नेरप्यनाहिताग्निना कार्य इति विहितः । तस्य क्रत्वभावाद्भवतु पुरुषार्थः । तथा च भगवता मनुना 'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः' इति वदता दर्शाङ्गत्वं प्रदर्शितम् । अनङ्गं हि तेन विना क्रियते तस्माद्दर्शाङ्गम् ।

**नैवं साधारणत्वेऽपि सामानाधिकरण्यतः ।**
**कालवाचित्वमेव स्यात्तत्सापेक्षश्च कर्मणि ॥**

यद्यपि तावत्साधारणोऽमावास्याशब्दस्तथाऽप्यपराह्णसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते । न चायमतीतसाधारणः । काले हि निरपेक्षोऽयं कालसंबन्धापेक्षया तु कर्मणि वर्तते । तस्मात्कर्मसमभिव्याहाराभावादनङ्गम् । मनुवचनस्य त्वयमर्थः—श्राद्धशब्देन मासि मासि श्राद्धमुच्यते । दर्शशब्देनाप्यमावास्याकालः । तदयमर्थः—अमावास्यायामेवाऽऽहिताग्निः श्राद्धं कुर्यान्न तेन विना सर्वेष्वेवापरपक्षाहःसु क्रियमाणः पितॄन्प्रीणातीति स्मृत्यन्तरवशादन्येष्वप्यहःसु कुर्यादिति । एवं च स्मृत्यन्तरमनाहिताग्निविषयं भविष्यति । तत्सिद्धं पिण्डपितृयज्ञस्यानङ्गत्वम् ।

अथाऽऽग्रयणमीमांसा ।

यद्यपि पूर्वमाग्रयणमीमांसा प्रादर्शि तथाऽपि कश्चित्तच्छेषभूत एव भागः प्रदर्श्यते—

**अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि । ( शा० ३४ । अ० १२ । पा० २ अ० १४ । )**

**बर्हिराग्रयणे किंचित्प्रसूनं वा बहुत्वतः ।**
**प्राथम्याच्चाग्रिमो नैवमलोपात्कांस्यभोजिवत् ॥ १९ ॥**

आग्रयणेष्टयामैन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींषि तत्र द्यावापृथिव्यस्य वैश्वदेवविकृतित्वाद्द्यावापृथिव्यविकारित्वात्प्रसूनं प्राप्तमैन्द्राग्नादेश्च प्रसूनमप्रसूनं वा बर्हिर्मात्रं तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपादेयमुत प्रसूनमेवेति संशये मुख्यत्वाद्भूयस्त्वाच्चानियम एव युक्तः ।

मेवम् । न ह्यनियमो नाम किंचिदङ्गं यदनुगृह्येत बर्हिर्मात्रं त्वङ्गं तच्च सूनोपादानेऽप्यविरुद्धमिति न कस्यचिद्वैगुण्यम् । अनियमे तु द्यावापृथिवीयस्य वैगुण्यं स्यात् । न चावैगुण्यसंभवे तद्युक्तम् । तस्मात्प्रसूनमेव स्यात् ।

**तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥ न वाऽविरोधात् ॥ ३६ ॥ अशास्त्रलक्षणाच्च ॥ ३७ ॥ ( शा० अ० १२ पा० २ अ० १५ । )**

**द्यावापृथिव्यस्तन्त्री स्यात्सर्वे वा तन्त्रिणोऽग्रिमः ।**
**प्रेषन्यायात्प्रसूनस्य तन्त्रित्वापादकत्वतः ॥ २० ॥**
**प्रसूनत्वं नोपदिष्टमविरोधात्समाश्रितम् ।**
**तन्त्रित्वनियतौ शक्तं नातः सर्वेऽत्र तन्त्रिणः ॥ २१ ॥**

एवं तर्ह्यनेनैव द्यावापृथिव्यतन्त्रलिङ्गभूतेन बर्हिषां सर्वमेवेदं द्यावापृथिवीयं तन्त्रमैन्द्राग्नादेस्तु तदेव तन्त्रं प्रसज्यतेऽतो विरुद्धेष्वपि धर्मेषु द्यावापृथिवीय एव स्यात् । नह्येतदैकान्तिकं द्यावापृथिवीयतन्त्रलिङ्गं साधारणमिदमविरोधात्संगृहीतं न त्वनेन द्यावापृथिव्यं तन्त्रं नियन्तुं शक्यम् । तस्मात्सर्वे तान्त्रिण इति विरुद्धेषु धर्मेषु ऐन्द्राग्नादिधर्मः कर्तव्यो मुख्यभूयस्त्वाभ्यामिति । अत्राऽऽहिताग्नेः कश्चिदापत्कालिकत्वेन समुपस्थितः कल्पो गृह्यसूत्रोक्तः समुल्लिख्यते—पूर्वं स्थालीपाकः कार्य इति तावदापस्तम्बाचार्येण सूत्रितं तथाऽऽश्वलायनाचार्योऽपि सूत्रयांबभूव तत्प्रदर्श्यते—

**सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयणस्थालीपाकः । अनाहिताग्नेरपि शालाग्नौ । ( आ० गृ० सू० २ । २ । ४—५ । )**

**भाष्यम्**—सजूर्ऋतुभिरित्येवमादयस्त्रयो मन्त्राः । एतैराहिताग्नेराग्रयणस्थालीपाको भवति । आहिताग्निवचनं किमर्थम् । विशेषादाहिताग्नेश्चानाहिताग्नेश्च भविष्यति । यथा श्रवणकर्मोच्यते । यथाऽऽहिताग्नेर्न विधीयते त्रेतायामाग्रयणस्थालीपाको न स्यात् । कस्मादाग्रयणस्य विहितत्वात् । अथ कोऽयं स्थालीपाको भवति । आहिताग्निरिति त्रेतायामिति वर्णयन्ति । तत्र न प्राप्नोति कस्मादेकाग्निप्रकरणे विहितत्वात् । उच्यते—प्रकरणं बाधित्वा त्रेतायामेव भवति । भवति किं कारणम् । अनाहिताग्नेः शालाग्नाविति नियमोपदेशात् । शास्त्रान्तरदर्शनाच्च । "गार्हपत्ये स्थालीपाकं श्रपयित्वाऽग्नये देवताभ्यः स्विष्टकृच्चतुर्थीभ्यः" इति । तस्मात्त्रेतायां भवति । तत्रैव वक्तव्य इह विधानमेतत्प्रयोजनं पाकयज्ञप्राप्त्यर्थम् । आहिताग्नेरपि शालाग्नावनाहिताग्नेश्च शालाग्नावाग्रयणस्थालीपाको भवति । अथ

शालाग्नौ वचनमपार्थकम्। कस्मादशालाग्नेर्भविष्यति । कर्मणः प्राप्तत्वात्। शालाग्निर्गृह्य इत्युच्यते। एवं सिद्धं शालाग्निग्रहणं वाऽऽग्रयणं ज्ञापयति। पूर्वविधानं शालाग्नौ भवतीति। तेन त्रेतायां तत्सिद्धं भवति। एतेनैते सर्वे पक्षा अग्निहोत्रहोमादय आग्रयणस्थालीपाकान्ता आहिताग्नेर्विकल्प्यन्ते । कस्मादेकार्थत्वात्। अनाहिताग्नेश्चाऽऽग्रयणस्थालीपाको गृह्यत एवं भवतीति सिद्धम्।

**ना० वृ०**—अविशेषादाहिताग्नेरपि सिध्यति श्रवणाकर्मादिवत्। आहिताग्निग्रहणं किमर्थम्। अत्र ब्रूमः—आहिताग्नेराग्रयणान्तरस्य विहितत्वादेतदाग्रयणं न प्राप्नोति। तस्मादाहिताग्निग्रहणम्। अयं चाऽऽपत्काले द्रष्टव्यः । इदं चास्य त्रेतायां भवति नौपासने। तत्तु साधयिष्यामः। शाखान्तरे च दृश्यते 'आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थभ्यः' इति। तस्मात्त्रेतायामिति सिद्धम्। इह तु विधानं पाकयज्ञधर्मप्राप्त्यर्थम्।

## अनाहिताग्नेरपि शालाग्नौ ।

**वृत्तिः**—अनाहिताग्नेरप्याग्रयणं कार्यम्। तच्च शालाग्नौ भवति। शालाग्निर्नामौपासनः। तर्हि शालाग्निग्रहणमपार्थकम्। सत्यम्। नियमार्थं तु तत्। अनाहिताग्नेरेवौपासन इति। तेनाऽऽहिताग्नेस्त्रेतायामिति सिद्धम् । स्विष्टकृतं हुत्वा चरोरेकदेशं गृहीत्वा सव्ये पाणौ कृत्वा दक्षिणेनाभिमृशेत् 'प्रजापतये त्वा' इति मन्त्रेण। ततः 'भद्रान्नः श्रेयः' इति प्राश्य तत आचम्य तत्रैवाऽऽसीनो नाभिमालभेत 'अमोऽसि' इति। पत्नी हविःशेषं प्राश्नाति तूष्णीम् । होमशेषं समापयेत् । एतत्प्राशनमाग्रयणद्वयेऽपि भवति। सौकर्यार्थमिदमत्र लिखितम्। इदं चाऽऽग्रयणं यदा वर्षस्य तृप्तः स्यात्तदा भवति शरदीत्यर्थः। तथा च वचनम्—'शरदि व्रीहिभिर्यजेत' इति । तत्र च पर्वाणि भवति। यवाग्रयणं च न कार्यम्। श्यामाकैस्तु प्रस्तरं कुर्यान्नाऽऽग्रयणं दृष्टत्वात्। अपि वाऽत्र समानतन्त्रं कुर्यात्सौम्यं चरुम्। अस्य च नामधेयेन होमः। आग्रयणस्थालीपाक इत्यत्र च विशेषणसमास आग्रयणं चासौ स्थालीपाकश्चेति। तत्र स्थालीपाकग्रहणस्येदं प्रयोजनम्। अनाहिताग्नेः स्थालीपाक एव कार्यः। अग्निहोत्री वै नानादयित्वेत्ययं पक्षः कार्य इति।

## आहिताग्नेराग्रयणानुकल्पस्थालीपाकप्रयोगः ।

संस्कारमीमांसायां प्रदर्शितरीत्या पार्वणस्थालीपाकोक्तरीत्या गार्हपत्ये समित्त्रयं हस्ते गृहीत्वाऽस्मिन्गार्हपत्ये जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाऽऽघारदेवते. आज्येनाग्नीषोमावाज्यभागावाज्येनात्र प्रधानम्—इन्द्राग्नी विश्वान्देवान्द्यावापृथिवी च चरुद्रव्येण शेषेण स्विष्टकृतमग्निं प्रजापतिं प्रायश्चित्तदेवतामाज्येन सद्यो यक्ष्ये । ततः परिसमुह्य परिस्तीर्य (पुरस्ताद्दक्षिणतः पश्चादुत्तरत एवं क्रमेण) तूष्णीं पर्युक्ष्य पूर्णपात्रमग्नेरुत्तरतो निधाय तूष्णीं-

चतुरश्चतुरो मुष्टीन्प्रतिदैवतं निरुप्य तथैव प्रोक्ष्यावहत्य त्रिः शुक्लीकृत्य त्रिः प्रक्षाल्य पात्रे सुशृतं चरुं पचेत्। ततः—

**सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः।**

इति सकृन्मन्त्रेण द्विस्तूष्णीमाज्यमुत्पूय ( अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानाऽन्तयोर्गृहीत्वा ) शृतं हविः स्रुवगृहीतेनाऽऽज्येनाभिघार्योदगुद्वास्य बर्हिष्यासाद्य स्रुवगृहीतेनाऽऽज्येनेध्ममभिघार्य

**अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा।**

**जातवेदसेऽग्नय इदं न मम।**

इतीध्ममग्नावाधाय ततः स्रुवेणाऽऽज्यमादायाऽऽघारावाघार्य स्रुवेणाऽऽज्यमादाय—

**अग्नये स्वाहा अग्नय इदं न मम।**
**सोमाय स्वाहा सोमायेदं न मम।**

इत्याज्यभागौ हुत्वा पात्रान्तरे चरुमुद्धृत्य पृथक्कृत्य ( नात्राभिमर्शः ) अवदानधर्मेणावदाय

**सजूरृतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा।**
**इन्द्राग्निभ्यामिदं न मम।**
**सजूरृतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा।**
**विश्वेभ्यो देवेभ्य इदं न मम।**
**सजूरृतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहा।**
**द्यावापृथिवीभ्यामिदं न मम।**
**यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्।**
**अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे।**

**अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्त्समर्धय स्वाहा।**

**स्विष्टकृतेऽग्नय इदं न मम।**

इति स्विष्टकृतं हुत्वा चरोरेकदेशं गृहीत्वा सव्ये पाणौ कृत्वा दक्षिणेन पाणिनाऽभिमृशेत्। तत्र मन्त्रः—

**प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय।**

ततो भक्षयेत् । तत्र मन्त्रः—

**भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा ।**
**स नो मयोभूः पितवाविशेह शं नो भव द्विपदे शं चतुष्पदे ॥**

तत आचम्य तत्रैवाऽऽसीनो नाभिमालभेत । तत्र मन्त्रः—

**अमोऽसि प्राण तदृतं ब्रवीम्यमाऽसि सर्वानसि प्रविष्टः ।**
**स मे जरां रोगमपनुद्य शरीरादमा म एधि मा मृथाम इन्द्र ॥**

इति नाभिमुपस्पृश्याप उपस्पृशेत् । ततः पत्नी हविःशेषं नाश्नाति तूष्णीम् । ततः—

**भूर्भुवः स्वः स्वाहा । प्रजापतय इदं न मम ।**

इति प्रायश्चित्ताहुतिं स्रुवेणाऽऽज्यद्रव्यकां हुत्वा पूर्णपात्रमभिमृशन्तीं वाचयेत् । तत्र मन्त्रौ—

**पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः । अक्षितिरसि मा मे क्षेष्ठाः ।**

पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयंस्तां वाचयेत्—

**माऽहं प्रजां परासिचं या नः सयावरी स्थ न ।**
**समुद्रे वो निनयानि स्वं पाथो अपीथ-॥**

तत उपतिष्ठेत—

**ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च ।**
**यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः ॥**

इत्युपस्थायाऽऽचम्यानेनाऽऽग्रयणानुकल्पस्थालीपाकेन कर्मणा भगवानग्निरूपी परमेश्वरः प्रीयताम् । आचामेत् ।

## मन्त्रभाष्यम् ।

**सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा ।**

**भाष्यम्**—हे, आहुते त्वमृतुभिर्वसन्तादिभिः सजूः समानप्रीतिरसि । वसन्तादीनां प्रीतिस्तादृशी तवेत्यर्थः । एवमुत्तरत्रापि सजूःशब्दो योज्यः । विविधं जगद्दधति पोषयन्तीति ब्रह्मादयो विधास्तैर्विधाभिः । एवमग्रे योज्यम् । अन्येषां मन्त्राणां भाष्यमाग्रयणमन्त्रभाष्ये कृतमेव । अवशिष्टानां संस्कारमीमांसायां प्राकाशि । इति ।

इति मन्त्रभाष्यम् ।

---

# अथ प्रायश्चित्तमीमांसा ।

भगवतः पाणिनेर्गणसूत्रेणास्य शब्दस्य साधुत्वम् । तथा च गणसूत्रम्—

" प्रायस्य चित्तिचित्तयोः " ।

प्रायश्चित्तिः, प्रायश्चित्तम् । तथा च प्रायशब्दः—

" प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम् " ।

इति स्मृतेः पापवाची " प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते " इतिस्मृतेः प्रायस्येति निर्देशाच्चाकारान्तः पुंलिङ्गस्तपोवाची च ।

तथा च भगवानापस्तम्बः—

" श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते " ( आ० श्रौ० सू० ९ । १ । १ ) ।

सूत्रं त्वेवमवीवृतद्रुद्रदत्तः—

**वृत्तिः**—उक्तानि सोमादर्वाञ्चि नित्यानि कर्माणि यान्याह हविर्यज्ञप्रकृतीन्याचक्षुराचार्याः । तेषामिदानीं प्रायश्चित्तवचनमारभ्यते—श्रुतिलक्षणमिति । श्रुतिर्लक्षणं यस्य तच्छ्रुतिलक्षणं दोषनिर्हरणार्थं कर्म प्रायश्चित्तमित्याख्यायते । विधीयत इति विधिः कर्म । तस्य च पुरुषप्रमादादिप्रभवो दोषोऽपराधः । स च कर्मणो वैगुण्यं कार्यशक्तिवैकल्यमिति यावत् । तदयमर्थः—कर्मदोषे निमित्ते श्रुतिप्रमितं प्रायश्चित्तमुपदिश्यत इति । ननु सर्वस्याप्युक्तवक्ष्यमाणस्य श्रुतिलक्षणत्वे केन विशेषेणोक्तं श्रुतिलक्षणं प्रायश्चित्तमिति । सत्यम् । उक्तवक्ष्यमाणेभ्यो नास्ति विशेषस्तथाऽपि पुरुषार्थेभ्यः प्रायश्चित्तेभ्यः क्रत्वर्थानां विशेषमनेन दर्शयित्वाऽऽदरविशेषार्थं पुरुषापराधे महापातकादौ स्मृतिलक्षणमेव प्रायश्चित्तम् । कर्मापराधे तु साक्षाच्छ्रुतिलक्षणमिति । अथवा यत्पुरुषापराधप्रायश्चित्तं स्मृतिलक्षणं तद्धर्मेषु विधायिष्यते । कर्मापराधप्रायश्चित्तं त्विदानीं श्रुतिलक्षणत्वाद्विधीयत इत्यर्थः ।

' एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्नर्थान्तरत्वात् ' ( आप० श्रौ० सू० ९ । १ । २ ) ।

**वृत्तिः**—यत्रैकस्मिन्निमित्तेऽनेकानि प्रायश्चित्तान्याम्नायन्ते यथा दर्शपूर्णमासातिपत्तौ पथिकृती वैश्वानरी चेत्यादि तानि तत्र समुच्चीयन्ते न तु विकल्प्यन्ते । कुतः—

अर्थान्तरत्वात्प्रयोजनान्यत्वात्। व्रीहियववदेकार्थानि विकल्प्यन्ते न तु व्रीह्याज्यादिवद्भिन्नार्थानि। ननु दोषनिर्घातमेषामर्थं वक्ष्यति दोषनिर्घातार्थानि भवन्तीति स चैक एव सर्वेषामेकार्थ्याद्विकल्प एव शोभते। अत्र वदामः– स्थितमिदं तावन्न्यायविदां यन्निमित्ते कर्माङ्गानि (णि) प्रायश्चित्तानीति। तत्र चैकस्मिन्निमित्तेऽनेकेषामुपदेशात्तेषां चामीषां युगपदेकप्रयोगविधिपरिग्रहाद्दोषनिर्घातस्य चादृष्टरूपत्वेन व्रीहियवादिवदेकैकस्य तत्साधनसामर्थ्ये प्रमाणाभावाच्च पानलेपविरेकैरिव पाप्मानमपघ्नद्भिरवान्तरकार्यभेदेन समुच्चितैरेव सर्वैर्दोषो निर्हण्यत इति गम्यते। तस्मात्सूक्तमर्थान्तरत्वात्समुच्चीयत इति। स्यान्मतं वाक्यतस्तेषामेकैकस्य नैरपेक्ष्यावगमान्न समुच्चयसिद्धिरिति। तदपि मन्दम्। अश्वेन याति दीपिकया यातीत्यादिवत्स्वसाध्यांशनैरपेक्ष्येणापि तदुपपत्तेः। इतरथाऽजया क्रीणाति हिरण्येन क्रीणाति धेन्वा क्रीणातीत्यत्र क्रयद्रव्याणामपि समुच्चयासिद्धेश्च। तस्मान्न काचित्समुच्चयानुपपत्तिः। यानि तु शाखान्तरीयत्वेनोपन्यस्तानि सूत्रकृता तत्र विकल्प एव। यथा—देवाञ्जनमगन्यज्ञ इत्येकेषामित्यादौ। यत्र तु सामान्यविशेषभावेनोपदेशस्तत्र पुनर्बाध एव सामान्यस्य। यथा—अस्कान्द्यौरिति स्कन्नाभिमन्त्रणस्य यदद्य दुग्धमित्यभिमन्त्रणेनेत्यादि। समुच्चीयन्तां कामं प्रायश्चित्तानि तान्येव तावद्व्याख्यायन्तामिमानि नामामूनीति। तत्राऽऽह—

'जपो होम इज्या च'। (आप० श्रौ० सू० ९।१।३।)

**वृत्तिः**—चः प्रकारवचनोऽन्यान्यप्यनुमन्त्रणोपस्थानोपसमिन्धनपुनराधानादीनि संगृह्णाति। तेषामपि प्रायश्चित्तत्वेन वक्ष्यमाणत्वात्। त्रितयोदाहरणं तु तेषां प्राधान्यख्यापनार्थं बाहुल्याभिप्रायं चेति द्रष्टव्यम्। सन्त्वेतानि प्रायश्चित्तानि समुच्चीयन्तां चार्थान्यत्वात्। कस्मै पुनरर्थाय तानि क्रियन्तेऽत आह—

'दोषनिर्घातार्थानि भवन्ति'( आप० श्रौ० सू० ९।१।४।)

**वृत्तिः**—दोषः कर्मणो वैगुण्यमित्युक्तम्। तन्निर्घातेन कर्मण उपकुर्वन्ति कार्यशक्तिमविकलां कुर्वन्तीत्यर्थः। कथं पुनरेतेषां तादर्थ्यमिति चेत्—एतस्मिन्वैगुण्य एतत्कर्तव्यमित्युक्ते तत्समाधानस्यापेक्षितत्वाद्वैगुण्यपरिहारार्थमेव तदवसीयत इति भावः। अस्त्वेषां दोषनिर्घातः फलं कालोऽप्येषां व्याकरणीयः। किं कर्मकाल एव कर्तव्यानि उतापवृक्ते कर्मण्यहोस्विदिष्ट्यादेः पर्वाद्यपेक्षत्वात्स स कालः प्रतीक्षणीय इति। तत्राऽऽह—

'अनन्तरं दोषात्कर्तव्यानि' ( आप० श्रौ० सू० ९।१।५।)

**वृत्तिः**—क्षतादिचिकित्सावदनन्तरं दोषादेतान्यनुष्ठितान्येव दोषं निर्हण्युर्नान्यथेति भावः। एतेन प्रायश्चित्तविधानस्याप्पृतुनक्षत्राद्यनपेक्षत्वं व्याख्यातम्।

**'निर्हृते दोषे पुनः कृत्स्नं कर्म' ( आप० श्रौतसू० ९ । १ । ६ । )**

**वृत्तिः**—एवं प्रायश्चित्तेन निर्हृते दोषे ततः कर्मशेषः कार्य इत्यर्थः । यदप्यकृतमयथाकृतं वा (सत) कृते प्रायश्चित्तेऽङ्गं प्रधानं वा तदपि यथा क्रियेतेत्युक्तं कृत्स्नमिति । तत्राङ्गमपवृक्ते कर्मणि न क्रियते प्रधानानुपकारात् । द्रव्यसंस्कारस्तु परतो द्रव्योपयोगान्न क्रियते तदर्थत्वात् । प्रधानमप्यपवृक्तकालं न क्रियतेऽकाले कृतस्याकृतत्वात् । गौणकाले तु क्रियत एव मुख्याभावे गौणस्यापि ग्राह्यत्वात् । तेनार्वाक्परपर्वणः क्रियैव दर्शपूर्णमासयोस्तच्च परस्ताद्दर्शयिष्यामः । केचित्तु व्याचक्षते-निर्हृते दोषे पुनः कर्म कृत्स्नं भवति सकलं भवति फलदानसमर्थं भवतीति । ननु निर्हृतदोषमपि कर्म दोषागमविकलशक्तिकं सत्कथं कार्याय कल्पयिष्यते न हि शल्यप्रवेधापादेन खञ्जः समुत्खातशल्योऽपि पन्थानं प्रतिपद्यते । तेन प्रयुक्तस्य कर्मणोऽपार्थकत्वात्पुनः प्रयोगेण भवितव्यम् । अत आह—

**'तस्य नावचनात्पुनः प्रयोगः । ( आप० श्रौ० सू० ९ । १ । ७ । )**

**वृत्तिः**—तस्य सकृत्प्रयुक्तस्य कर्मणो नर्ते वचनात्पुनः प्रयोगो भवति । भवत्येव तु वचनात् । यथा—" **अन्यां दुग्ध्वा पुनर्होतव्यमथान्याभिष्टिमनुल्बणां तन्वीत** " इत्यादौ । को ह्यदृष्टार्थस्य कर्मणः कार्याकार्यते शक्त्यशक्ती वा जानीयात् । नो खल्वन्धो रूपविशेषान्पश्यति । तस्माद्यस्य शास्त्रमेव पुनः प्रयोगं शास्ति कामं तत्र प्रयोक्ष्यते प्रत्येष्यते च तस्य पङ्गोरिव कार्यशक्तिः । यत्र तु न शास्त्रमस्ति कुतस्तत्र पुनः प्रयोगः । प्रत्येष्यते तु तत्र प्रयुक्तस्यैव कर्मणश्चिकित्सितपटलस्येव चक्षुषः कार्यशक्तिरित्यलं प्रसङ्गेन । इति वृत्तिः ।

एतत्सर्वं मनसि निधाय श्लोकमाबभूव मण्डनाचार्यः—

**प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।**
**कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥**

साक्षाच्छ्रुत्या विहितं प्रायश्चित्तं तु प्रायश्चित्तप्रकरणे दर्शितमस्माभिरैतरेयब्राह्मणमुदाहृत्येति न पुनस्तद्विषये प्रयत्यते ।

इदानीं जैमिनीयतन्त्रस्थः प्रायश्चित्तविचारः प्रस्तूयते—

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः । ( जैमिनीयतन्त्रे १२ । ३ । १६ )**

**दीपिका**—यानि प्रायश्चित्तानि कर्मवैगुण्ये निमित्ते विधीयन्ते, यथा—" यद्युक्ते

यज्ञ आर्तिमियाद्भूः स्वाहेति गार्हपत्ये जुहुयात्, योऽमावास्यां पौर्णमासीं वाऽतिपातयेदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्योऽमावास्यां पौर्णमासीं वाऽतिपातयेद्वैश्वानरं द्वादशकपालं निर्वपेत् " इत्यादीनि वैगुण्यसमाधित्सायां विधानात्समाधानार्थानि । यान्येकस्मिन्वैगुण्ये विधीयन्ते पथिकृद्वैश्वानरादीनि तेषां विकल्पसमुच्चयचिन्तायामदृष्टार्थत्वात्समुच्चयप्राप्तावेकैकेन वाक्येन वैगुण्यसमाधानाय निरपेक्षविधानाद्विकल्पः ।

सूत्रार्थस्त्वेवम्—प्रायश्चित्तेषु यस्मान्निष्पन्नेन वैगुण्यरूपनिमित्तेन योगस्तस्मादेकार्थ्यं, ततश्चैकेन सर्वस्य वैगुण्यस्य निर्घात इति विकल्प इति । अत्राऽऽपस्तम्बाचार्यः समुच्चयं सूत्रयांबभूवेति प्रादर्शयं प्रागेव । इदानीं तु शिष्टसमाचारो मीमांसकमतेनोभयोः प्रायश्चित्तयोर्विकल्प एव । वस्तुतस्तु प्रयोगशास्त्रानुसारं समुच्चय एवेष्टव्यो याज्ञिकप्रवरैः । अत्र विद्यारण्याः—

**वैश्वानरे पाथिकृते साहित्यं वा विकल्पनम् ।**
**साहित्यं स्याददृष्टाय विकल्पः स्यात्समाधये ॥**

**समुच्चयस्त्वदोषार्थेषु । ( जै० त० १२ । ३ । १७ )**

**दीपिका**—यानि पुनर्न दोषनिर्घातार्थानि निमित्ते कर्माङ्गानि(णि) भिन्ने जुहोतीत्यादीनि तेषां प्रयाजादिवदपर्यायविधानात्समुच्चय इति प्रत्युदाहरणमात्रमेतत् ।

अत्र विद्यारण्याः—

**भिन्नस्कन्नादिहोमादेर्विकल्पो वा समुच्चयः ।**
**विकल्पः पूर्ववन्नैवमदोषे विहितत्वतः ॥**

एतदेव सूत्रं सुबोधिन्यामन्यथापाठं स्वीकृत्य व्याख्यातम् । तद्यथा—

**समुच्चयस्त्वदोषोऽर्थेषु । ( १२ । ३ । १७ )**

**सुबोधिनी**— यत्र यादृशानिमित्ते क्रतुवैगुण्यं पुरुषस्य प्रत्यवायो वा न श्रूयते किंतु कर्तव्यतामात्रं श्रूयते तादृशकर्मणां प्रयाजादिवदङ्गत्वमात्रावगमात्समुच्चय इति पूर्वाधिकरणापवादमात्रम् । अस्योदाहरणं शास्त्रदीपिकायां भिन्ने जुहोति, स्कन्ने जुहोतीति । भाष्ये तु यस्याहुतेऽग्निहोत्रमहुतं सूर्योऽभ्युदेति, अनुद्धृतेऽभ्युदियाद्वेति, उभयत्रापि भेदनस्कन्दनादिरूपनिमित्तभेदाद्द्वयोः समुच्चयस्य सिद्धत्वेनानेन सूत्रेणानुवादमात्रं कृतमिति बोध्यम् ।

**प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ।**

( जैमिनीयतन्त्रे ९ । ४ । २८ । )

**दीपिका**—अग्निहोत्रे श्रूयते—

'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्'।

इति । तत्र संशयः—यदा दर्शार्थेनोद्धृतोऽग्निरग्निहोत्रकाल उद्वाति किं तदा ज्योतिष्मतीष्टिः कर्तव्या नेति । तदर्थमिदं विचार्यते—किमग्निविशिष्टोद्वाननिमित्तमिदं कर्माग्निहोत्रस्याऽऽरादुपकारकमुतोद्वानपरीताग्निनिमित्तं तस्यैवाग्नेरुत्पादकं सामवायिकमिति । किं प्राप्तम्—

'उद्वायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम् ।
वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया'॥

यदा हि वाक्यगम्याग्निनिमित्तत्वातिरस्कारेण पदश्रुत्योद्वानस्य निमित्तता तदोद्वानस्य क्रत्वनङ्गत्वेनासंस्कार्यत्वादग्नेस्तु विशेषणत्वेन कार्यान्वयाभावादारादुपकारकत्वमेवेतिनिमित्तस्य च प्रकरणेन विशेषणासंभवाद्दर्शार्थस्याप्युद्धृतस्याग्नेरुद्वाने संजातं निमित्तमिति कर्तव्येष्टिरिति प्राप्ते ब्रूमः—

उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता ।
न च तस्याग्निना व्याप्तिः कदाचिदपि विद्यते ॥

अग्निसंबन्धस्तावदुद्वानपर्यायस्य विनाशस्यावयवशः सर्वदा विद्यमानो न निमित्तं भवति । न च विनाशस्य चिन्तितनिमिषितादिषु सर्वदा विद्यमानस्याग्निना वा व्याप्तिः संभवति यो निमित्तं स्यात् । उद्वानपरीतस्य त्वग्नेर्निमित्तता युक्ता। कादाचित्की हि तेनाग्नेर्व्याप्तिर्नतु सदातनी । यद्यप्यग्नेरप्युद्वानसंबन्धो नित्यस्तथाऽपि व्याप्तिरनित्या तेनाग्निरेवात्रोद्वानव्याप्तो निमित्तम् । तस्योद्वानपरीतस्य कार्यायोग्यस्योत्पत्त्यर्थेयमिष्टिरग्निहोत्राङ्गमग्निहोत्रार्थस्य चाग्नेरुद्धृतस्योत्पादनं कुर्वती अग्निहोत्राङ्गं स्यान्नान्यार्थस्य । तस्माद्दर्शार्थेनाग्नावुद्धृत उद्वाने नैतत्प्रायश्चित्तम् ।

सूत्रार्थः—प्रसङ्गादग्निहोत्रोपकारके दार्शिके प्रायश्चित्तं न विद्यते परार्थत्वात् । अग्निहोत्रार्थ एव प्रायश्चित्तं यस्माद्विधीयत इति ।

**धारणे च परार्थत्वात् ( जै० त० ९ । ४ । २९ ) ।**
**क्रियार्थत्वादितरेषु कर्म स्यात् ( जै० त० ९ । ४ । ३० ) ।**

**दीपिका**—इदमाम्नायते—

'धार्यो गतश्रिय आहवनीयः'।

इति । तत्र यदा ध्रियमाणोऽग्निहोत्रकाल उद्वाति तदा किमिष्टिः कार्या नेति संदेहे—

**अग्निहोत्रार्थ उद्धृते प्रायश्चित्तमिदं श्रुतम् ।**
**धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्यते ह्यसौ ॥**

सर्वकर्मणां धार्यमाणोऽग्निः प्रत्येकमङ्गमतोऽग्निहोत्रार्थताऽप्यस्तीति तदुद्धाने कर्तव्येष्टिः । नैवम्—

**अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते ।**
**धारणस्य निमित्तं तन्नोद्धारस्याश्रुतत्वतः ॥**

न हि गतश्रीत्वेन पुरुषस्याग्न्युद्धरणं श्रुतं येनोद्धरणमुद्धृतो वाऽग्निः सर्वार्थः स्यात्, किंतु धारणमात्रम् । तेन यदा यत्किंचित्कर्मविशेषमधिकृत्याग्निमुद्धरति तदा तस्य धारणमात्रं गतश्रीत्वेन करोति । यस्मिंश्च कर्मण्युपसंप्राप्तेरग्निरुद्धृतस्तदर्थमेवोद्धरणमुद्धृतश्चाग्निस्तदर्थ एव । निमित्तवशाद्धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोतीति न तदुद्धाने प्रायश्चित्तम् ।

सूत्रार्थः—धारणविषयेऽपि न प्रायश्चित्तमुद्धरणस्य परार्थत्वादिति ।

द्वितीयसूत्रार्थः—नन्वियमिष्टिरग्नावेवादृष्टविशेषं जनयेदग्नेः संस्कारः । एवं सत्यग्निहोत्रार्थेऽनुद्धृतेऽप्यग्नौ पर्युक्षणपरिसमूहनादिरूपसंस्कारस्तथाऽयमपि स्यादेवेत्यत आह—क्रियेति । इतरेषु पर्युक्षणादिषु क्रियार्थत्वात्क्रियानिमित्तोऽग्निसंस्कारस्तदर्थत्वात्कर्मानुष्ठानं स्यात् । अयं भावः—पर्युक्षणादिकर्माणां नित्यवच्छ्रुतत्वेनानित्यमनुष्ठानं युक्तम् अस्य तूपरागे निमित्ते स्नानेनाऽऽत्मसंस्कारवन्नैमित्तिकत्वेन निमित्ताभावेऽनुष्ठातुमशक्यत्वादिति ।

अग्निहोत्रस्थाल्यादिमृन्मयं भिन्नं चेद्भूमिर्भूमिमित्येतेन मन्त्रेणापोऽभ्यवहरेदित्यत्र मीमांस्यते । तदिदं दर्शपूर्णमासन्यायं प्रदर्श्य मीमांसामहे—

**अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ( जै० त० ६ । ४ । १० ) ।**

**दीपिका**—दर्शपूर्णमासयोः कपालमधिकृत्य श्रूयते—"भिन्ने जुहोति" इति । तत्र संशयः—किं कृत्स्नभेदो निमित्तमुतैकदेशभेद उतोभयमिति ।

**" तत्रैकदेशभेदस्य नित्यत्वान्न निमित्तता ।**
**कादाचित्कस्तु कृत्स्नस्य भेदो गच्छेन्निमित्तताम् " ॥**

भिदुराणां हि द्रव्याणां मिथः संघर्षेण नित्यः केनाप्यंशेन भेद इति न निमित्तत्वं संभवति । अतः कृत्स्नभेद एव निमित्तम् । नैवम् । न हि संघर्षणमात्राद्भिन्नबुद्धिर्भवति, संघृष्टमिति हि तदा बुद्धिर्भवति न भिन्नमिति । भेदनं चेह निमित्तं तच्चैकदेशेऽप्यनित्यत्वान्निमित्तं भवत्येव ।

द्वितीयपक्षवादी तु मन्यते—

" होमोऽयं भिन्नसंस्कारो भेददोषनिबर्हणात् ।
संनिपत्योपकारित्वं तथा सति हि लभ्यते ॥
आरादुपक्रियातश्च न्याय्या स्यात्संनिपातिता ।
संनिपातित्वपक्षे तु वाक्यं स्याद्विनियोजकम् ॥
आरादुपक्रियात्वे तु प्रक्रिया विनियोजिका ।
कार्यक्षमश्च संस्कार्यः कृत्स्नभिन्नं न तत्क्षमम् " ॥

न हि सर्वथा भिन्नं कपालम् [ अग्निहोत्रस्थाली वा ] अधिश्रयणयोग्यम् । [ ग्या ] भवति । अकार्योपयोगिनश्चानर्थकः संस्कारः । तस्मात्तत्कार्याविरोधेन यदा कियताऽप्यंशेन भेदो भवति तदैव होम इति प्राप्ते ब्रूमः—

" संस्कारत्वे भवेदेवं न त्वियं भिन्नसंस्क्रिया ।
संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते ॥
निमित्ताभावतो होमो नित्यमङ्गं क्रतोर्भवेत् ।
नित्यश्चानित्यसंस्कार्यसंबन्धं लभते कथम् " ॥

यदा हि भिन्नं संस्कार्यत्वेनोद्दिश्य तत्संस्कारार्थत्वेन होमो विधीयते तदा भिन्नशब्दस्य संस्कार्यप्रतिपादनोपक्षयान्न निमित्तपरत्वं स्यात् । असति च निमित्ते होमोऽयं नित्याङ्गं स्यात्तदेवमापद्यते—नित्यं दर्शपूर्णमासयोर्होमेनोपकुर्याद्भिन्नकपालसंस्कारद्वारेणेति । न चैतत्संभवति । भिन्नस्य कादाचित्कत्वेन नित्यवत्क्रतावभावात् । सोऽयं नित्यानित्यसंयोगविरोधः । तस्माद्भेदने निमित्ते होमो विधीयते । स चाविशेषादेकदेशभेदे कृत्स्नभेदेऽपि स्यात् ।

सूत्रार्थस्तु—एकदेशेऽपि भिन्ने प्रायश्चित्तं स्यादर्थस्य भेदनस्य तत्रापि समवायादिति ।

**प्रायश्चित्तविधानाच्च । ( जै० त० ६ । ३ । ७ । )**

**सुबोधिनी**—नित्ये किंचिदङ्गलोपेऽप्यनुज्ञासूचकमन्यदप्याह—प्रायश्चित्तेति । यस्याग्निमनुद्धृतं सूर्योऽभ्युदेति चतुर्गृहीतमाज्यं पुरस्ताद्धरेदित्यादिभिः प्रायश्चित्तश्रवणादङ्गलोपेऽप्यनुष्ठेयमिति ज्ञापयतीति ।

**विध्यपराधे च दर्शनात्समाप्तेः । ( जै० त० ६ । ३ । ६ । )**

**सुबोधिनी**—विध्यपराधे इति । विध्यपराधेऽप्यङ्गानुष्ठानासंभवेऽपि समाप्तेर्दर्शना-

त्समापनस्य श्रुतत्वात्तदेव यादृक्कीदृक् च होतव्यमित्यच्छिद्रकाण्डे दर्शनाद्यादृक्कीदृग्यथाकथंचिदङ्गहीनमपि प्रधानमनुष्ठेयमिति ।

वाक्यार्थः—विध्यपराधेऽपि समाप्तेर्दर्शनात् । चकारोऽप्यर्थकः ।

इदानीमग्निहोत्रोद्धरणमन्त्रः सर्वार्थोऽप्यास्ति न वेति विचार्यते—

**न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् । ( जै० त० ९ । ४ । ३१ । )**

**दीपिका**—दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रो वाचा त्वा होत्रेत्यादिः प्रयोक्तव्यो नेति संशयः । तत्र—

**दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्तते ।**
**साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥**

तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधिपयसोः प्रणीताधर्म इव कर्तव्य एव मन्त्रः । कालमनादृत्य कालस्य गुणत्वेनासंभवेऽपि मन्त्रस्य लोपोऽन्याय्यः । अथत्रोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणमन्यथाऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्तेऽभिधीयते—

**काले खल्वनुपादेये प्राप्ते कर्म विधीयते ।**
**साङ्गं तस्मात्तु कालात्प्राङ्नाधिकारोऽस्ति कर्मणि ॥**

अनधिकारिणा च क्रियमाणं निष्फलं स्यात्तस्मान्नाप्राप्ते कालेऽग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा कर्तव्यः ।

**पुनराधेयमोदनवत् । द्रव्योत्पत्तेर्वोभयोः स्यात् । ( जै० त० ६ । ४ । २६–२७ । )**

**दीपिका**—" यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः " इति किमुभयानुगमो निमित्तमुतान्यतरानुगमोऽपीति । समस्तपञ्चशरावन्यायेनान्यतरानुगममात्रं निमित्तमिति प्राप्त उच्यते—

**सत्यं निमित्तवेलायामुभावित्यविवक्षितम् ।**
**नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम् ॥**

पुनराधेयं हि वाक्यान्तरेण यादृशमवगतं तादृशमेव गार्हपत्याहवनीययोरुदयाभिनिम्लोचनवेलायामनुगतयोरुत्पादकत्वेन चोद्यते, तच्च सहितयोरेव तयोरुत्पादकमवगतं नान्यतरस्य । अतस्तादृशमेवान्न विधीयमानमन्यतरानुगमे कार्यं कर्तुं न क्षममित्युभयानुगमे स्यात् ।

सिद्धान्तभूतद्वितीयसूत्रार्थः—प्रथमसूत्रैणैन्द्रपञ्चशरावौदनदृष्टान्तेनान्यतरवह्नेरनुगमननिमित्तेऽपि पुनराधेयमुक्तं तत्र सिद्धान्तमाह- द्रव्योत्पत्तेरिति। उभयोरनुगमे पुनराधानं स्यात्। द्रव्योत्पत्तेरग्निरूपद्रव्योत्पत्तेः। आधानकार्यत्वादिति पूरणीयम्। पुनराधेयमित्यनेन वसन्ते ब्राह्मणोऽग्निमादधीतेत्यनेन विहिताधानादन्यद्विधीयते मासाग्निहोत्रवत्। प्रकृताधानेऽग्निद्वयोत्पादकत्वमाधानस्य क्लृप्तम्। एकाग्निनाशे तदुत्पादकत्वस्याक्लृप्तत्वादत्राग्निद्वयनाशो निमित्तमिति वक्तव्यमिति भावः।

## इति प्रायश्चित्तमीमांसा।

**विशये प्रायदर्शनात्। अर्थवादोपपत्तेश्च।( जै० त० २। ३। १६। १७)**

**दीपिका**—अग्निहोत्रदोहाधिकारे 'वत्समालभेत' इति श्रुतं तत्रासत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसामान्यादत्रापि यागविधिं मन्यन्ते। तस्योत्तरम्—आलम्भो नाम स्पर्शमात्रं न तस्य यागमन्तरेणानुपपत्तिः। लोकेऽपि च दृष्टत्वादनोऽत्राऽऽलम्भमात्रं वत्ससंस्कारो विधीयत इति।

## पुनराधेयमीमांसाविशेषः।

पुनराधानेऽग्न्याधानदक्षिणाना दानं कैश्चित्प्रयोगशास्त्रकारैः सूत्रितं तत्र मीमांसैवम्—

**दीपिका**—अस्ति पुनराधेयं तच्चाग्न्याधेयधर्मकं नैमित्तिकं वा। तत्र श्रूयते—"पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः" इत्यादि। सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणानामेका देयेत्येवमादीनां निवर्तिका न वेति चिन्तायां सत्यप्येककार्यत्वे वचनादुभयोर्ददातीति समुच्चयप्राप्तावुच्यते—विध्यश्रवणाद्विध्यन्तरशेषत्वाच्चास्य समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चाऽऽनत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकृतीभिः प्राकृतीनां बाधः। कथं पुनरुभयोर्ददातीति निर्देशः—उच्यते कृत्वा ह्यग्न्याधेयं पश्चात्पुनराधेयं क्रियते। तेन पूर्वदत्तसंप्रतिदीयमानापेक्षयोभयदाननिर्देशः

सूत्रं तदर्थश्च—

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात्।** ( जै० त० १०। ३। ३०)।

**सुबोधिनी**—'योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्ते' इत्यग्न्याधेयविकृतिराम्नाता। तत्र वैकृतदक्षिणा पुनर्निष्कृतो रथो दक्षिणेत्यादिः श्रुता। आधानान्मिथुनौ गावौ ददातीत्यादि प्राप्तम्। अत्र समुच्चयो बाधो वेति संशये पूर्वपक्षमाह—अग्न्याधेयेति। नैमित्तिके पुनराधेये गुणस्य दक्षिणायाः पुनर्निष्कृतो रथो दक्षि-

त्येनेन विकारे प्राप्तेऽप्यग्न्याधेयस्य दक्षिणादानमधिकं समुच्चितं स्यात् । वाक्यसंयोगात् । तत्राप्युभयीर्ददात्याग्न्याधेयिकीः पुनराधेयिकीश्चेतिवाक्येन संयोगात् ।

**शिष्टत्वाच्चेतरासां यथास्थानम् ।** ( जै० त० १० । ३ । ३१ । )

**सुबोधिनी**—साधकान्तरमाह—शिष्टत्वादिति । यथास्थानं यथाक्रममितरासां प्राकृतदक्षिणानां शिष्टत्वात् । अनुशासनात् । अनुशासनं चैवं श्रूयते—'आग्न्याधेयिकीर्दत्त्वा पुनराधेयिकीर्ददाति ' इति ।

सिद्धान्तमाह—

**विकारस्त्वप्रकरणे हि काम्यानि ।** ( जै० त० १० । ३ । ३२ । )

**सुबोधिनी**—विकार इति । हि यस्मात्कारणात्काम्यानि पुनराधेयानि । प्रयोगबहुत्वाभिप्रायं बहुवचनमतोऽप्रकरणेऽप्रकृतौ विहितदक्षिणयेति शेषः । विकारो बाधः प्राकृतस्य ।

**शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ।** ( जै० त० १० । ३ । ३३ । )

**सुबोधिनी**— पूर्वपक्षिणा दर्शितवाक्यसंगतिमाह—शङ्कत इति । पूर्वोक्तवाक्य उभयत्वं श्रूयते तत्त्वार्थपरं नेति पूरणीयम् । कुतः—हि यस्माच्छङ्कते निवृत्तेः प्राकृतदक्षिणाविषये शङ्कते । पूर्ववाक्यसमीप एव यद्वैकृतीर्ददाति दक्षिणा उभयीरपि दाक्षणास्तेन प्रत्ता भवन्तीति श्रूयते । अत्र प्रत्ता भवन्तीति शब्देन प्राकृतदक्षिणालोपाद्वयङ्गत्वशङ्कायाः समाधानं कृतम् । अतः पूर्ववाक्यं जर्तिलयवाग्वा जुहुयादितिवत्पूर्वपक्षपरमिति भावः ।

इत्यग्निहोत्रचन्द्रिका ॥

